**Rashtriya Sanskrit Sansthan**

*( Under the auspices of the Ministry of Education and Culture, Govt. of India )*

**Delhi**

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*General Editor*
**Dr. G. C. Tripathi**

No. 12

# BAUDHĀYANA-ŚRAUTA-SŪTRAM

## ( NEW-AND FULLMOON SACRIFICES )

**Critically Edited for the first time**
**with the**
**Commentary of Sāyaṇa**

*by*

Dr. ROOP NARAIN PANDEY

*Seen through press by*

Dr. B. M. AWASTHI

ALLAHABAD
1982

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
दिल्ली

—•—

गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

द्वादशं प्रसूनम्

# बौधायनश्रौतसूत्रम्

( दर्शपूर्णमासभागात्मकम् )

*सायणकृतभाष्योपेतम्*

बहुहस्तलेखादिकं समीक्ष्य पाठसमालोचनात्मकदृष्ट्या संपादितम्

—•—

सम्पादकः
डॉ० रूपनारायण पाण्डेय

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः–२११००२
१९८२

# बौधायनश्रौतसूत्रम्

## ( दर्शपूर्णमासभागात्मकम् )

### सायणकृतभाष्योपेतम्

बहुहस्तलेखादिकं समीक्ष्य पाठसमालोचनात्मकदृष्ट्या संपादितम्

सम्पादकः

डॉ० रूपनारायणपाण्डेयः

पुनरीक्षकः

डा० ब्रह्ममित्र अवस्थी

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९८२

# FOREWORD

Of all the extant Śrautasūras, the Baudhāyana-Śrautasūtra belonging to the Taittirīya school of the Black Yajurveda is probably the oldest and the most important one. The first critical edition of this exrensive Sūtra, prepared by Prof. Caland in the beginning of this century and published by the Asiatic Society of Calcutta (in three volumes, 1904-1913, reprint Delhi 1982) runs into 1200 pages in print. Prof. Caland also contributed a scholarly introduction to this work entitled *Ueber das rituelle sūtra des Baudhāyana* which was published by the German Oriental Society (DMG), Leipzig In 1903 and has remained authoritative till today.

At least 8 Bhāṣyas are known to have been written on the Baudhāyana-Śrautasūtra. Some of them are even available in more than one copies in various Manuscripts Libraries of the country. It is, however, surprising that none of these Bhāṣyas has ever been printed though it is a great desideratum and would have facilitated the understanding of the Vedic Ritual to a great extent. The oldest of these Bhāṣyas is the *Vivaraṇa* of Bhava-svāmin composed in the 8th century A. D. and now available for the Praśnas 1-26 only. It is a very short commentary and seeks to explain only those words and rites wich in the opinion of the author are obscure. This shows, on the other hand, that the tradition of the performance of Śrauta ritual was alive in those days. Bhavasvāmin has been respectfully quoted by our Bhāṣyakāra Sāyaṇa ; other *Bhāṣyas* mentioned by Sāyaṇa are those of Gopāla, Dāmodara and Keśava.

The commentator Sāyaṇa who has composed the present Bhāṣya on the first Praśna of Baudhāyana-Śrautasūtra is not identical with the famous Sāyaṇācārya of the 14th century patronised by King Bukka of Vijayanagara. He was in fact the grand-son of the famous Sāyaṇācārya

and a son of Shri Śiṅgaṇacārya. He takes pride in mentioning that he was "annointed (i.e. appointed) on the post of Sāyaṇa" :

यः सायणाचार्यपदाभिषिक्तः श्रीशिंगणाचार्यसुताग्रगण्यः ।

The editor rightly points out that in some parts of our country the grand-son bears the name of his grand father. This Sāyaṇācarya-II seems to have flourished in the early part of the 15th century.

The Bhāṣya of Sāyaṇa-II is available only for the Praśna-I of the Baudhāyana-Śrautasūtra. This portion contains a description of the new-and full-moon sacrifices in the Śrauta Ritual. The Ritual of the new and full-moon sacrifices is considered to be the Prakṛti (model) Yāga for all other Śrauta sacrifices. The procedure (Tantra) laid down for the performance the दर्शपूर्णमासेष्टि is more or less followed in the performance of other Iṣṭis as well, The Ritual was first described in detail and analysed by Prof. A. Hillebrandt in his famous work *Das altindische Neu-and Vollmond-Ritual* (Jena 1880) and since than it has been a subject of many a scholarly treatise.

I earnestly hope that the present Bhāṣya written by the grand-son of the greatest of our vedic bhāṣyakāras on a sūtra which contains the most extensive and detailed description of *darśapūrṇamāsa* shall go a long way in understanding its various rites properly and minutely.

The present text of the work has been critically edited on the basis of six manuscripts : two belonging to Bhārata Itihāsa Saṃsodhana Maṇḍal, Poona; one to Bhandarkar Oriental Research Institute, Poona; one to Asiatic Society, Calcutta; one to Saraswati Bhawan Library, Varanasi and one to G. N. Jha Kendriya Sanskrit Vidyapeetha. The three Poona manuscripts as well as the one procured from Calcutta are closely related to each other. The manuscript at our Vidyapeetha forms a common group with the manuscript preserved at Varanasi as is evident from the common lacunas. On closer examination, all of them seem to

go back to one single archetype which was defective at two places. I am very thankful to all the above mentioned institutions which very kindly co-operated with us in bringing this important work to light.

The work was originally submitted as a Ph. D. (Vidyāvāridhi) thesis to the Rashtriya Sanskrit Sansthan, Delhi. In the absence of the author, who is presently posted at Nainital, the work has been seen through press by Dr. Brahma Mitra Awasthi. I crave the indulgence of the readers for the few printing mistakes which have crept into this valuable Vedic text and hope that its publication shall be welcomed by the scholars interested in Vedic Rituals.

**G. C. Tripathi**
*Principal*

G. N. Jha Kendriya Sanskrit Vidyapeetha,
Motilal Nehru Park,
ALLAHABAD
September 13th, 1982

# कृतज्ञताप्रदर्शनम्

वेदो ह्यस्माकं शेवधिः। तत्रभवतः सुमहनीयकीर्तेः सायणाचार्यस्य विश्वविश्रुतानि वेदभाष्याणि विदुषां वेदार्थपरम्पराप्रदर्शकानि विलसन्तितमाम्। वेदविहितयागप्रतिपादकेषु श्रौतसूत्रेषु प्राचीनतमस्य बौधायनश्रौतसूत्रस्य किमपि व्याख्यानमद्यापि प्राकाश्यमुपनीतं नोपलभ्यते। दिष्ट्या, तस्यैव श्रौतयागविधानशास्त्रस्य बौधायनश्रौतसूत्रस्य दर्शपूर्णमासभागस्य आदिसायणाचार्यपौत्रेण 'सायणा'भिधेन श्रीशिंगणाचार्यसुतेन प्रणीतस्य भाष्यस्य प्रथममेतत्सम्पादनं सप्रश्रयं प्रस्तोतुर्मम मानसममन्दमानन्दमनुभवति।

अस्य भाष्यस्य पाठपरिशोधनार्थं स्वस्वसंस्थातो लिखितपुस्तकानि सहर्षं सम्प्रेष्य यैर्यैरधिकृतमहाभागैर्मम साहाय्यं संसाधितं तांस्तान् सज्जनान् प्रतिससाधुवादं कृतज्ञताभावं प्रकटयामि। एतद्भाष्यस्य सम्पादने प्रास्ताविकस्य लेखने येषां येषां ग्रन्थकाराणां ग्रन्था विनियुक्तास्तेषां तेषामधमर्णत्वमङ्गीकरोमि। अमीषां समेषां विदुषामनल्पानुपकारभरानुद्वहामि सामोदम्।

एतस्य नितरां नीरसस्य भाष्यस्य सुसम्पादने विद्याव्यासक्तानां सततं सुरभारतीसमाराधनतत्पराणां गुरुदेवानां डा० अवस्थिमहाभागानां स्निग्धतरं सुमार्गदर्शनं सुतनिर्विशेषभावेन समवाप्तं मया। तेभ्यः किमप्युपहर्तुमक्षमस्तेषां चरणाम्बुजयोः सर्वथा संशुद्धां हार्दिकीं श्रद्धां सविनयं समर्पयामि। एतादृग्दुरूहकार्यसंपादने येषामन्येषां विद्यापीठीयगुरुवर्याणामधिकारिणां च सततं साहाय्यं मया समासादितं तेषु विशिष्टतया नामोल्लेखमर्हन्ति श्रीमन्तः **डा० मुरलीधर पाण्डेयाः, डा० किशोरनाथ झा, डा० गोपराजुरामाः, डा० अनन्तत्र्यम्बकपिंगले, डा० ब्रह्मदत्त शर्माणः, श्री जीवेश्वर झा** महाभागाश्च। सर्वानेतान् महानुभावान् प्रति सविनयं कृतज्ञतां प्रकटीकरोमि।

अस्य भाष्यस्य केषाञ्चिद्दुरूहस्थलानामवबोधे समीचीनस्य पाठस्य च निर्धारणे प्रदर्शितसमुचितपथम्, अस्य ग्रन्थस्य प्रकाशने च निमित्तभूतं विद्याविनयौदार्यैकविग्रहं गङ्गानाथ झा केन्द्रीयसंस्कृतविद्यापीठस्य प्राचार्यवर्यं **डा० गयाचरणत्रिपाठिमहाभागं** प्रति सविशेषं कार्तज्ञ्यमावेदयामि येषामानुग्रहेण ग्रन्थोऽयमाशु प्राकाश्यं नीतः। अस्य ग्रन्थस्य मुद्रणे अलङ्करणे च कृतश्रमाय **श्री उपेन्द्रनाथत्रिपाठिमहाभागाय** भूरिधन्यवादान् समर्पयामि।

अर्थकामौ विना न कोऽपि जीवति। तयोरुत्सभूता मम जीवितसर्वस्वा ज्येष्ठपितरः, पूज्यौ पितरौ, भ्रातृवत्सला भ्रातृवर्याः, अन्ये च मम हितचिन्तकाः सुहृदः। अमीषां समेषामृणभरान् ऊरीकरोमि शिरसा सानुनयम्।

सार्धद्वयवर्षपर्यन्तं छात्रवृत्तिं प्रदाय मामुपकृतवतो राष्ट्रियसंस्कृतसंस्थानस्य वदान्या अधिकारिणोऽपि भृशं धन्यवादान् अर्हन्ति ।

क्षणेऽस्मिन् दिवङ्गतानां ज्येष्ठाम्बानां चरणारविन्दयोश्चित्तमनारतं निवेशयामि यासां सत्प्रेरणया सद्भावेन स्नेहेन शुभाशीर्वचनैश्च प्रक्रान्तं सम्पादनमेतत् साम्प्रतं सम्पूर्णतां याति ।

अनवधानेन प्रमादेन प्रयोगपरम्परानभिज्ञानेन मुद्रणदोषेण चापि यानि स्खलितानि भ्रष्टाः पाठाश्च समापतितानि स्युस्तानि गुणैकपक्षपातिनो विद्वांसः क्षाम्यन्तु, अनुगृह्णन्तु च मां शुभाशीःसम्प्रदानेनेत्यभ्यर्थये ।

विनयावनतः

*रूपनारायणपाण्डेयः*

मनी का पूरा (चाँदपुर)

सोरामः, प्रयागः ।

२०३५, गुरुपूर्णिमा, गुरुवारः

इषुरामनभोनेत्रे वैक्रमे गुरुपर्वणि ।
इष्टदेवप्रसादेन भाष्यं सम्पूर्णतामगात् ।।

# विषयानुक्रमणिका

विषयः | पृष्ठाङ्कः

## प्रास्ताविकम्


१—ग्रन्थस्य महत्त्वम्

(क) यज्ञपरम्परा १
(ख) श्रौतसूत्राणि ३

ऋग्वेदीयानि श्रौतसूत्राणि ५
(१) आश्वलायनश्रौतसूत्रम् ५
(२) शांखायनश्रौतसूत्रम् ६
(३) कौषीतकिश्रौतसूत्रम् ६

यजुर्वेदीयानि श्रौतसूत्राणि ७
(१) कात्यायनश्रौतसूत्रम् ७
(२) बौधायनश्रौतसूत्रम् ८
(३) भारद्वाजश्रौतसूत्रम् ६
(४) आपस्तम्बश्रौतसूत्रम् ६
(५) सत्याषाढश्रौतसूत्रम् ११
(६) वैखानसश्रौतसूत्रम् १२
(७) वाधूलश्रौतसूत्रम् १३
(८) मानवश्रौतसूत्रम् १३
(९) वाराहश्रौतसूत्रम् १४
(१०) काठकश्रौतसूत्रम् १५

सामवेदीयानि श्रौतसूत्राणि १५
(१) मशकसूत्रम् १५
(२) लाट्यायन सूत्रम् १५
(३) द्राह्यायण सूत्रम् १६
(४) जैमिनीयसूत्रम् १६

विषयः | पृष्ठाङ्कः

अथर्ववेदीयं श्रौतसूत्रम् १७
(१) वैतान सूत्रम् १७
(ग) बौधायनश्रौतसूत्रम् १८
(१) प्राचीनता १८
(२) कालः १९
(३) विषयाः २०
(४) द्वैधसूत्रम् २०
(५) कर्मान्तसूत्र् २१
(घ) बौधायनश्रौतसूत्रस्य भाष्यकाराः २१
(ङ) सायणाचार्यः २४
(च) सायणाचार्यस्य देशः कालश्च २६
(छ) प्रकृतग्रन्थस्य रचयिता २६
(ज) भाष्यस्य रचनाशैली वैशिष्ट्यं च २८

२—*दर्शपूर्णमासयज्ञः* २९
(क) यज्ञस्य प्रकाराः २९
(ख) हविर्यागेषु दर्शपूर्णमासयज्ञस्य महत्त्वम् ३१
(ग) दर्शपूर्णमासयज्ञस्य संक्षेपेण विवेचनम् ३१
(१) शब्दार्थः ३१
(२) कालः ३२
(३) द्विविधत्वम् ३२
(४) हवींषि ३३
(५) कृत्यानि ३३

३—*प्रकृतभाष्यस्य पर्यालोचनम्* ३९
४—*लिखितग्रन्थादिसामग्री* ४३

विषयः पृष्ठाङ्कः

### प्रथमोऽध्यायः


१. व्याख्याप्रयोजनम् ४९
२. कल्पावेक्षणम् ५०
३. कर्म त्रिविधम् ५४
४. दर्शपूर्णमासस्य प्राथम्यम् ५५
५. अमावास्यैव प्रागुपदेशः ६५
६. व्रतोपायनीयम् ६१
७ पर्वणि वपनविचारः ६३
८. प्रयोगक्रमः ६५
९. अन्वाधानम् ७०
१०. परिसमूहनम् ७२
११. शाखाहरणम् ७३
१२. वत्सापकरणम् ७५
१३. प्रयोगक्रमः ७७


### द्वितीयोऽध्यायः


१. बर्हिराहरणकाले द्वयम् ७९
२. शुल्बस्य करणम् ८५
३. इध्मसंनहनम् ८९
४. वेदकरणम् ९१
५. पिण्डपितृयज्ञस्य कालः ९३
६. प्रयोगक्रमः ९२
७. पिण्डपितृयज्ञप्रयोगः ९५


### तृतियोऽध्यायः


१. शाखापवित्रकरणम् ९९
२. सायंदोहः १००
३. प्रयोगक्रमः १११

विषयः पृष्ठाङ्कः

४. मन्त्रविनियोगसंग्रहः ११३

## चतुर्थोऽध्यायः

१. परिस्तरणम्, पृष्ठ्यास्तरणम् ११५
२. प्रणीताप्रणयनम् १२०
३. हविर्निर्वापः, दशहोतृव्याख्यानम् १२२
४. उपांशुयागस्य चरुपक्षः १३१
५. मन्त्रविनियोगसंग्रहः १३४

## पंचमोऽध्यायः

१. उत्पवनम् १३६
२. कृष्णाजिनावधूननम् १३९
३. दृषदुपलयोः समाहननम् १४२
४. फलीकरणम् १४४
५ निनयनम् १४६
६. प्रयोगक्रमः १४७

## षष्ठोऽध्यायः

१. कृष्णाजिनावधूननम् १५३
२. पेषणम् १५४
३. पिष्टनिर्वापः १५५
४. प्रयोगक्रमः १५७
५. मन्त्रविनियोगसंग्रहः १५७

## सप्तमोऽध्यायः

१. पुरोडाशश्रपणम् १५९
२. कपालोपधानम् १६०
३. प्रयोगक्रमः १६५

विषयः पृष्ठाङ्कः

## अष्टमोऽध्यायः

१. पिण्टसंवापः १६७
२. आज्यनिर्वापः १७१
३. पुरोडाशश्रपणम् १७२
४. निनयनम् १७५

## नवमोऽध्यायः

१. वेदादानम् १७८
२. स्तम्बयजुर्हरणम् १७९
३. वेदिपरिग्रहः, वेदेरुद्धननम् १८२
४. वेदिस्वरूपम् १८३
५. प्रोक्षण्यासादनम् १८६
६. प्रयोगक्रमः १९०

## दशमोऽध्यायः

१. स्रुवसम्मार्गः १९४
२. पत्नीसंनहनम् १९६
३. पत्न्या अविद्यमानत्वनिमित्तविचारः १९९
४. आज्यावेक्षणम्, आज्योत्पवनम्, आज्यग्रहणम् इत्यादि २०१
५. प्रयोगक्रमः २०७

## एकादशोऽध्यायः

१. इध्माबर्हिषोः प्रोक्षणम् २१०
२. प्रोक्षणीनिनयनम् २११
३. बर्हिरास्तरणम् २१४
४. परिधिपरिधानम् २१४
५. स्रुगासादनम् २१७
६. प्रयोगक्रमः २१८

विषयः पृष्ठाङ्कः

## द्वादशोऽध्यायः

१. ऐन्द्रपुरोडाशस्य नित्यत्वम्, सदनकरणम् २२१
२. अभिधारणम् २२२
३. उद्धासनम् २२४
४. कपालप्रत्यंजनम् २२४
५. कपालनाशे प्रायश्चित्तम् २२६
६. ध्रुवासेचनम् २२८
७. प्रयोगक्रमः २२८

## त्रयोदशोऽध्यायः

१. अध्वर्युरेवान्तरंगः २३१
२. सप्तवाचः स्थानानि २३२
३. पंचदश सामिधेन्यः २३३
४. होतृप्रवरणम् २४१
५. अयाज्ययाजने प्रायश्चित्तविचारः २४४
६. प्रयोगक्रमः २४६

## चतुर्दशोऽध्यायः

१. समिद्होमः २४९
२. अग्निहोमः २५१
३. सोमहोमः २५२
४. हविषामवदानम् २५३
५. प्रजापतिहोम २५४
६. पार्वणहोमः २५५
७. अवदेयद्रव्यपरिमाणम् २५७
८. स्विष्टकृद्-होमः २५८
९. संस्रावहोमः २५९

| विषयः | पृष्ठाङ्कः |
|---|---|
| १०. स्रुचम सम्मार्जनम् | २६० |
| ११. प्रयोगक्रमः | २६२ |
| **पंचदशोऽध्यायः** | |
| १. यजमानभागावदानम् | २६७ |
| २. अवान्तरेडावदानम् | २७० |
| ३. इडभक्षणम् | २७१ |
| ४. प्राशित्रहरणम्, चतुर्धाकरणञ्च | २७२ |
| ५. अन्वाहार्यस्य याचनम् | २७३ |
| ६. उद्वासनम् | २७८ |
| ७. प्रयोगक्रमः | २७८ |
| **षोडशोऽध्यायः** | |
| १. अनूयाजाः | २८२ |
| २. प्रस्तरस्याञ्जनम् | २८७ |
| ३ प्रस्तरप्रहरणम् | २८६ |
| ४. संवादः | २९० |
| ५. अनुप्रहरणम् | २६२ |
| ६. प्रयोगक्रमः | २६३ |
| **सप्तदशोऽध्यायः** | |
| १. नामविधिः | २६७ |
| २. फलीकरणहोमः | ३०४ |
| ३. योक्त्रविमोकः | ३०५ |
| ४. प्रायश्चित्तहोमः | ३०७ |
| ५. विष्णुक्रमः | ३१० |
| ६. प्रयोगक्रमः | ३११ |
| **परिशिष्टम्** | ३१७ |

●●●

# प्रास्ताविकम्

## १-ग्रन्थस्य महत्त्वम् :—

### (क) यज्ञ परम्परा

वेदप्रभवा[1] हि भारतीया संस्कृतिः तत्परम्पराश्चापि तत एव प्रायशः प्रादुर्भूताः। अनारतमविच्छिन्नायां भारतीयायां परम्परायां स्वाध्यायस्य प्रयोजनं[2] यज्ञानुष्ठाने पर्यवसीयते। अपौरुषेयवादिनां मते तु वेदस्य नित्यत्वे यज्ञस्यापि नित्यत्वम्, वेदप्रतिपाद्यत्वात् यज्ञस्य। पौरुषेयवादिनाम्मतेऽपि यज्ञस्य परम्परातीव प्राचीनतमा। वर्तमानवैदिकसंहितासंकलनात्प्रागपि भारतेऽस्मिन् यज्ञपरम्परा जागर्तिस्म। ऋग्वेदस्य वंश मण्डलेषु पदे पदे सम्प्रयुक्ता यज्ञियशब्दा अत्र प्रमाणत्वेन द्रष्टव्याः। तद्यथा—होत्रम्, पोत्रम्, नेष्ट्रम्, अग्नित्, प्रशास्त्रम्, ब्रह्मा (ऋ० २।१।२), अध्वरेषु, आहुतम्, हविः (ऋ० २।१।१३), घृतम्, हर्व्यम्, स्वाहाकृतम् (ऋ० २।३।११), पोता (ऋ० २।५।२), प्रशास्ता (ऋ० २।५।४), त्रिकद्रुकेषु ( ऋ० २।११।१७,२।१५।१, २।२२।१ ), उद्गाता, साम, ब्रह्मपुत्र (ऋ० २।४२।२), प्रातः सावने, हविः, पुरोडाशम् (ऋ० ३।२८।१). माध्यन्दिने सवने (ऋ० ३।२८।४), तृतीयसवने (ऋ० ३।२८।५), घर्म (ऋ० ३।५३।१४, ५।३०।१५, ५।४३।७) यतस्रुक् (४।१२।१), सोमः, यज्ञः, घृतस्य धाराः (ऋ० ४।५८।८), दर्वी, सर्पिषः, उक्थेषु (ऋ० ५।६।९), अतिरात्रे, सोमे (ऋ० ७।१०३।७)। ऋग्वेदे इमे शब्दा उत्तरवैदिककाले सूत्रकाले वा समावेशिता इति वक्तुं न कथमपि शक्यम्, भार-

---

१. च० वै० सं० पृ० १६३।

२. शा० भा० १।१।१।

तीय विद्याविश्लेषणविचक्षणैः पाश्चात्यविपश्चिद्भिरपि[1] वंशमण्डलानां प्राचीनतमत्वेनांगीकृतत्वात्।

अतः स्पष्टमभिवातुं शक्यते यद् ऋग्वेदसंहितासंकलनकाले तत्पूर्वकालेऽपि सर्वे यज्ञाः सुप्रचलिता[2] आसन्, अन्यथा तत्तदनुष्ठानकर्मणि विशिष्टार्थेषु रूढाः शब्दा ऋषिभिर्मन्त्रेषु कथं प्रयुज्येरन्। प्रायेण लौकिकप्रयोजनमनुदिश्य संकलितेऽथर्वाख्ये ब्रह्मवेदे न केवलं श्रौतयागानामेव, अपि तु गृह्यप्रतिपादितानां गृह्ययागानां पारिभाषिकपदानि समग्रामुत्तरवर्तिनीं पौराणिकीं परम्परां, तान्त्रिकीं चापि सम्पुष्णन्ति। सामाख्ये उद्गातृवेदे कानपि नूतनान् मन्त्रान् परिहाय सर्वे मन्त्रा ऋग्वेदीया एव। यागावसरे देवताप्रसादनाय संप्रगीताः ते साममन्त्रा यागेभ्योऽपृथग्भूता एव यागकर्मणि सुरुचिं सरसतां च संवर्धयन्ति। यजुर्वेदाख्येऽध्वर्युवेदे तत्र यागक्रममनुसृत्य मन्त्राणां संकलनाद् यज्ञानुष्ठानेनापरोक्षस्तस्य सम्बन्धः। यजुर्वेदे यागानुष्ठानक्रमेण मन्त्राणां समाम्नानात् स्पष्टमवगम्यते यत् तस्मिन् युगे तत्र समाम्नातानां यागानामनुष्ठानं भूयो भूयस्तत्तदधिकृतैरनुष्ठीयते। लोके यागानुष्ठानस्य सुदीर्घतरां परम्परां विना कथं खलु सुव्यवस्थितेन यज्ञक्रमेण यजुषां समाम्नानं भवितुं शक्येत। यागकर्मणि संहितामन्त्राणां विनियोजकाः प्राधान्येन तद्व्याख्यानभूता ब्राह्मणग्रन्था यज्ञपरम्पराया अक्षय्या वटवृक्षा यतः तच्छाखोपशाखाभिः समुपबृंहिता यागा असंख्याता सन्तः 'अनन्ता वै वेदाः[3] इत्युक्तिं समर्थयन्ति।

ब्राह्मणकाले कदाचनासुरराक्षसैर्विहता अपि सुसमृद्धा यागा[4] एकविंशतिधा आसन्निति गोपथब्राह्मणेन[5] विज्ञायते—'सप्त सुत्याः सप्त पाकयज्ञा हविर्यज्ञाश्च सप्त तथैकविंशतिः। सर्वे ते यज्ञा अंगिरसोऽपियन्ति नूतना यामृषयः सृजन्ति

---

१. मै० ए० लि०, पृ० २४७-४८। वि० इ० लि० पृ० ५७-५८। मैक्० हि० लि०, पृ० ३९-४४।

२. थि० स० ब्रा०, पृ० २। की० री० फि०, पृ० २५२-५६।

३. तै० ३।१०।११।३।

४. थि० स० ब्रा०, पृ० १६-२८।

५. गो० ब्रा०—पू० ५।२५।

ये च सृष्टाः पुराणैः।' तत्रैव यज्ञक्रमोऽपि श्रूयते—'अथातो यज्ञक्रमाः। अग्न्याधेयमग्न्याधेयात् पूर्णाहुतिः, पूर्णाहुतेरग्निहोत्रमग्निहोत्राद् दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यामाग्रयणम्, आग्रयणाच्चातुर्मास्यानि, चातुर्मास्येभ्यः पशुबन्धः पशुबन्धादग्निष्टोमोऽग्निष्टोमाद् राजसूयो राजसूयाद्वाजपेयः, वाजपेयादश्वमेधः, अश्वमेधात्पुरुषमेधः पुरुषमेधात् सर्वमेधः, सर्वमेधाद्दक्षिणावन्तो दक्षिणावद्भ्यो दक्षिणा अदक्षिणा सहस्रदक्षिणे प्रत्यतिष्ठंस्ते वा एते यज्ञक्रमाः[1]।' ब्राह्मणग्रन्थेषु न केवलमृग्भिः सुशस्तो यजुषा सुपरिष्कृतः साम्ना सुगीतोऽथर्वभिरंगिरोभिश्च सुगुप्तश्चतुष्पाद् यज्ञो विततः, अपि तु तत्र तत्र सुगुप्तानि रहस्यानि नानाप्रतीकैः रूपकैश्च प्रस्फुटीकृतानि[2]। यज्ञा ब्राह्मणेषु पुरुषार्थचतुष्टयस्य साधकाः सन्तोऽपि ते सुचिन्तकानां कृते क्रियामात्रे नावतिष्ठन्ते, परं तेषु सर्वा भारतीया विद्याः परम्पराश्च प्रतिष्ठिताः, सर्वाण्याध्यात्मिकानि रहस्यानि, सकलानि तन्त्राणि, निखिला च सृष्टिविद्या[3] सन्निहितानि।

## (ख) श्रौतसूत्राणि

ब्राह्मणग्रन्थानां बहुविततत्वाद् यज्ञा यदाल्पमतीनां जनानां कृते सुकरा नाभूवन् तदा साक्षात्कृतधर्मभिर्ऋषिभिर्लोकहितकांक्षया यागाः संक्षिप्य प्रतिशाखं कल्पसूत्रेषु निबद्धाः। अतिगम्भीरत्वाद् दुर्बोधानां वैदिकानां शब्दानामवगमनाय 'कल्पो व्याकरणं शिक्षा ज्योतिषं निरुक्तं छन्दोविचितिः' इति षड् वेदांगानि[4] प्रवर्तितानि। तत्र कल्पते इति कल्पशब्दः[5] प्रयोगवाची। यस्मिन् ग्रन्थे यागादिविषयः कल्प्यन्ते निरूप्यन्ते स कल्प इति परम्परयाभिधीयते। सत्याषाढश्रौतसूत्रस्य वैजयन्तीव्याख्याकारेण कल्पशब्दः 'वेदस्यार्थमभिहितं न्यायैश्च सूचितं शाखान्तरीयैर्ब्राह्मण-

---

१. गो० ब्रा० पू० ५।७।

२. सविस्तरं द्रष्टव्यम्—थि० स० ब्रा० पृ० २३९-२६६। च० वै० स० पृ० ६३-६७।

३. सा० सु० १३।१-४, गिरिधरशर्मा चतुर्वेदः 'वैदिकयज्ञाः' पृ० २३-२६।

४. या० नि० १।६।२०, पृ० ३३।

५. ऋ० प्रा०, विष्णुमित्रकृतावर्गद्वयवृत्तिः, पृ० १३। शा० श्रौ० व० २, पृ० १ 'स च कल्पः परिनिष्पन्नप्रयोगरूपकस्योपदेशको ग्रन्थः।'—वरदसुतआनर्तीयः। वै० भू० पृ० ५०। आप० श्रौ० सू० भूमिका, पृ० ४।

मन्त्रन्यायैः फलकरणेतिकर्त्तव्यतांशत्रयवद्भावनां प्रयोगरूपेण कल्पयति समर्थं प्रयोगयोग्यं प्रतिशाखं करोति स कल्पः' इत्यादिना विशदीकृतः। परम्परया स्वाध्यायैकदेशो मन्त्रब्राह्मणात्मकः शाखेत्युच्यते। वेदांगानि प्रतिशाखं प्रणीतानीति शाखाविद्भिराचार्यैर्मन्यते, किन्तु साम्प्रतं क्वचिद् संहितालोपाद्वा क्वचित् ब्राह्मणानुपलम्भाद्वा क्वचित् सूत्रात्ययाद्वा प्रतिशाखं संहिताब्राह्मणसूत्राणि नैवोपलम्यन्ते—इत्यवलोक्य महादेवेन सम्यक् सुचिन्तितम्—'तत्र कल्पसूत्रं प्रतिशाखं भिन्नमभिन्नमपि क्वचित्। शाखाभेदोऽध्ययनभेदाद्वा सूत्रभेदाद्वा। आश्वलायनीयं कात्यायनीयं च सूत्रं हि भिन्नाध्ययनयोर्द्वयोर्द्वयोः शाखयोरेकैकमेव। तैत्तिरीयके समाम्नाये नानासूत्राणि। तद्भेदादपि शाखाभेदश्चरणव्यूहशास्त्रे दृश्यते। न च सूत्रभेदे शाखाभेदः शाखाभेदे च सूत्रभेद इति परस्पराश्रय इति वाच्यम्, यथाध्ययनभेदाच्छाखाभेदोऽनादिरेवं सूत्रभेदादपि[1] इति। कल्पकारैः स्वशाखाविहर्तैर्विधिभिः साक शाखान्तरगता विधयोऽपि यत्र कुत्र विकल्पिताः[2]।

कल्पसूत्राणि श्रौतगृह्यधर्मशुल्वभेदेन चतुर्धा विभज्यन्ते। तत्र श्रुतिविहिता आहवनीयगार्हपत्यदक्षिणाग्निसम्पादिता यागाः श्रौतसूत्रेषु विवेच्यन्ते। गृह्याग्निप्रतिपादिता यागा गृह्यसूत्रेषु निरूप्यन्ते[3]। धर्मः सदाचारो लोकव्यवहारप्रभृतयश्च विषया धर्मसूत्रेषु निबध्यन्ते। धर्मसूत्राणि 'समयाचारिकसूत्राणीति संज्ञयापि व्यवह्रियन्ते[4]। तान्येव सूत्राण्याचारप्रतिपादकैः सुविस्तीर्णैर्धर्मशास्त्रैरुपजीव्यत्वेन स्वीक्रियन्ते। शुल्वसूत्रेषु च वेदिनिर्माणादयो विधयः प्रतिपाद्यन्ते। ज्यामितिशास्त्रस्य प्रथमारम्भः शुल्वसूत्रेष्वेवाजनि। ज्यामितिशास्त्रस्येतिहासे तानि नोपेक्षितव्यानि[5]।

---

१. स० श्रौ०, पृ० ४।

२. मै० ए० लि०, पृ० ६१।

३. विं० इ० लि०, पृ० २७२-७४, इ० वे० क०, पृ० २। क० हे० इ०, पृ० २४१। हि० सं० लि०, पृ० ३२।

४. मै० ए० लि०, पृ० १०२, १०५।

५. वि० इ० लि०, पृ० २७५। हि० सं० लि०, पृ० ३२।

## ऋग्वेदीयानि श्रौतसूत्राणि

१. **आश्वलायनश्रौतसूत्रम्**—ऋग्वेदस्य शाकलबाष्कल-शाखयोरेकमेव श्रौत्र-सूत्रमुपलभ्यते। तथा हि नारायणगार्ग्यः[1]—'एतस्येति शब्दो निवित्प्रैषपुरोरुक्कुन्ताप-वालखिल्यमहानाम्न्यैतरेयब्राह्मणसहितस्य शाकलस्य बाष्कलस्य चाम्नायद्वयस्य एतदाश्वलायनसूत्रं नाम प्रयोगशास्त्रमित्यध्येतृप्रसिद्धं सम्बन्धविशेषं द्योतयति।' सूत्रमिदं देवस्वामिनारायणगार्ग्यत्र्यम्बकभट्टरुद्रदत्तभट्टलक्ष्मीधरदेवत्रातषड्गुरुशिष्य-महादेवसिद्धान्तिप्रभृतिभिरनेकैर्व्याख्यातमिति हस्तलेखागारसूच्यादिभिः[2] सूच्यते। तत्र गार्ग्यनारायणीया वृत्तिः सिद्धान्तिभाष्यं च प्रकाशिते। नरसिंहस्य सूनुना नारायणगार्ग्येण भगवतो देवस्वामिनः विस्तीर्णं सदप्यनाकुलं भाष्यं सादरं संस्मृतम्[3]।

श्रौतसूत्रेऽस्मिन् द्वादशाध्याया सन्ति, यत्र क्रमेणेमे विषया विवेच्यन्ते—प्रथमेऽध्याये परिभाषा, दर्शपूर्णमासेष्टिश्च। द्वितीये-अग्न्याधेयम्, अग्निहोत्रहोमः, उपस्थानम्, पिण्डपितृयज्ञः, अन्वारम्भणीया, आग्रयणम्, काम्या इष्टयः, वैमृधेष्टिः, लोकेष्टिः, मित्रविन्दा, पवित्रेष्टिः, कारीरीष्टिः, वैश्वानरीष्टिः, इष्टचयनम्, सांवत्सरिकाणि, तुरायणम्, दाक्षायणयज्ञः, याज्यापुरोऽनुवाक्यालक्षणम्, चातुर्मास्यानि च। तृतीये पशुः, पशुयाज्यापुरोऽनुवाक्याः, निरूढपशुः, सौत्रामणी, प्रायश्चित्तानि। चतुर्थपंचमयोरग्निष्टोमः। षष्ठे-उक्थ्यः, षोडशी, अतिरात्रस्य नैमित्तिकम्, सोम-प्रायश्चित्तानि, दीक्षितमरणप्रायश्चित्तादि, सोमयागशेषः, अनूबन्ध्या, अवभृथः, उदयनीयादि। सप्तमे सत्रधर्माः, न्यूङ्खादि च। अष्टमे सत्राणि प्रतिगरादि, पृष्ठ्यादिः। नवमे राजसूयः, एकाहाः, वाजपेयाः। दशमे-अहीनानि, द्वादशाहः, अहीनसत्रयोः समानधर्माः, अश्वमेधः। एकादशे-रात्रिसत्राणि, गवामयनम्। द्वादशे-आदित्यानामयनम्, अंगिरसामयनम्, कुण्डपायिनामयनम्, तापश्चितामयनम्, प्रजा-

---

१. आ० श्रौ० गा० १।१।१।

२. न्यू० कै० कै० II, पृ० २३२-२३६। गै० सं० इ०, पृ० १७३-१७४।

३. आ० श्रौ० गा०. पृ० १ 'आश्वलायनसूत्रस्य भाष्यं भगवता कृतम्। देवस्वामिसमाख्येन विस्तीर्णं सदनाकुलम्।'

पतेर्द्वादशवत्सरम्, सारस्वतसत्राणि, मित्रावरुणयोरयनम्, सत्रोत्थानम्, सवनीयपशवः, सत्रिधर्माः, व्रत्यानि सवनीयपशुविभागः ऋत्विजां प्रवराः, सत्राणि, पृष्ठ्यशमनीयश्चेति ।

२. शांखायनश्रौतसूत्रम्—शांखायनी शाखोत्तरे गुर्जरे प्रसृतासीत्[1] । परिशिष्टादिसमन्वितमानर्तीयभाष्योपेतं शांखायनश्रौतसूत्रं कलिकतायाः प्रकाशितम् । भाष्यमिदं दासशर्मणा संशोधितमितिभाष्यस्य नवमदशमाध्याययोरादौ स्थितेन श्लोकेनानेन पुच्यते—

'भाष्यकारगिरां यत्र विनष्टं लेखनादिना ।
अक्षरं तद्दासशर्मा मुंजसूनुरकल्पयत् ॥'

अस्य भाष्यकारेषु ब्रह्मदत्तनारायणश्रीपतिसुतविष्णुगोविन्दादीनामपि नामानि गण्यन्ते[2] । अष्टादशाध्यायेषु विभक्ते श्रौतसूत्रेऽस्मिन् क्रमेण परिभाषा, दर्शपूर्णमासौ, अग्न्याधेयादि, वैमृधेष्ट्यादि, अग्निष्टोमः, चयनम्, द्वादशाहः, चतुर्विंशाद्यहीनानां होत्रम्, पाशुकं सौमिकप्रायश्चित्तं गवामयनादि, एकाहा, पाशुकचातुर्मास्यानि, सौत्रामणी, वाजपेयः, राजसूयः अश्वमेधः, महाव्रतम्, गवामयनादि च निरूप्यन्ते ।

श्रौतसूत्रमिदं बाहुल्येन कौषीतकिब्राह्मणमनुगच्छति[3] । कीथमहोदयेन खल्वाश्वलायनशांखायनश्रौतसूत्रयोः संकलनकालः ख्रिस्ताब्दपूर्वं चतुःशतकं चिन्त्यते[4] ।

३. कौषीतकिश्रौतसूत्रम्—कौषितकिशाखिनां श्रौतसूत्रमिदं प्रकाशितं नावलोक्यते । हस्तलेखेष्वस्य सत्त्वं हस्तलेखसूची ग्रन्थादिभिर्ज्ञायते[5] ।

---

१. शा० श्रौ० व० I भूमिका, पृ० ७ । भ० वै० इ० II, पृ० १३ ।
'उत्तरे गुर्जरे देशे बह्वृचः परिकीर्तिताः ।
कौषीतकिब्राह्मणं च शाखा शांखायनी स्थिता ।'

२. शा० श्रौ० व० III, पृ० १, ३३ ।

३. कै० कै० I, पृ० ६३६ । गै० सं० इ०, पृ० १७४ । गै० वै० सा०, पृ० १४० ।

४. की० ऋ० ब्रा०, पृ० ४४-५० ।

५. न्यू० कै० कै०, पृ० १२० । ब० वै० सा०, पृ० ३१ ।

## यजुर्वेदीयानि श्रौतसूत्राणि

१. कात्यायनश्रौतसूत्रम्—शुक्लयजुर्वेदस्यैकमेव कात्यायनश्रौतसूत्रं समुपलभ्यते[1]। श्रौतसूत्रमिदं बहुभिराचार्यैर्व्याख्यातम्। अनन्तदेवेन स्वग्रन्थस्योपक्रमे—

'मुनिं कात्यायनं कर्कं पितृभूतिं तथादिमान्।
यशोगोपिं भर्तृयज्ञं तथा भाष्यकृतोऽपरान्।
पद्धत्यादिप्रणेतॄंश्च जनकं वेददान् गुरून्[2]।

इत्यादिना प्राचीनानां भाष्यादिप्रणेतॄणां नामान्युल्लिखितानि। साम्प्रतं त्रीण्येव भाष्याणि प्रकाशितानि लोचनगोचरतां यान्ति—(१) उपाध्यायकर्ककृतं कर्कभाष्यम्, (२) याज्ञिकदेवभाष्यम्, (३) महामहोपाध्यायस्य विद्याधरशर्मणः 'सरलावृत्तिः'। अखिलेषु भाष्येषु कर्कभाष्यमेव विपश्चिद्भिर्भाष्यान्तरललामतया लाल्यते शिरसा। इतरेषु भाष्यकारेषु गंगाधरगदाधरभर्तृयज्ञगर्भपद्मनाभभास्करमिश्रदेवभूतिमणिराममहादेवहरिहरवासुदेवश्रीधर-जयरामप्रभृतीनां नामानि गृह्यन्ते[3]।

श्रौत्रसूत्रमिदं प्राधान्येन शाखाद्वयमधिकरोति। शाखाद्वये च यः कर्मणां क्रमोऽङ्गीकृतः, तमेवानुसृत्येदं प्रवर्त्तते। अस्य 'प्रथमेऽध्याये द्वितीयाद्युपरितनेष्वध्यायेषु वक्ष्यमाणानां पदार्थानां सुखावबोधाय पारिभाषिका विषया विचारिताः। द्वितीयतृतीययोर्दर्शपूर्णमासौ सांगौ निरूपितौ। चतुर्थे पिण्डपितृयागो दर्शशेषा वत्सापकरणादयः, विकृतिषु दर्शपूर्णमासयोर्धर्माणामतिदेशः, दाक्षायणयज्ञः, आग्रयणेष्टिः, अन्वारम्भणीयेष्टिः, अग्न्याधानम्, पुनराधेयमग्निहोत्रं चेति निरूपितानि। पंचमे चातुर्मास्यानि मित्रविन्देष्टिश्च। षष्ठे प्रतिवर्षमनुष्ठेयो निरूढपशुः। सप्तमप्रभृत्येकादशपयन्तेषु पंचस्वध्यायेषु सोमयागः। द्वादशे द्वादशाहो द्वादशसुत्याकः सत्रसंज्ञको यागविशेषः। त्रयोदशे गवामयनम्। चतुर्दशे वाजपेयः। पंचदशे राजसूयः। षोडशा-

---

१. अस्य वैजवापश्रौतसूत्रमपि विद्यते—इति वाचस्पतिगैरोलामहोदयः, गै० सं० इ०, पृ० १७५।

२. का० श्रौ०, भूमिका, पृ० १-२।

३. न्यू० कै० कै०, पृ० ३२५-३२८। कै० सं० वे० II, पृ० ७६-२०२। गै० वै० सा०, पृ० १४१-४२।

दिषु त्रिषु महाग्निचयनम् एकोनविंशे सौत्रामणी नाम पशुयागविशेषः। विंशेऽश्वमेधः। एकविंशे पुरुषमेध सर्वमेधपितृमेधाः। एकाहाः द्वाविंशे, त्रयोविंशे त्रिरात्रप्रभृत्येकादशरात्रपर्यन्ता अहीनाः। चतुर्विंशे सत्रान्तराणि, पंचविंशे प्रायश्चित्तम्, मृताग्निहोत्रादि। षड्विंशे प्रवर्ग्य इति'[1]।

कृष्णयजुर्वेदस्य नव श्रौतसूत्राणि समुपलभ्यन्ते।

(२) बौधायनश्रौतसूत्रम्—कृष्णयजुर्वेदस्य तैत्तिरीयशाखायाः बोधायनभारद्वाजापस्तम्बसत्याषाढवैखानसवाधूलसंज्ञकेसु षट्सु सूत्रेषु बोधायनश्रौतसूत्रस्य प्राचीनत्वं प्रधानत्वं प्रामाणिकत्वंच प्राचीनाचार्यैरभ्युपगम्यते[2]। तथा च भट्टभास्करमिश्रः[3] स्वकीयतैत्तिरीयसंहिताभाष्यस्यादौ बौधायनपुरस्सरान् सूत्रकृत आचार्यान् प्रणमति। सायणाचार्योऽपि स्वकीये वेदार्थप्रकाशाख्ये तैतिरीयसंहिताभाष्ये बोधायनश्रौतसूत्रस्य प्राथम्यमुररीकरोति[4]। सत्याषाढश्रौतसूत्रस्य वैजयन्तीटीकाकारो महादेवः षट्सु सूत्रकारेषु बोधायनमेव प्रथमं संस्मरति[5]।

इदं बौधायनीयं सूत्रं कलिकातानगरे कालण्डमहोदयैः प्रकाशितम्। अस्य गोविन्दस्वामिभाष्यं महिशूरतः प्रकाशितमिति डा० बलदेवोपध्यायमहाभागाः[6]। प्रवचन-रूपत्वेनांगीकृतेऽस्मिन् सुविस्तीर्णे प्राचीनतमे श्रौतसूत्रे त्रिंशत् प्रश्नाः सन्ति, प्रश्ना अप्यध्यायेषु विभज्यन्ते येष्वखिलो यागविधिर्विस्तरेणोपवर्ण्यते, मन्त्राश्च सकलपाठेन समुद्ध्रियन्ते[6]। अस्य प्रथमप्रश्ने दर्शपूर्णमासौ निरूप्येते। अस्यैव प्रयोगोपेतं सायणभाष्यं शोधप्रबन्धत्वेन प्रस्तूयते।

---

१. का० श्रौ०—भूमिका, पृ० २७।

२. भा० श्रौ० I प्रस्ताविकम्, पृ० २६। श्री को० प्रास्ताविकम्, पृ० ९। मै० ए० लि०, पृ० २४८। की० तै० सं० I, भूमिका ४६।

३. तै० सं० भा०, पृ० ४ 'प्रणम्य शिरसाचार्यान् बौधायनपुरःसरान्।'

४. तै० सं० भा० पृ० ११७ 'अथो बौधायनादिसूत्रोदाहरणपूर्वकं ब्राह्मणानुसारेण सूत्रार्थं योजयामः।'

५. स० श्रौ०, पृ० १।

६. ब० वै० सा०, पृ० ३२१।

(३) **भारद्वाजश्रौतसूत्रम्**—इदं श्रौतसूत्रं कृष्णयजुर्वेदीयतैत्तिरीयशाखामवलम्बते। अस्याः शाखाया वर्तमानं स्वरूपं सूत्ररचनाकाले सुदृढमासीदित्यनुमातुं शक्यते, यतः केषुचन स्थलेषु शाखीया मन्त्रा अनुवाकरूपेण, अनुवाकशेषरूपेण वा समुद्धृताः समुपलभ्यन्ते। क्वचन'.........इति प्रतिपद्य.........इत्यन्तेन' इति रीत्यापि मन्त्राः समुद्ध्रियन्ते।

श्रौतसूत्रमिदं पैतृमेधिकपरिशेषसूचीभ्यां सहितमाङ्ग्लभाषानुवादेनोपबृंहितं भागद्वयात्मकं काशीकरोपाह्वेन गणेशचिन्तामणिशर्मणा संपादितं वैदिकसंशोधनमण्डलेन प्राकाश्यमानीतम्। भास्करभट्टसूनुना हरिहरेणान्त्येष्टिपद्धतेरादौ भारद्वाजश्रौतसूत्रस्य भाष्यमुल्लिखितम्[1]। सूचीग्रन्थैरपि[2] भट्टगोपालादीनां भाष्याणि सूच्यन्ते।

पंचदशप्रश्नेष्वयं सूत्रग्रन्थो विभज्यते यत्र क्रमेणेमे विषया विवेच्यन्ते—दर्शपूर्णमासौ, अग्न्याधेयम् अग्निहोत्रम्, आग्रयणम्, निरूढपशुबन्धः, चातुर्मास्यानि, (वैश्वदेवपर्व, साकमेधपर्व, शुनासीरीयपर्व, काम्यानि, चातुर्मास्यानि, पंचसांवत्सरिकाणि) पूर्वप्रायश्चित्तम् ज्योतिष्टोमः (प्रातः सवनम् माध्यन्दिनसवनम्, तृतीयसवनम्, यज्ञपुच्छम्), ज्योतिष्टोमब्रह्मत्वं च।

(४) **आपस्तम्बश्रौतसूत्रम्**—आपस्तम्बीयं श्रौतसूत्रमपि तैत्तिरीयामेव शाखामनुवर्तते। सूत्रकार आपस्तम्बः सत्याषाढश्रौतसूत्रस्य वैजयन्ती टीकाकारेण महादेवेन[4] भारद्वाजानन्तरं समुल्लिखितः। तैत्तिरीयसंहितायाः भाष्ये सायणाचार्येणापि बौधायनश्रौतसूत्रेण सहापस्तम्बश्रौतसूत्रमपि समुदाहृतम्। बौधायनधर्मसूत्रे बौधायनः

---

१. भा० श्रौ० I, प्रास्ताविकम्, पृ० २५।

२. 'भरद्वाजकृतं सूत्रं तद्भाष्यं कल्पकारिकाः।
सुविलोक्यानाहिताग्निः समन्त्रं पैतृमेधिकम्॥' भा० श्रौ० I, प्रास्ताविकम्, पृ० २१।

३. कं० कै० I, पृ० ४०६।

४. स० श्रौ०, पृ० १ 'तथा भरद्वाजमुनीश्वरस्तथापस्तम्ब आचार्य इदं परं स्फुटम्।'

गृह्यसूत्रे[1] चापि सूत्रकारत्वेनापस्तम्ब एवाभिधीयते । बौधायनश्रौतसूत्रभाष्ये सायणाचार्येणापि 'सूत्रम्' इति निर्देशेनापस्तम्बश्रौतसूत्रमेवोदाह्रियते । इतरश्रौतसूत्रापेक्षया सूत्रमिदं भारद्वाजश्रौतसूत्रस्य दृढतरां समतां भजते, न केवलं विष्युपदेशेऽपितु रचनायामपि[2] । उभयोः श्रौतसूत्रयोरनल्पानि सूत्राण्यपि शब्दशः समानान्येव[3] ।

आपस्तम्बीयस्य श्रौतसूत्रस्य दीर्घतरा भाष्यपरंपराद्यापि संजीवति । श्रीरामाग्निचिद्वृत्तिसहितं धूर्तस्वामिभाष्यभूषितमापस्तम्बीयं श्रौतसूत्रं महिशूरतः प्रकाशतां गतम् । अस्य धूर्तस्वामिभाष्यं महामहोपाध्यायेन चिन्नस्वामिनापि प्रकाशितम् । अस्यैव रुद्रदत्तप्रणीता 'सूत्रदीपिका' इति नाम्ना विदिता वृत्तिः कलिकातानगरे १८८२ तमे ख्रिस्ताब्दे डा० रिचार्डगार्बेमहाभागेन पूर्वमेव प्रकाशितासीत् । वृत्तिरियं पंचदशप्रश्नं यावदुपलभ्यते । धूर्तस्वामिना खल्वापस्तम्बीयं श्रौतसूत्रमग्निचयनपर्यन्तमेव व्याख्यातमावाजपेयं चास्य भाष्यं कपर्दिस्वामिना प्राणायीति प्रयोगदीपिपिकाकृतो वचनेन विज्ञायते[4] । हस्तलेखागारेष्वस्य गुहदेवस्वामि-तालवृन्तनिवासिहरदत्तसोमनाथदीक्षितगार्ग्यगोपालयज्वकरविन्दस्वामि-कृष्णभट्टसुन्दरराजसोमनाथाहोबलानन्तदेवादीनामपि भाष्याणि विद्यन्ते[5] ।

सूत्रग्रन्थोऽयं चतुर्विंशतिप्रश्नेषु विभज्यते; यत्रानुपूर्व्येण दर्शपूर्णमासौ, वैमृधेष्टिः, दाक्षायणयज्ञः, याजमानम्, अग्न्याधेयम्, अग्निहोत्रम्, निरूढपशुबन्धः, चातुर्मास्यानि, प्रायश्चित्तम्, सोमयागः, सोमसंस्थादीनि, प्रवर्ग्यः, चयनम्, वाजपेयराजसूयौ, सौत्रामणी, अश्वमेधः, द्वादशाहः, एकाहः, सत्रम्, यज्ञपरिभाषा चेति विषया प्रतिपाद्यन्ते ।

---

१. बौ० गृ० ३।८ 'आपस्तम्बाय सूत्रकाराय' । बौ० ध० २।५।१४ ।

२. भा० श्रौ० I, प्रास्ताविकम्, पृ० २६-२७ ।

३. यथा—'पूषा ते ग्रन्थिं ग्रथ्नातु इति ग्रन्थिं पुरोति'—भा० श्रौ० १।४।१२ । आप० श्रौ० १।४।१०

४. आप० श्रौ० I,-आपस्तम्बकल्पसूत्रपरिचयः, पृ० ३२-३३ ।

५. न्यू० कै० कै० II, पृ० १३२-१३८ । कै० सं० वे० II, पृ० २०४-२८८ ।

(५) **सत्याषाढश्रौतसूत्रम्**—हिरण्यकेशीति[1] द्वितीयनाम्ना विश्रुतेन सत्याषाढेन प्रणीतमिदं सत्याषाढश्रौतसूत्रं तैत्तिरीय शाखामेवानुयाति। कौशिकगोत्रीय-महादेवभट्ट गणेशदीक्षिततनूजगोपीनाथभट्ट महादेवशास्त्रि मातृदत्ताचार्य वांछेश्वर-सुधी महादेवदीक्षितप्रभृतिभिर्व्याख्यातमिदमानन्दाश्रममुद्रणालये दशभागेषु प्रकाशितम्। तत्रास्य प्रथमषट्कान्तं कौशिकगोत्रोत्पन्नमहादेवकृतं प्रयोगवैजयन्ती-व्याख्यनं ततः सप्तमप्रश्नादारभ्य दशमप्रश्नान्तं गोपीनाथभट्टकृतं ज्योत्स्नावृत्ति-नामकं व्याख्यानं ततः एकादशप्रश्नादारभ्यापरं नूतनं प्रयोगचन्द्रिकाव्याख्यानं महादेवदीक्षितसोमयाजिसंकलितमेकोनविंशविंशप्रश्नद्वये गृह्यसूत्रमयी मातृदत्ताचार्यस्य व्याख्या, चतुर्विंशप्रश्ने नरसिंहपुत्रस्य वांछेश्वरसुधियो वृत्तिः, षड्विंशसप्तविंशप्रश्नयोः-महादेवदीक्षितविरचितोज्ज्वलव्याख्या च मुद्रितानि।

श्रौतसूत्रेऽस्मिन् एकोनत्रिंशत्प्रश्नाः सन्ति। तत्राद्ये प्रश्नद्वये परिभाषापूर्वकं दर्शपूर्णमासावनुनिर्वाप्येन्द्रवैमृध-काम्यदर्शपूर्णमासप्रयोगविकासपिण्डपितृयज्ञब्रह्मत्वानि व्याख्यायन्ते। तृतीये च प्रश्नेऽधिकारः सर्वकर्मसु प्रतिनिधि-निरूपणमाधानं तदंगेष्टयः पुनराधेयमग्निहोत्रं सगृहस्य प्रयाणं दर्विहोमधर्मा अतिदेशप्रकारो विकृतिषु विशेष-विधिश्च सोमाग्रयणेष्टिपशुबन्धानामनुष्ठानेऽमावास्यापौर्णमासीकालावाग्रयणेष्टिश्च विवेच्यन्ते। चतुर्थपंचमयोर्निरूढपशुबन्धश्चातुर्मास्यानि च प्रतिपाद्यन्ते। षष्ठे प्रश्ने च यजमानं होमोपस्थानं प्रवासोप्रस्थानं चातुर्मास्येष्वान्तरालिकानि व्रतानि च कथ्यन्ते। सप्तमाष्टमनवम प्रश्नेषु ज्योतिष्टोमस्तद्विकार उक्थ्यषोडश्यतिरात्राप्तोर्यामाश्च पश्वे-कादशिनी तत्पशुषु तन्त्रावृत्यानुष्ठेया धर्मविशेषाश्च निरूप्यन्ते। दशमे चाग्निष्टोम-याजमानहोतृविनियोगश्च ज्योतिष्टोमब्रह्मत्वं चोच्येते। एकादशद्वादशत्रयोदशेषु चाग्निचयनं वाजपेयराजसूयौ चरकसौत्रामणी चाभिधीयन्ते। चतुर्दशपंचदशषोडशेष्व-

---

१. बौ० गृ० ३।८ (सर्पबलिप्रकरणे) 'सत्याषाढाय हिरण्यकेशाय'। स० श्रौ० I, पृ० २ हिरण्यकेशीति यथार्थनामभागभूद्वरात्तुष्टमुनीन्द्रसंमतात्।' स० श्रौ०, प्रस्तावना, पृ० ७ 'शिवप्रसादतोऽधिगतदिव्यचक्षुर्मुनिः सत्याषाढो हिरण्यकेशीति सर्वत्र पूज्यो बभूवेति।'

२. मातृदत्ताचार्योऽयं जैमिनिश्रौतसूत्रवृत्तिकृतो भवत्रातस्य जनको महाकवेः श्रीदण्डिनः परमं मित्रं सहचरश्चासीत्—जै० श्रौ० वृ०, उपोद्घातः, पृ० ८-९।

ऽश्वमेधपुरुषमेधौ सर्वमेधश्च, विध्यपराधे प्रायश्चित्तानि, द्वादशाहोऽहीनसत्ररूपो महाव्रतं गवामयनं च व्याह्रियन्ते । सप्तदशाष्टादशयोरेकाहाहीनाः सत्राणि सहस्र-संवत्सरान्तानि चोपदिश्यन्ते । एकोनविंशविंशयोरुपनयनविवाहगर्भाधानादीनिस्मार्त्त-कर्माणि प्रदर्श्यन्ते । एकविंशद्वाविंशत्रयोविंशेषु याजुषहौत्रप्रवरनिर्णयौ काम्येष्टिपशु-बन्धाः कौकिलीसौत्रामणीसवाः काठकचयनानि च वर्ण्यन्ते । चतुर्विंशपंचविंशयोः प्रवर्ग्यः, सुल्वे विहारयोगाश्चोपदिश्यन्ते । षड्विंशसप्तविंशप्रश्नयोः सामयाचारिका धर्माश्चोपदिश्यन्ते । अष्टाविंशैकोनत्रिंशयोः प्रश्नयोर्मृतस्य कर्मणो विधानं मृतस्या-हिताग्नेः स्थापनदहनप्रकारः शवाग्नौ हवनमस्थिसंचयनमित्यादयो बहवः खलु विषया प्रतिपाद्यन्ते[1] ।

सत्याषाढश्रौतसूत्रस्योत्तमौ द्वौ प्रश्नौ भारद्वाजीयौ । 'पितृमेधस्तु भारद्वाजीयो मुनिना परिगृहीतो द्वौ प्रश्नौ'[2] इति सत्याषाढश्रौतसूत्रस्य प्रयोगवैजयन्तीटीका-कारेण महादेवेन 'यज्ञं व्याख्यास्यामः' (स० श्रौ० १।१।१) इति सूत्रव्याख्यायां स्पष्टी-कृतमस्ति । इममेवाभिप्रायं महादेवशास्त्रिमहाभागोऽपि समर्थयति[3] ।

**(६) वैखानसश्रौत्रसूत्रम्**—इदं श्रौतसूत्रं तैत्तिरीयशाखायाः कामप्यवान्तर शाखामौखेयमाश्रित्य प्रवर्तते[4] । चरणव्यूहे[5] तैतिरीयशाखाया अवान्तरशाखात्वेनौ-खेया शाखा समुल्लिखिता । अस्य श्रौतसूत्रस्य व्याख्यात्रा श्रीनिवासदीक्षितेनापि[6] स्वव्याख्याग्रन्थोपक्रमे प्रोक्तम्—

> **वेदार्थं येन विज्ञाय लोकानुग्रहकाम्यया ।**
> **प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥**

---

१. स० श्रौ० दशमोभागः, प्रास्ताविकम्, पृ० ४-५ । स० श्रौ० प्रथमोभागः, पृ० ७-८ ।

२. स० श्रौ० I, पृ० ८ । भा० श्रौ० I, प्रास्ताविकम्, पृ० २०-२१ ।

३. स० श्रौ०, दशमोभागः, पृ० २२७ 'ग्रंथानालोच्य भाष्यादीन् महादेवेन धीमता । भरद्वाजैर्निबद्धस्तु पितृमेधोऽनुवर्ण्यते ॥'

४. वै० श्रौ०, पृ० ३३४ 'इति श्रीमदौखेयशाखायां विखनसा प्रोक्ते श्रीवैखानससूत्रे मूलगृह्ये द्वात्रिंशः प्रश्नः ।'

५. वै० श्रौ०, भूमिका, पृ० २६ ।

६. तत्रैव, पृ० १२ ।

अस्य सूत्रस्य प्रणेता विखना इति नामाचार्यो ब्रह्मांशत्वेन विशिष्टाद्वैतस्य परिज्ञानाय धरायामवतीर्ण इति पार्थसारथि-अयंगरमहाभागानां मतम्[1]। वैखानसः स्वदेवतात्वेन नारायणं विष्णुमेवोररीकुर्वन्ति। वैखानसाख्या वैष्णवा अद्यापि दक्षिण-भारतस्यान्ध्रप्रदेशे निवसन्ति। इदं श्रौतसूत्रं वैखानसस्मार्त्तसूत्रस्योत्तरार्धभागपि गण्यते। कलिकातायां १९४१ तमे ख्रिस्ताब्दे डा० कालण्डमहाभागेनास्य प्रकाशनं कृतम्।

श्रौतसूत्रेऽस्मिन् एकविंशतिप्रश्नाः सन्ति, यत्र क्रमशोऽग्न्याधेयम्, पुनराधेयम्, अग्निहोत्रम्, अग्निभ्यः प्रवासः, दर्शपूर्णमासौ, आग्रयणम् चातुर्मास्यानि, निरूढपशु-बन्धः, सौत्रामणी, परिभाषा (यज्ञायुधानि), अग्निष्टोमः, उक्थ्यषोडशीसंध्यादीनि, वाजपेयः, अग्निचयनम्, प्रायश्चित्तं चेति विषया विवेच्यन्ते। इतरश्रौतसूत्रापेक्षयात्र विषयो विस्पष्टतया प्रतिपाद्यन्ते। अन्येषु श्रौतसूत्रेषु पृथक्पृथगितस्ततश्च प्रति-पादिता हौत्रब्रह्मत्वयाजमानादिविषया अत्र सहैवोपस्थीयन्ते।

(७) **वाधूलश्रौतसूत्रम्**—वाधूलश्रौतसूत्रमपि तैत्तिरीयां शाखा सम्पृणक्ति[2]। प्रयोगवैजयन्तीव्याख्याकारेण महादेवेनापि षट्सु सूत्रकारेषु वाधूलोऽपि सगौरवं संस्तुतः[3]। डा० कालण्डमहाभागैः 'एक्टा ओरियन्टेलिया' इत्याख्यायां शर्मण्यदेशी-यायां पत्रिकायामिदं श्रौतसूत्रं यावदुपलब्धं तद्देशीयभाषारूपान्तरेण समं प्राकाश्यत। श्रौतसूत्रेऽस्मिन्नमुना क्रमेणेमे विषयाः प्रतिपाद्यन्ते—अग्न्याधेयम्, पुनराधेयम्, अग्न्यु-पस्थानम्, प्रवसदुपस्थानम्, पुरोडाशः, याजमानम्, आग्रयणम्, ब्रह्मत्वम्, चातुर्मा-स्यानि, पशुबन्धः, ज्योतिष्टोमः, अग्निचयनम्, वाजपेयराजसूयौ, अश्वमेधः, द्वाद-शाहः, औपानुवाक्यम्, अहीनाः, एकाहाश्च।

(८) **मानवश्रौतसूत्रम्**—कृष्णयजुर्वेदस्य मैत्रायणीं शाखां समाश्रित्येदं श्रौत-सूत्रं संप्रवर्तते। आङ्ग्लभाषारूपान्तरेण साकमिदं श्रौतसूत्रं भागद्वयात्मकं य० एम०

---

१. वै० श्रौ०, भूमिका, पृ० २८-३१।

२. वि० इ० लि०, पृ० २७८।

३. स० श्रौ० I, पृ० २।

फान्खेल्डरदेव्या शतपिटकस्य वेदपिटके देहलीतः प्रास्तूयत। इतः प्रागपीदं प्राथमिकपंचभागमात्रं फ्राइडरिशकनावेरमहोदयेन प्राकाशि[1]।

अस्य श्रौतसूत्रस्याग्निस्वामिकुमारबालकृष्णमिश्रशंकरशिवदासप्रभृतीनां भाष्याण्यप्रकाशितानि विद्यन्ते[2]। ग्रन्थोऽयमेकादशभागेषु व्यभाजि। यत्र प्रथमे प्राक्सोमभागे दर्शपूर्णमासौ, होमाः, याजमानम्, अग्न्याधेयम्, अग्निहोत्रम्, आग्रयणम्, पुनराधेयम्, चातुर्मास्यानि, वैश्वदेवम्, वरुणप्रघासाः—साकमेधाः, शुनाशीर्यम्, पंच संवत्सरिकाणि पशुश्च प्रतिपाद्यन्ते। द्वितीये भागे सवनत्रयात्मकोऽग्निष्टोमो निरूप्यते। तृतीये भागे प्रायश्चित्तानि प्रकाश्यन्ते। चतुर्थे भागे प्रवर्ग्यः प्रोच्यते। पंचमे भाग इष्टिकल्पः कल्थते। षष्ठे चयनं विधीयते। सप्तमे वाजपेयो द्वादशाहो गवामयनं- चोपदिश्यन्ते। अष्टमेऽनुग्राहिकोऽभिधीयते। नवमे राजसूयः, एकाहाः, अहीनाः, सत्राणि, गोनामिकं चोदीर्यते। दशमे शुल्वसूत्रं सुविवेच्यते। परिशिष्टात्मकेऽन्तिमे एकादशे भागे प्रतिग्रहकल्पः, मूलजातविधिः, यमलशान्तिः, आश्लेषाविधिः दन्त्याप्त्यतिशान्तिः, रुद्रजपविधानम्, प्रवरः श्राद्धं चोद्गीर्यन्ते[3]।

**(८) वाराहश्रौतसूत्रम्**—इदमपि श्रौतसूत्रं मैत्रायणी शाखामाश्रयते। डा० कालण्ड-रघुवीरमहोदयाभ्यामस्य सुसम्पादनं विहितम्।

सूत्रेऽस्मिन् त्रयो भागाः येषु प्रथमे प्राक्सौमिके परिभाषाः, याजमानम्, ब्रह्मत्वम्, दर्शपूर्णमासौ. आधानम्, पुनराधेयम्, अग्निहोत्रम्, अग्न्युपस्थानम्, आग्रयणेष्टिः, पशुबन्धः, चातुर्मास्यानि च प्रतिपाद्यन्ते। द्वितीये भागेऽग्निचयनं निरूप्यते। तृतीये भागे वाजपेयः, द्वादशाहः गवामयनम्, उत्सर्गिणामयनम्, महाव्रतम्, एकादशिनी, सौत्रामणी, राजसूयः, अश्वमेधश्चोपवर्ण्यन्ते।

---

१. मा० श्रौ० I, प्राक्कथनम्, पृ० १।
'वाधूल आचार्यवरोऽकरोत् परं सूत्रं तु यत्केरलदेशसंस्थितम्।'

२. कै० कै० I, पृ० ४५१ मा० श्रौ०, प्राक्कथनम्, पृ० १-३।

३. मा० श्रौ० I, विषयाणां विस्तृता सूची, २८१-२८७।

(१०) **काठकश्रौतसूत्रम्**—हस्तलेखसूचीग्रन्थेषु काठकश्रौतसूत्रस्यास्तित्वं श्रूयते[१]। समग्रतया सूत्रमिदं न प्राकाश्यत। कात्यायनश्रौतसूत्रस्य कर्कादिभाष्येष्वस्योद्धरणानि प्राप्यन्ते, तानि संगृह्य डा० सूर्यकान्तमहाभागैः प्राकाशि[२]। काठकगृह्यसूत्रस्य भाष्यकारेण देवपालेन काठकश्रौतसूत्र एकोनचत्वारिंशदध्याया आसन्नित्यभिहितम्[३]।

## सामवेदीयानि श्रौतसूत्राणि

(१) **मशक श्रौतसूत्रम्**—मशकाचार्यप्रणीतमिदं श्रौतसूत्रम् 'आर्षेयकल्पः' इत्यभिधानेनापि विश्रूयते। अस्य प्रणेतुर्मशकाचार्यस्य नाम लाट्यायनश्रौतसूत्रे[४] वंशब्राह्मणोऽनुपदादिषु लिख्यते[५]। इदं १९०८ तमे ख्रिस्ताब्दे 'अब्हान्ड्लुङ् फ्युर डी कुन्डे डेस् मॉर्गेनलान्डेस्' इतिनाम्न्यां शर्मण्यदेशीयायां पत्रिकायां प्राकाश्यमुपनीतं डा० कालण्डमहाभागैः। वरदराजनिवासाचार्यादीनां भाष्याण्यस्मिन् श्रौतसूत्रे विद्यन्ते[६]। पंचविंशब्राह्मणक्रममनुसृत्यात्र सोमयागीयानां कर्मणां विधानानि साम्नां विनियोगश्च विवेच्यन्ते[७]।

ग्रन्थेऽस्मिन् ह्येकादशप्रपाठका विराजन्ते यत्रानुपूर्व्येण एकाहः, अहीनाः, सत्राणि च सुप्रतिपाद्यन्ते।

(२) **लाट्यायनश्रौतसूत्रम्**—श्रौतसूत्रमिदं सामवेदस्य कौथुमीयां शाखाम-

---

१. न्यू० कै० कै० III, पृ० ३०२-३।

२. तत्रैव।

३. का० गृ०, पृ० १। लौ० गृ०, पृ० १। '**एकोनचत्वारिंशताध्यायैर्वैतानिकानि कर्माणि प्रतिपादितानि।**'

४. ला० श्रौ० ७।९।१४ '**मशको गार्ग्यो मशकोगार्ग्योऽस्यासम्।**'

५. वै० को०, पृ० ३७१।

६. न्यू० कै० कै० II, पृ० १८०। मै० हि० लि०, पृ० १०७।

७. वि० इ० लि०, पृ० २७९।

नुसरति । अग्निस्वामिविरचितभाष्यसहितमिदं श्रीआनन्दचन्द्रवेदान्तवागीशेन कलिकातायां प्राकाशि । अत्र रामकृष्णदीक्षितसायणादीनां भाष्याणि सन्ति[1] ।

तत्र प्रथमे प्रपाठके तावत् परिभाषाया ऊर्ध्वमृत्विग्याज्यलक्षणाद्यनन्तरं वृतप्रतिमन्त्रणादिपूतभृदाहवनीयाधिकरणान्तः, द्वितीये स्तोमयागादि-सार्वक्रतुसामान्यविधानान्तः, तृतीये षोडशिनो गुणविधानादिवाणायवद्रव्यविधानान्तः, चतुर्थे वाणायवाच्छादनद्रव्यविधानादिवाजिनभक्षणान्तः, पंचमे चातुर्मास्याधिकारे वरुणप्रघासिकब्रह्मत्वकथनादिसोमचमसोर्भक्षणान्तः, षष्ठे सन्तनिनः सामविधानादिद्व्यक्षरप्रतिहारान्तः, सप्तमे चतुरक्षरप्रतिहारादिगायत्रीगानान्तः, अष्टम एकाहाहीनसत्राख्यकाण्डत्रितयान्वितयज्ञस्य प्रतिकाण्डं पृथग् विधिविधानादिवाजपेयविधानान्तः, नवमे राजसूयविधानाद्यहीनविधिविधानान्तः, दशमे सत्राधिकारे तत्परिभाषाविधानादिसंवत्सरविधानान्तः प्रस्तावो निरूप्यते[2] ।

(३) **द्राह्यायणश्रौतसूत्रम्**—इदं श्रौतसूत्रं छन्दोगानां राणायणीयां शाखामनुसृत्य प्रवर्तते । धन्विभाष्ययुतमिदं सूत्रं जे० एन० रीटरमहाभागेन १९०४ तमे ख्रिस्ताब्दे प्राकाश्यमुपनीतम्[3] । विस्तृत-भूमिकाभूषितं तत्तद्भाष्योपेतं परिशिष्टादिसमवेतं भागद्वयात्मकं लाट्यायनद्राह्यायणश्रौतसूत्रमाङ्लभाषारूपान्तरसहितम् अस्को परपोलामहोदयैः १९६९ तमे ख्रिस्ताब्दे सुसम्पाद्य समुपास्थीयत[4] । अत्र रुद्रस्कन्दस्वामिनो भाष्यमपि तिष्ठति[5] । श्रौतसूत्रमिदं प्रायशो लाट्यायनश्रौतसूत्रस्य सौसादृश्यमक्षरशो भजते । इदं वशिष्ठसूत्रमिति नाम्नाप्युच्यते ।

(४) **जैमिनीयश्रौतसूत्रम्**—जैमिनीयशाखायां बद्धमिदं श्रौतसूत्रं खास्ट्रामहाभागया १९०६ तमे ख्रिस्ताब्दे निवासाचार्यस्य श्रौतकारिकासहितमग्निष्टोम-

---

१. कै० कै० I, पृ० ५४३ ।

२. ला० श्रौ०, विज्ञापनम्, पृ० १-२ ।

३. वि० इ० लि०, पृ० २७९ ।

४. वे० बि० III, पृ० १५९-१६० ।

५. कै० कै० I, पृ० २६४ ।

प्रकरणपर्यन्तं डचभाषारूपान्तरसमन्वितं समुपस्थापितम् । भवत्रातप्रणीता जैमिनीया-श्रौतसूत्रवृत्तिः प्रेमनिधिशास्त्रिणा प्रकाशतामुपनीता[1] । जैमिनितलवकारयोर्द्धतर-सम्बन्धत्वादिदं श्रौतसूत्रं तलवकारशाखीयमपीति प्रतिपादितं प्रेमनिधिशास्त्रिमहा-भागेन[2] ।

जैमिनीयश्रौतसूत्रवृत्तावग्निष्टोमप्रकरणे क्रमशः उद्गातृप्रवृत्तिक्रमः, उद्गातृ-सत्कारविधिः, सुब्रह्मण्याह्वानविधिः, अग्निचयनपक्षविधिः, प्रवर्ग्योद्वासनम्, औदुम्ब-र्युत्थापनविधिः, पितापुत्रीयो विधिः, विश्वरूपगानकालविधिः, द्रोणकलशविधिः, उपवेशनविधिः, वह्निपवनविधिः, सत्रोद्गातृमार्जनविधिः, धिष्ण्योपस्थानविधिः, सोमभक्षणविधिः, प्रातःसवनविधिः, दक्षिणादानविधिः, पृष्ठविधिः, तृतीयसवनक्रिया-क्रमः, नाराशंसभक्षणविधिः, अनूयाजविधिः, पत्नीसंयाजविधिः, अग्न्याधेयसामविधिः, प्रवर्ग्यसामविधिः, परिगाणविधिः, प्रकीर्णकश्चेति विषया वर्ण्यन्ते । तदुपरि माधवीया कारिका ततः स्तोमकल्पवृत्तिः, प्राकृतवृत्तिः, संज्ञा, विकृतिकल्पश्च विवेच्यन्ते । पर्यध्याये खलु महदहःक्लृप्तिः, स्तोत्रगीतिभेदः, प्रस्तावपरिमाणादीनि, प्रतिहार-विधिः, सामलक्षणम्, ऊहलक्षणम्, निधनविधिः, कल्पसमयः, सामान्तवादः, जामयः, संवादविधिः, आरम्भणीयमहः, पृष्ठः, महाव्रतविधिः, महेन्द्रग्रहग्रहः, हिंकारविधानम्, समिदाधानम्, स्तोमकल्पः, विष्टुतयः, पर्यायाः, विधृतिविधाः, निर्मथ्या, सप्तदशः स्तोमः, एकविंशस्तोमः, चतुष्टोमानां रूपाणि, विष्टुतिभेदाः, स्तोमभेदाः, गीति-ष्वोङ्कारप्राथम्यमृष्यादिविवेकश्च विधीयते ।

## अथर्ववेदीयं श्रौतसूत्रम्

**वैतानश्रौतसूत्रम्**—अथर्ववेदीयेषु पंचकल्पसूत्रेषु[3] वितानकल्पसूत्रे हि श्रौत-

---

१. गै० वै० सा०, पृ० १४२ ।

२. जै० श्रौ० वृ०, उपोद्घातः, पृ० २ ।

३. कौ० सू०, परिशिष्टे, पृ० ३०८ 'मीमांसायां स्मृतिपादे कल्पसूत्राधिकरणे नक्षत्र-कल्पो वितानकल्पस्तृतीयः संहिताकल्पश्चतुर्थो अंगिरसां कल्पः शान्तिकल्पस्तु पंचमः ।'

सूत्रविषया विवेच्यन्ते[१]। इदं श्रौतसूत्रं कौशिकसूत्रानन्तरं प्रणीतम्[२]। सोमादित्यकृताक्षेपविधिसंज्ञकभाष्योपेतमस्य सुसंस्करणं भीमदेवपीताम्बरदत्ताभ्यां सहकृतेन विश्वबन्धुना सम्पादितं लभ्यते। अस्य सूत्रस्यान्यान्यपि संस्करणानि प्राप्यन्ते[३]।

सूत्रेऽस्मिन् अष्टावध्यायाः विलसन्ति; येषु यथाक्रमं दर्शपूर्णमासौ, अग्न्याधेयम्, अग्निहोत्रम्, आरम्भणीयेष्टिः, चातुर्मास्यानि, पशुबन्धः, अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, अप्तोर्यामाः, अग्निचयनम्, सौत्रामणी, गवामयनम् गवामयनस्य परिभाषा, राजसूयः, अश्वमेधः पुरुषमेधः, सर्वमेधः, एकाहस्तोत्रविकाराः, अहीनस्तोत्रविकाराः, काम्ययज्ञाश्च निरूप्यन्ते।

श्रौतसूत्रेषु विवेचितं भाष्यवृत्त्यादिषु बहुधा व्याख्यातं यज्ञशास्त्रं प्रयोगपद्धतिकारिकादिविविधरूपेषु विपश्चित्पश्चिमैर्विपुलं व्यतन्यते च नवनवरूपेणाद्यापि[४]।

## (ग) बौधायनश्रौतसूत्रम्

(१) **प्राचीनता**—श्रौतसूत्रेषु सर्वेषु बौधनश्रौतसूत्रं प्राचीनतमं मन्यते[५]। बौधायनगृह्यसूत्रे (३।८) सर्पबलि प्रकरणे बौधायनः प्रवचनकारोऽभिहितः। प्रायश्चित्तविचिन्तननाम्नि निबन्धे[६] शाखाप्रवर्त्तकेषु बौधायनः प्रथम उदलिख्यत।

---

१. वैता० श्रौ०, भूमिका, पृ० १७-१८। कौ० सू०, भूमिका, पृ० २२।

२. वैता० श्रौ०, भूमिका, पृ० १८। वैता० श्रौ०, पृ० १ 'अथेति संहिताविधिसापेक्षत्वद्योतनाय तदानन्तर्यार्थः।' —सोमादित्यः।

३. वैता० श्रौ०, भूमिका, पृ० १९।

४. वि० इ० लि०, प्र० २८१। वे ए०, पृ० ४७७।

५. श्रौ० को० I, प्रास्ताविकम् ९-१०। पी० के० गो० पृ० २०३, भ० ओ० री० खण्ड २४, १९४८, पृ० १०७। की० तै० सं० I, भूमिका, ४६। इ० वे० क०, पृ० ७३-७६। मै० ए० लि०, पृ० २४८।

६. आप श्रौ० I, आपस्तम्बकल्पसूत्रपरिचयः पृ० ६।

बौधायनभारद्वाजश्रौतसूत्रयोः पारस्परिकं सम्बन्धं विचारयता डा० काशीकरमहाभागेन[1] बौधायनश्रौतसूत्रस्य भारद्वाजश्रौतसूत्रात् पूर्वकालीनत्वं स्पष्टं प्रत्यपादि। श्रौतसूत्राणां भाषायाः पर्यालोचनेनाप्यस्य प्राचीनतमत्वमभिधातुं शक्यते। बौधायनश्रौतसूत्रस्य भाषा ब्राह्मणग्रन्थानां भाषया साम्यमावहति। अत्र 'अथ वै भवति' इत्युपक्रमेण ब्राह्मणवाक्यानि बाहुल्येनोदाह्रियन्ते। निपातानां प्रयोगोऽपि प्राचुर्येण प्राप्यते। यथा—'उपवसथ इति। कथमु खलुपवसथं जानीयात्। संध्यः स्विदेवोपपाद्योऽथ भूरिनादर्शीति। साधु खलु संध्यः साधु संधेरुपपादनम्। ननु खलु संध्यः सूपपादय इव सर्वेषां त्वेव संध्य इवेति। सह स्माह बौधायनो यत्रैतदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीमवन्निवोदियात्तमप्युपवसथं जानीयात्।' (बौ० श्रौ० २०।१)

(२) कालः—ब्राह्मणग्रन्थानां संकलनानन्तरं श्रौतसूत्राणि संकलितानि। सामान्यतः श्रौतसूत्राणां रचनाकाल इतिहासविद्भि विद्वद्भिः ख्रिस्ताब्दपूर्वाष्टत्रिशतकयोर्मध्येऽङ्गीक्रियते। भारतेऽस्मिन् बौद्धधर्मप्रवर्त्तकस्य महात्मनो बुद्धस्य कालात्पूर्वमेव यज्ञपरम्परा सुप्रतिष्ठितासीत्, किन्तु बुद्धस्य नामापि कस्मिन्नपि श्रौतसूत्रे न प्राप्यते[2]। पाणिनेः प्राक् ब्राह्मणानि कल्पाश्चासन्। पाणिनिः स्वयमप्यष्टाध्याय्यां ब्राह्मणानि कल्पांश्च स्मरति[3]। डा० कालण्डमहोदयै बौधायनश्रौतसूत्रस्य प्रणयनकालः ख्रिस्ताब्दपूर्वं षष्ठशतके संभावितः[4]।

श्रीशंकरबालकृष्णदीक्षितप्रभृतिभि ज्योतिर्विद्भिरपि वेदांगानां प्रणयनस्योत्तरकालः शकपूर्वाणि पंचशतवर्षाणि, ततोऽपि सहस्राधिकवर्षपूर्वाणि यावद्वा निर्णीयते[5]। गणितशास्त्रपारंगतैः डा० गोरखप्रसादमहाभागैः,[6] पूर्वस्यां दिशि कृत्तिकानामुदय-

---

१. भा० श्रौ० I, प्रास्ताविकम्, पृ० २९-३०। तत्रैव, पृ० २६।

२. वै० प०। वे० ए०, पृ० ४७७। इ० वे० क०, पृ० ६८-६९।

३. पा अष्टा० ४।३।१०५ 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु।'

४. कौ० तै० सं०, भूमिका, पृ० ४६।

५. भा० ज्यो०, पृ० ९४-१९६। वे० नि०, पृ० १७-६३।

६. भा० ज्यो०, इ०, 'वेद और वेदांगकाल' पृ० ४९-६९।

माश्रित्य[1] विहितया गणनया प्रमाणपुरस्सरं बौधायनश्रौतसूत्रस्य संकलनकालः ख्रिस्ताब्दपूर्वं त्रिंशदुत्तरत्रयोदशशतवर्षकाले निर्धार्यते। अतो बौधायनश्रौतसूत्रं बुद्धात्प्रागवश्यं व्यवस्थितमासीदित्यनुमीयते।

३—विषयाः—बौधायनश्रौतसूत्रस्य त्रिंशत्प्रश्नेष्विमे विषयाः यथाक्रमं प्रतिपाद्यन्ते—प्रथमे दर्शपूर्णमासौ; द्वितीये उपव्याहरणम्, देवयाचनम्, ऋत्विजां वरणम्, विनिधयः, अग्न्याधेयकर्मान्तम्, उपवसथगविः, अग्न्याधेयम्, अन्वारम्भणीयेष्टिः; दशाध्यायिकाख्ये तृतीये पुनराधेयम्, अग्निहोत्रम्, अग्न्युपस्थापनम्, पिण्डपितृयागः, आग्रयणम्, अग्निभ्यः प्रवासः, याजमानम्, ब्रह्मत्वम्, हौत्रम्; चतुर्थे पशुबन्धः; पंचमे चातुर्मास्यानि, वैश्वदेवहवींषि, वरुणप्रघासहवींषि, साकमेधहवींषि, महापितृयज्ञः, त्र्यम्बकहोमः, शुनाशीरहवींषि; षष्ठसप्तमाष्टमेष्वग्निष्टोमः, प्रातःसवनम्, माध्यन्दिनसवनम्, तृतीयसवनम्, यज्ञपुच्छः; नवमे प्रवर्ग्यः, प्रवर्ग्यप्रायश्चित्तानि, अवान्तरदीक्षा च; दशमेऽग्निचयनम्; एकादशे वाजपेयः; द्वादशे राजसूयः; त्रयोदशे इष्टिकल्पः; चतुर्दशे औपानुवाक्यम् (अत्रैव अजावशायागः, जयानां होमः, राष्ट्रभृद्धोमः, सर्ववेदसयागादयोऽपि), पंचदशेऽश्वमेधः; षोडशे द्वादशाहः; सप्तदशेऽतिरात्रः; अष्टादशे बृहस्पतिसवादयः; एकोनविंशे सावित्रनाचिकेतादयः; विंशप्रश्नादारभ्य त्रयोविंशप्रश्नेषु द्वैधम्; चतुर्विंशपंचविंशषड्विंशप्रश्नेषु कर्मान्तः; सप्तविंशाष्टविंशेकोनत्रिंशप्रश्नेषु प्रायश्चित्तानि; त्रिंशे च शुल्बसूत्रम्। ग्रन्थस्यान्तिमे भागे प्रवरसूत्रमपि संकलितम्। डा० कालण्डमहाभागैर्मूलतः प्रवरसूत्रस्य संस्थितिः पितृमेधसूत्रस्यान्ते धर्मसूत्रात्प्रागनुमीयते[2]।

४—द्वैधसूत्रम्—द्वैधाख्ये[3] बौधायनश्रौतसूत्रभागे बौधायनेन समं शालीकि-औपमन्यव-औपमन्यवीपुत्रराथीतर-कात्य-आंजीगवि-गौतम-मैत्रेय-मौद्गल्य-

---

१. बौ० श्रौ० २५।५ 'कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति। तासां संदर्शनेन मापयेदित्येतदेकम्। श्रोणासंदर्शनेन मापयेदित्येतदेकम्। चित्रास्वात्योरन्तरेणेत्येतदपरम्।'

२. बौ० श्रौ० III, भूमिका, पृ० ६।

३. बौ० श्रौ० २०-२३।

प्रभृतीनां मतानि सुस्पष्टमुदलिख्यन्त । अनेन सुप्रतीयते यद् बौधायनश्रौतसूत्रस्य संकलनकालेऽपि याज्ञिककर्मानुष्ठाने आचार्याणां विकल्पा आसन् । ते विकल्पाःप्रथिते श्रौतसूत्रेऽस्मिन् विस्पष्टमभिव्यज्यन्ते । बौधायनश्रौतसूत्रे द्वैधसूत्राणां संकलनेन भारतवर्षे नाचिरकालाच्चिन्तनस्य कीदृशी सुव्यवस्था परंपराद्यापि विद्यतेतमामिति विज्ञायते ।

(५) कर्मान्तसूत्रम्[1]—कर्मान्ताख्ये बौधायनश्रौतसूत्रभागे दर्शपूर्णमासादिष्वनुष्ठीयमानानां कर्मणां रहस्यानि, तेषां वैशिष्ट्यं परिभाषा, तद्विषये यत्किमप्यन्यद् वक्तव्यं स्यात्तत् सर्वं स्फुटीक्रियते । ब्राह्मणग्रन्थेषु यथा प्रश्ना उत्थाप्य समाधीयन्ते तथैवात्रापि दृश्यते । यथा—'कथमु खलु जीवपितुः पिण्डदानं भवतीति । येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति । द्वाभ्यां जीवपिता ददाति । एकस्मै जीवपितामहो ददाति । न जीवन्तमतिदद्यादित्येके । पितृव्यस्य चेत्सगोत्रस्य दायमुपयच्छेत कथं तत्र पिण्डदानं भवतीति । यस्मिन् काले पित्रे पिण्डं ददाति तस्मिन् कालेऽस्य पिण्डं निपृणुयात् ।' (बौ० श्रौ० २४।३२)

द्वैधकर्मान्तप्रायश्चित्तसूत्रभागमतिरिच्य बौधायनश्रौतसूत्रे बौधायनाचार्यो वारचतुष्टयमुल्लिखितः[2] । तथा हि बौधायनगृह्यसूत्रे[3] धर्मसूत्रे[4] चापि तन्मतमुद्धृतम् । कैश्चनप्राज्ञैर्ग्रन्थकारेण तद्ग्रन्थे तन्नामोल्लेखात्तद्ग्रन्थाकर्तृत्वमाशङ्क्यते । तन्न युक्तम्, भारतीयपरंपरानभिज्ञानात् । प्राचीने भारतीये वाङ्मये प्रायशः सर्वत्र तत्त्वान्वेषणतत्परैस्तपोनिष्ठैः तत्त्वदर्शिभिराचार्यैः सुचिन्तनस्य सुव्यवस्थां सरणिं समुन्मीलयद्भिः स्वानि स्वान्यभिमतानि स्वेषु सद्ग्रन्थेषु स्पष्टं समुल्लिख्यन्ते स्म ।

## (घ) बौधायनश्रौतसूत्रस्य भाष्यकाराः

अधुना बौधायनश्रौतसूत्रस्य किमपि भाष्यं कापि वृत्तिः कोऽपि प्रयोगग्रन्थो

---

१. बौ० श्रौ० २४-२६ ।

२. बौ० श्रौ० ४।११, ७।४, ११।२, १४।१५ ।

३. बौ० गृ० १।७।४७ ।

४. बौ० ध० १।५।१३, १।६।१६, १।७।८, ३।५।८, ३।६।२० ।

वा मुद्रितो नावलोक्यते। अस्य सूत्रस्य भवस्वाम्यादीनां[1] भाष्याणि हस्तलेखसूची-ग्रन्थानामुल्लेखैः सूच्यन्ते। दर्शपूर्णमासभागात्मके बौधायनश्रौतसूत्रसायणभाष्ये सायणाचार्येणापि भवस्वामिकेशवगोपालदामोदरादीनां मतानि नामाभिधानेनोपस्थाप्यन्ते। यथा—

१—'उभयार्थो मन्त्र इति भवः'—म ३५। पृ० १३१।

२—'तथा च गोपालः—अग्निहोत्रे हुते विप्रं भोजयित्वैव दम्पती।'—ग ७।

३—'तथा च दामोदरः—परिदानमपि तन्त्रं भवतीत्युपपन्नम्, अग्न्यभिमन्त्रणवचनात्।'—ग ३९। पृ० १४२।

४—'तच्च भवकेशवाभ्यां व्याख्यातम्'—ग ११२। पृ० २९९।

## (१) भवस्वामी—

बौधायनश्रौत्रसूत्रभाष्यकारेषु भवस्वामिनो विवरणं विश्रुतम्। केशवस्वामिना[2] भवस्वामिमतमाश्रित्य बौधायनप्रयोगसारः प्राणायि। तैत्तिरीयसंहिताभाष्यकारेण भट्टभास्करमिश्रेण स्वकीये भाष्ये नामोल्लेखान्न तस्य प्राचीनतैवोद्घाटिता, अपितु तस्य तैत्तिरीयभाष्यकर्तृत्वमपि संकेतितम्।

## (२) केशवस्वामी—

केशवस्वामिना बौधायनप्रयोगसारो बौधायनपद्धतिश्चालिख्यताम्[3]। अयमापस्तम्बश्रौत्रसूत्रभाष्यवृत्तिकृतापि समुद्धृतः प्राचीनः भाष्यकारोऽस्ति[4]।

---

१. तै० सं० भां०, पृ० ४ 'वाक्यार्थैकपराण्यधीत्य च भवस्वाम्यादिभाष्याण्यतो भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते।' कै० कै० I, पृ० ३७७-३७९। कै० कै० II, पृ० ८५, २१६। कै० कै० III, पृ० ८१। कै० सं० वे० II, पृ० २१६-३७६।

२. भ० वे० इ० II, पृ० २१९-२२५।

३. न्यू० कै० कै० V, पृ० ७१।

४ न्यू० कै० कै० VI, पृ० १२३।

(३) गोपालः—

गोपालेन बौधायनश्रौतसूत्रस्य कारिकाग्रन्थो व्यरचि । गोपालकारिकाया बहून्युद्धरणानि सायणभाष्येऽधिगम्यन्ते[1]।

(४) नारायणः—

केशवस्वामिना[2] समुदाहृतः प्रयोगकारो नारायणः कोऽपि प्राचीनः प्रयोगकारः प्रतीयते ।

(५) दामोदरः—

सायणाचार्येण बहुधोद्धृतेन दामोदरेण को ग्रन्थः प्रणीत इति निर्भ्रान्तं वक्तुं न शक्यते ।

(६) देवस्वामी—

आश्वलायनश्रौतसूत्रभाष्यकारेण देवस्वामिना बौधायनश्रौतसूत्रभाष्यमपि प्राणीयत । भाष्यकारोऽयमाश्वलायनवृत्तिकारेण नारायणगार्ग्येण[3] हेमाद्रिणा माधवाचार्येण पुरुषोत्तमेन चोल्लिख्यते[4]।

(७) शेषनारायणः—

शेषवासुदेवात्मजेन शेषनारायणेन बौधायनश्रौतसर्वस्वबौधायनाग्निष्टोमप्रयोगादयो ग्रन्था व्यरच्यन्त[5]।

---

१. ग्रन्थकाराणां सूची द्रष्टव्या ।

२. म० वै० इ० II, पृ० २१९-२२५, 'नारायणादिभिः प्रयोगकारैरेकं पक्षमाश्रित्य दर्शपूर्णमासादीनां प्रयोग उक्तः ।'

३. आ० श्रौ० गा० पृ०, १ 'आश्वलायनसूत्रस्य भाष्यं भगवता कृतम् ।
देवस्वामिसमाख्येन विस्तीर्णं सवनाकुलम् ।'

४. कै० कै० I, पृ० २६० ।

५. कै० कै० I, पृ० २९२ ।

(८) महादेव वाजपेयी—

श्रौतसूत्रव्याख्याकारेषु महनीयकीर्तिना महादेववाजपेयिना सत्याषाढश्रौत-सूत्रस्य प्रयोगवैजयन्तीव्याख्यया सह बौधायनश्रौतसूत्रस्य श्रौतचन्द्रिका 'सुबोधिनी' इत्यभिख्या व्याख्या विरचिता। व्याख्येयं भवस्वामिमतमनुगच्छति[1]।

अपि च, बौधायनश्रौतसूत्रव्याख्याकारेषु शेषगोविन्दबालदीक्षित-देववीरघुनाथ अनन्तदेव-नवहस्त-वेंकटेश्वरदीक्षित-शेषभवाय्य-वैद्यनाथ पायगुण्डे-देवभट्ट-देवभद्र-द्वारिकानाथ-वासुदेव-वासुदेवदीक्षित-भास्कर-भास्कररायदीक्षित-महादेवदीक्षित-मयूर-वाहरंगनाथदीक्षित-रुद्रदेव-वेंकटेश्वर-यज्ञेश्वर-गोविन्दपुरुषोत्तम-त्र्यम्बकभट्टढुण्ढिरा-जरुद्रनायकश्रीकरादीनामपि नामानि गृह्यन्ते यैं बौधायनश्रौतसूत्रस्य समग्रतोऽसमग्रतो वा व्याख्यानं विहितं वृत्तिर्वा विरचिता, कारिकाः वा कल्पिताः, प्रयोगो वा प्रणीतः, पद्धति र्वा प्रथिता[2]।

## (ङ) सायणाचार्यः

वेदभाष्यकारेषु सुप्रथितयशसः तैतिरीयशाखिनो बौधायनसूत्रीयस्य भरद्वाज-कुलमौक्तिकस्य श्रीमतो हृदयानन्दनवर्धनस्य सुकीर्तें मायणसुतस्य माधवाग्रजन्मनो भोगनाथानुजन्मः समधीतसकलनिगमस्य विद्यातीर्थमहेश्वरेष्टस्य पूर्वपश्चिमसमुद्रा-धीश्वरकम्पराजप्रधानामात्यस्य संगमराजशिक्षकस्य श्रीमद्राजाधिराजपरमेश्वरवैदिक-मार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य 'वेदार्थप्रकाशकस्य विजितारातिव्रातवीरश्रीहरिहरक्षमाधीशसाम्राज्यलक्ष्मीधरस्य कम्पणमायणशिङ्गणसदृशसुपुत्रजन-कस्य सुभाषितनिध्यादिविविधग्रन्थरत्नसुधास्रोतोभूतस्य सायणाचार्यस्याभिधानं केन सुधीमता न सुविदितं स्यात्[3]।

---

१. श्रौ० कौ०, प्रस्ताविकम्, पृ० १३।

२. कै० कै० I, पृ० ३७७-३७९। कै० कै० II, पृ० ८५। कै० कै० III, पृ० ८१। कै० सं० वे० II, पृ० २१६-३७६ I बौ० श्रौ० III, भूमिका। आप० श्रौ०—आपस्तम्बकल्पपरिचयः, पृ० ६।

३. सु० सु०, भूमिका, पृ० ६। वे० भू०, प्रस्तावना, पृ० ८-९। मा० सा०, पृ० ६०-७४। ऋ० भा० I, पृ० ७६६। ष० ब्रा०, पृ० २२५।

भाष्यकारेण सायणाचार्येणाधोनिर्दिष्टाः वैदिकाग्रन्था यथाक्रमं सुव्याख्याता—

१—तैत्तिरीयसंहिता।
२—तैत्तिरीयब्राह्मणम्।
३—तैत्तिरीयारण्यकम्।
४—ऐतरेयब्राह्मणम्।
५—ऐतरेयारण्यकम्।
६—ऋग्वेदसहिता।
७—सामवेदसंहिता।
८—ताण्डयब्राह्मणम्।
९—षड्विंशब्राह्मणम्।
१०—सामविधान ब्राह्मणम्।
११—आर्षेयब्राह्मणम्।
१२—देवताध्यायब्राह्मणम्।
१३—उपनिषद्ब्राह्मणम्।
१४—संहितोपनिषद्ब्राह्मणम्।
१५—वंशब्राह्मणम्।
१६—काण्वसंहिता।
१७—अथर्ववेदसंहिता।
१८—शतपथब्राह्मणम्[1]।

वेदभाष्यैः सममेव सकलनिगमागमपारावारीणेन सायणाचार्येण सुभाषितसुधानिधिप्रायश्चित्तसुधानिध्यलंकारसुधानिधिमाधवीयाधातुवृत्तिपुरुषार्थसुधानिध्यायुर्वेदसुधानिधियज्ञतन्त्रसुधानिधिप्रभृतयो ग्रन्था विरचिताः[2]। सायणाचार्येण वेदभाष्याणां व्याख्यानात्प्राक्—

'ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात्।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः[3]॥'

इति भाष्येषु बहुत्र वचनात् खलु माधवाचार्यस्य कृतिषु प्रसिद्धे पूर्वोत्तरमीमांसाव्याख्यानद्वयेऽपि महनीयाग्रजस्यातीवसाहाय्यं व्यधायीति सुप्रतीयते। अन्येपि च शताधिका ग्रन्थाः सायणाचार्यस्य नाम्नाभिधीयन्ते[4]।

---

१. सा० मा०, पृ० ९२-१०७। तै० आ०, पृ० २। ऋ० भा० I, पृ० ३१। ष० ब्रा० पृ० १। पृ० १। सा० ब्रा० पृ० २। व० ब्रा०, पृ० १९६। वे० भू०, पृ० १०५, १२०।

२. वे० भू०, प्रस्तावना, पृ० ११-१२। सु० सु०, भूमिका, पृ० १३। सा० भा०, पृ० ८३-९१।

३. वे० भू०, पृ० ६३, १०३, १०९। दे० ब्रा०, पृ० १। व० ब्रा०, पृ० १९५।

४. कै० कै० I, पृ० ७११-७१२।

## (च) सायणाचार्यस्य देशः कालश्च

भारतवर्षे दक्षिणभारते तुंगभद्रातटे संस्थापिते विद्यानगरे[1] विजयनगरे वा तद्भूपतीनां कम्पराजसंगमराजबुक्कप्रथमहरिहरद्वितीयादीनामाश्रयदातृत्वे श्रीसायणाचार्यः स्वजीवनं वैदिकधर्मसंस्कृतिसाहित्यसंरक्षणसंवर्धनादिषु समर्पयामास। हरिहरप्रथमबुक्कप्रथमहरिहरद्वितीयानां विजयनगरराज्यलक्ष्मीपतीनां शासनकालः षट्त्रिंशदुत्तरत्रयोदशशतकाच्चतुरधिकचतुर्दशशतकं ( १३३६-१४०४ ) यावदितिहासशास्त्रपारंगतैः पण्डितैर्मन्यते[2]। अतएव सायणाचार्यश्चतुर्दशशतके सकललोकललामभूतां भारतवसुन्धरां स्वजन्मनालञ्चकारेति निर्णीतमेव। तस्य जीवनकालः षोडशोत्तरत्रयोदशशतकादासप्ताशीत्यधिकत्रयोदशशकात् (१३१६-१३८७) बभूव[3]।

## (छ) प्रकृतग्रन्थस्य रचयिता

पुराकालाद् ग्रन्थस्य प्रणयने त्रिधा प्रवृत्तिर्दृश्यते अन्यप्रेरणया वात्मप्रेरणया वा ग्रन्थकर्मण्यन्यान् प्रयोज्य तन्मार्गेण वा। सायणाचार्येणकृताः ग्रन्थाः अपि त्रिधा वर्तन्ते। प्रथमे विभागे गुरुकल्पस्य माधवाचार्यस्य प्रेरणया लिखिताः 'माधवीया' इति नाम्ना विख्याता ग्रन्थाः सन्ति, द्वितीये विभागे सायणस्य नाम्नैव सुप्रथिताः सायणेनैव प्रणीताः, तृतीये च विभागे सायणस्य नाम्ना सुविदिता अपि तत्प्रेरणया तन्निदेशेन वान्यैर्विरचिताः। भाष्यमिदं तृतीयां विधां भजते।

तत्त्वविश्लेषणविचक्षणैर्विदग्धैस्तत्संहिताभाष्याणां कर्तृत्वेऽपि संशीयते[4]। डा० बे० रामचन्द्रशर्मणा[5] वंशब्राह्मणभाष्यं सायणचार्येण विरचितमिति नैवामन्यत। अधुना शतपथब्राह्मणस्याविकलं भाष्यं नाधिगम्यते। सायणस्य नाम्ना सुविदिते

---

१. डे० सु० पृ० २७२-७३।

२. डे० सु० पृ० ८३२।

३. मु० सु० प्रस्तावना पृ० २। वे० भू० प्रस्तावना पृ० ९-१०। मैक्० हि० लि० पृ० २७७। मा० धा० भूमिका पृ० १४-१५।

४. मैक्० हि० लि० पृ० २७७।

५. दे० सं० व० भूमिका पृ० २२।

भाष्येऽस्मिन् प्रथमकाण्डस्य तृतीयाध्यायस्योपसंहारे पुष्पिकाभागे सायणिः शिङ्गणार्यः[1] संस्तूयते। कोऽयं सायणिः शिङ्गणार्यः ? सायणस्य त्रिषु पुत्रेषु शिङ्गणोऽपि श्रूयते। सायणाचार्येण तद्भाष्ये तदात्मजस्य तादृशी दानस्तुतिर्नोचिता। स्तुतिस्त्वेवं गच्छति—

'ब्रह्माण्डं गोसहस्रं कनकहयतुला पूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पंचसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा विलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडोराजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात् सिङ्गणार्यः ॥'

अनया शिङ्गणाचार्यस्य दानस्तुत्यास्य ग्रन्थस्य तत्पित्रा सायणाचार्येण प्रणीतत्वं विप्रतिपद्यते। स्तुतिरियमस्य प्रणेतारं सायणाचार्यस्य पुत्रं शिङ्गणाचार्यं विज्ञापयति। वैदिकेषु विषयेषु शिङ्गणाचार्यस्य वैदुष्यं विदितमेव[2]। पुत्रेण प्रतिष्ठितकीर्तेः प्रख्यातपाण्डित्यस्य पितुरभिधानेन ग्रन्थप्रणयनस्य किमप्यनौचित्यमपि नास्ति। सायणप्रथितवेदभाष्येषु रचनाक्रमेणान्तिमत्वाच्च हरिहरद्वितीयस्य शासनकाले लिखितत्वाच्चाप्यस्य कर्तृत्वकीर्तिः सायणसुतं शिङ्गणाचार्यमेव वृणुते।

तस्यैव शिङ्गणाचार्यस्य सुतेन वेदभाष्यकृतः सायणाचार्यस्य पौत्रेण 'सायणा-

---

१. श० ब्रा०, प्रथमकाण्डम्, १३२।

२. वे० भू०, प्रस्तावना, पृ० ७। सु० सु०, भूमिका, पृ० ८।

'वत्स व्यञ्जय कम्पणव्यसनितां संगीतशास्त्रे तव
प्रौढं मायणगद्यपद्यरचनापाण्डित्यमुन्मुद्रय।
शिक्षां दर्शय शिङ्गणक्रमजटाचर्चासु वेदेष्विति
स्वान् पुत्राननुपलालयन् गृहगतस्संमोदते सायणः।'

—अलंकारसुधानिधौ।

चार्यः' इति पदेऽभिषिक्तेन सायणाचार्येण प्राचीनतमबौधायनश्रौतसूत्रस्येदं भाष्यं व्यलेखीति ग्रन्थस्योपक्रमेणैव विज्ञायते—

'यः सायणाचार्यपदाभिषिक्तः श्रीशिङ्गणाचार्यसुताग्रगण्यः ।
प्रसन्नगंभीरमतिः स्फुटार्थं बौधायनं कल्पमधा विधास्यन् ॥'

'व्याख्याय विद्यास्थानानि पुराणादीनि साम्प्रतम् ।
व्याचष्टे सायणाचार्यः कल्पं बौधायनं सुधीः ॥'

अपि च, दाक्षिणात्यानां परम्परायां पौत्रः पितामहस्य नाम्नाभिधीयते[1]। अतः सायणाभिधानेन सुविदितोऽयं ग्रन्थकृद्वस्तुतः सायणाचार्यस्य पौत्र एवास्ति ।

## (ज) भाष्यस्य रचनाशैली वैशिष्ट्यञ्च

सत्स्वपि भवस्वामिदेवस्वाम्यादीनां भाष्येषु किमर्थं बौधायनश्रौतसूत्राख्यं भाष्यमिदं व्यरच्यत ? भवन्तु नाम गम्भीरार्थसमन्वितानि सूत्रार्थप्रकाशकानि भाष्याणि, किन्तु तत्र सूत्रपदानां वास्तविकानि रहस्यानि नैव विशदीकृतानि, तेषां युक्तियुक्तानि बौधायनाचार्यसम्मतानि द्वैधकर्मान्तसामंजस्यसमुपेतानि सुव्यवस्थित-प्रयोगमण्डितानि च व्याख्यानानि नैवोद्भावितानि । अन्यच्चानेकानि सूत्राणि तेषु भाष्येषु व्याख्यानं विनैव स्पष्टानीति नैव स्फुटीकृतानि । तथा विधान्यखिलानि सूत्राणि ग्रन्थकृतात्र युक्तिपूर्वकं व्याख्यातानि । तत्र तत्राचाचार्यस्य मतानि द्वैध-कर्मान्तसूत्रादिभ्य उद्धृत्योद्धृत्य प्रदर्शितानि ।

भाष्येऽस्मिन् प्रथमं सूत्रं प्रत्यक्षरमुद्ध्रियते ततश्च तदर्थो विव्रियते । पूर्वाचार्याणामनभितानि मतानि सोदाहरणं स्वपक्षसंस्थापनपूर्वकं निरस्तीक्रियन्ते । मतिमतां वरेण सायणाचार्येण विस्पष्टं तर्कसंगतमाचार्यसमीहितं शाखाऽविरुद्धं स्वराद्धान्ताः प्रतिपाद्यन्ते । समधीतसकलनिगमागमपुराणादिशास्त्रेण भाष्यकारेण शास्त्रान्तराणां पाण्डित्यं प्रतिपदं सहजं प्रतिष्ठाप्यते । मीमांसायां, पदशास्त्रे, निर्वचनशास्त्रे धर्मशास्त्रे, पुराणादिषु च तद्वैदुष्यं पदे पदे प्रतिभासते ।

---

१. यथा सायणस्य द्वितीयः पुत्रः तत्पितामहस्य नाम्ना 'मायणः' इत्युच्यते ।

गूढार्थप्रतिपादने श्रौतसिद्धान्तानां सम्पादने च तस्य नवनवोन्मेषशालिनी प्रतिभा कथमपि नावसीदति, अपि तु नवार्थमेव प्रसूते।

प्रसन्नगम्भीरार्थमण्डितापि तस्य भाषा नीरसजटिलसूत्राणां व्याख्यानावसरेऽपि दुर्बोधत्वं क्लिष्टत्वं न भजते। सूत्रेषु प्रतिपाद्यमानानां यज्ञानां रहस्यान्युद्घाटयितुं सर्वथा सुसमर्था सुसरला सुगमावबोधा च तस्य भाषा स्वपितामहस्य सुमनोहरां वेदार्थप्रतिपादनसरणिमेवानुसरति, तद्व्याख्यापद्धतिमेव प्रथयति, तद्भाषाभावगाम्भीर्यं च संस्मारयति। भाष्येऽस्मिन् न केवल सूत्रकारवचनानां विश्लेषणं भाष्यकारमतानां मीमांसास्वनुष्ठेयकर्मणां च विवेचनम्, अपि तु प्रयोगोऽपि सविस्तरं वर्ण्यते। सायणात् पूर्वं केनापि भाष्यकारेण नैतादृशं सर्वाङ्गसम्पन्नं विशदव्याख्यानोपेतं विस्तृतप्रयोगक्रमपरिपूर्णं विनियोगादिवैशिष्ट्यविलसितं सूत्रतात्पर्यविवेचकं सुप्रसन्नगुणोपेतया सुगीर्वाणवाण्या च निबद्धं भाष्यं व्यरचि। अतो भाष्यमिदं पूर्वेषां सर्वेषां सूत्रभाष्यकृतां भाष्याणि स्वविपुलवैशिष्ट्यविभवैर्नितरामतिशेते।

## दर्शपूर्णमासयज्ञः

**(क) यज्ञस्य प्रकाराः —**

भारतीयसंस्कृतौ यज्ञशब्देन सर्वाणि विधेयानि कर्माणि गृह्यन्ते[1]। यद्यपि मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानं यज्ञपदेनाभिधीयते तथापि यज्ञहोमादीनां भेदो वर्तते। सत्याषाढश्रौतसूत्रस्य प्रयोगवैजयन्तीव्याख्याकारेण महादेवेन यज्ञहोमदानशब्दानां विषयार्थ एवं प्रत्यपादि 'यजतिशब्दोऽप्रक्षेपदानमात्रे, तत्रैव सप्रक्षेपे जुहोतिशब्दः, पात्रस्वत्वापादनापवर्गे ददातिशब्दः। होमदानयोः प्रक्षेप-परस्वापादनयोरपवर्गो यागस्य दानमात्र इति न संकरः[2]।' अथापि यज्ञशब्दः 'तस्माद् यज्ञशब्दोऽपि यागापरपर्यायचोदिते वषट्कारप्रदानरूप एव कर्मणि वर्तते, नान्यत्र[3]' इत्यादिना विस्पष्टीकृतः।

---

१. स० श्रौ० I, पृ० २८।

२. तत्रैव, पृ० ६।

३. तत्रैव, पृ० १३।

पाकयज्ञहविर्यज्ञसोमयज्ञभेदेन यज्ञस्य त्रिविधत्वम्। त्रिविधोऽपि यज्ञः सप्त सप्त भेदेनैकविंशतिसंस्थो भवति। तथा च बौधायन श्रौतसूत्रे—'कियत्यः पाकयज्ञसंस्थाः कियत्यो हविर्यज्ञसंस्थाः, कियत्यः सोमसंस्था इति। हुतः[1] प्रहुतः[2] आहुतः शूलगवो[3] बलिहरणं प्रत्यवरोहणमष्टका होम[4] इति सप्त पाकयज्ञसंस्था इति। अपरिमिता उ हैके ब्रुवते। यच्च किं चान्यद् विहाराद्यते सर्वास्ताः पाकयज्ञसंस्था इति। अथ हविर्यज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य इति। सौत्रमणिमु हैके ब्रुवते। अथ सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थयः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः।' (बौ० श्रौ० २४।४) पाकयज्ञा गृह्यसूत्रेषु वर्ण्यन्ते इतरौ श्रौतसूत्रेषु।

प्रकृतिविकृतिभेदेन यज्ञस्य द्विविधत्वमपि भवति। प्रकृतियागे सकला विधय उच्यन्ते, विकृतिषु तद्विशेष एवोपदिष्यते, अन्ये च विधयस्तत्प्रकृतियागाद् गृह्यन्ते[5]।

ऋत्विक्चतुष्टयसम्पद्यमानो यज्ञ इष्टिसंज्ञयाप्यभिधीयते[7]। इष्टिर्यज्ञोयागश्चेति पदत्रितयमपि यजतिनैव निष्पद्यते[8]। अतस्तत्र मूलार्थत्वेन भेदो नास्ति। तथा

---

१. बौ० गृ० १।१।३ 'तत्र यद्धूयते स हुतो यथैतद्विवाहस्सोमन्तोन्नयनं चेति।'

२. बौ० गृ० १।१।५७ 'अथ यद्धुत्वा दीयते स प्रहुतो यथैतज्जातकर्म चौलं चेति।'

३. तत्रैव १।१।७ 'अथ यद्धुत्वा दत्वा चादीयते स आहुतः यथैतदुपनयनं समावर्तनं चेति।'

४. तत्रैव १।१।८ 'अथ यच्छूलेष्वपनीय गव्यानि श्रपयन्ति स शूलगवः।'

५. बौ० गृ० १।१।१०-१२ 'अथ यत् गृह्याभ्यो देवताभ्योऽन्नं सम्प्रकिरन्ति तत् बलिहरणम्। अथ यदृतौ ऋतुं प्रत्यवरोहन्ति तत् प्रत्यवरोहणम्। अथ यदेकाष्टकायामन्नं क्रियते सोऽष्टकाहोम इति।'

६. तै० सं० भा०, पृ० ८ 'प्रकर्षेणाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। कृत्स्नांगविषयत्वमुपदेशस्य प्रकर्षः। विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते।'—सायण। वै० को० पृ० ३९३-९४।

७. श्रौ० नि०, पृ० १-१। हि० ध०, भा० २-ख०, २. पृ० १००९।

८. मा० धा०, भ्वादिगणः ७२४, पृ० २९५-९६। य० मी०, पृ० १-११२।

सत्यपि यागेष्टिशब्दयोर्नियतप्रयोगे कर्त्तव्ये सोमयागानामपेक्षया दर्शपूर्णमासादीनामिष्टिपदव्यपदेशत्वे तासां लघुसाध्यमेवात्र हेतुः प्रतीयते ।

## (ख) हविर्यागेषु दर्शपूर्णमासयज्ञस्य महत्वम्

सप्तविधहविर्यागेषु दर्शपूर्णमासयोः प्राथम्यं वर्तते। दर्शपूर्णमासौ सर्वासामिष्टीनां प्रकृतिः। बौधायनः स्पष्टमुपदिशति—'दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिः' (बौ० श्रौ० २४।५) तैत्तिरीयसंहितायां सर्वेभ्यो यागेभ्यो निरपेक्षत्वाद्दर्शपूर्णमासेष्टिरादावाम्नाता। तथा चोक्तं भाष्यकारप्रवरेण सायणाचार्येण प्रकृतिस्त्रिविधा अग्निहोत्रमिष्टिः सोमश्च। त्रिष्वप्येतेषु अन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम्। तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणादिषु दर्शपूर्णमासेष्टिसापेक्षत्वात् न पूर्वभावित्वं युक्तम्। इष्टेस्तु सोमयागनैरपेक्ष्यात् सोमात् प्राचीनत्वं युक्तम्। यद्यप्यग्निहोत्रस्य स्वरूपेऽङ्गेषु नास्त्यन्यापेक्षा, तथाप्यग्निसिद्ध्यपेक्षत्वात्, आहवनीयाद्यादीनां च पावमानेष्टिसाध्यत्वात्, पवमानेष्टीनां दर्शपूर्णमासविकृतित्वात् परंपरयाग्निहोत्रस्य दर्शपूर्णमासापेक्षास्तीति प्रथमभावित्वं न युक्तम्। दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति-चेत्। मैवम्। नाधानमात्रेणाग्नयः सिध्यन्ति किन्तु पवमानेष्टिभिरपि। ताश्चेष्टयः दर्शपूर्णमासेष्टिविकृतित्वात् साक्षात्पवमानेष्टीरपेक्षन्ते। अतो निरपेक्षत्वात् दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या[1]।'

## (ग) दर्शपूर्णमासयज्ञस्य संक्षेपेण विवेचनम्

(१) शब्दार्थः—दर्शश्च पूर्णमासश्चेति दर्शपूर्णमासौ[2]। आपस्तम्बश्रौतसूत्रस्य सूत्रदीपिकावृत्तिकारेण रुद्रदत्तेन[3] दर्शपूर्णमासावेवं व्याख्यातौ-'न दृश्यतेऽस्मिश्चन्द्रमा इति विपरीतलक्षणया दर्श इत्यमावास्योच्यते। न त्वियमन्वर्थसंज्ञेति चन्द्रदर्शनस्य सर्वतिथिसाधारण्यात्। न च सूर्येण संगतो दृश्यत इति विशेष्टव्यं सूर्यसंगतेर-

---

१. तै० सं० भा०, पृ० ८।

२. आप० श्रौ० I, धूर्तस्वामिभाष्यम्, पृ० ६।

३. द० प्र०, सूत्रदीपिका, पृ० १४२।

मावास्याशब्दप्रवृत्तिहेतोर्दर्शनात् । अमा सह वसतोऽस्यां चन्द्रार्काविति वाच्यम् । मासः चन्द्रः । स पूर्यते यस्मिस्तदहः पूर्णमासः । दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ । इह च दर्शपूर्णमासाख्यकालचोदितानामाग्नेयादिप्रधानानां यौ विद्वद्वाक्यानुवन्दितौ समुदायौ य एवं विद्वान् पौर्णमासीम्, एवं विद्वानमावास्यामिति[1] तयोरपि तत्तत्काल-संबन्धेन दर्शपूर्णमासाविति नामनी । तत्र पूर्णमासस्य प्रयोगतः प्रथमत्वेपि दर्शशब्द-स्याल्पाच्तरत्वात्पूर्वनिपातः ।'

(२) कालः—दर्शपूर्णमासयज्ञः पौर्णमासीमुपक्रम्यामावस्यायां संस्थीयते[2] । दर्शपूर्णमासयज्ञस्य मुख्यः कालः प्रतिपत्पंचदश्योः सन्धिः । चन्द्रादित्ययोः परोविप्रकर्षः पौर्णमासी, तयोः परः सन्निकर्षोऽमावस्या । तथा चोक्तं नारायणगार्ग्येण 'दर्शपूर्णमास-शब्दौ यथा सङ्ख्येन सूर्याचन्द्रमसोरत्यन्तसन्निकृष्टविप्रकृष्टदेशस्थितलक्षणवचनौ, यद्यो-गादहोरात्रवचनौ, तद्योगादेव कर्मवचनौ[3] ।' यागोऽयं दिनद्वयेऽनुष्ठीयते । पंचदशी-मुपोष्य प्रतिपदि प्रधानयागः संपद्यते । पौर्णमास्यां वामावास्यां वा यदा प्रतिपद्यपरा ह्णात्पूर्वं भवेत् तदा पूर्वेद्युरुपवसथकालो भवति, न तु पर्वणि । अत्र खलु प्रधानयागा-नुष्ठानं पर्वण्येव संपद्यते[4] । अत उपवथकालः सर्वदा चतुर्दश्यां वा भवति, कदाचि-त्तिथि क्षयात् प्रतिपद्यपि, परं कदाचन त्रयोदश्यां वा सप्तदश्यां (द्वितीयायां) वा न भवति । तथा खलु स्वयमेव विविनक्ति बौधायनः[5] 'अथायं चन्दमाः षोडशकलः । तस्य पंचदशभिः पक्षोऽभिविहितो भवति । षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति । स यदेतानि यज्ञे क्रियन्ते तेनैषा संम्रियन्ते । अथोपवसथस्थानानि चतुर्दशी षोडशी । न तु त्रयोदशी सप्तदशी भवतः ।'

(३) द्विविधत्वम्—दर्शपूर्णमासौ द्विविधौ नित्यौ काम्यौ चेति । तत्र प्रति दर्शं प्रतिपौर्णमासं च यावज्जीवं पुरुषेणानुष्ठीयमानत्वाच्चाननुष्ठाने प्रत्यवायोत्पत्ति-

---

१. तै० १।६।९।२ ।

२. बौ० श्रौ० २०।१, २४।२० । य० प्र०, पृ० १६-१८ ।

३. आ० श्रौ०, गार्ग्यनारायणीयावृत्तिः १।३ ।

४. आप० प० २।१९-२।२५ (द० प्र०, पृ० ६१-६४) । स० श्रौ० I, पृ० ६२-६६ । 'पूर्वाह्णमध्यमेवापि यदि पर्व समाप्यते । तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते ।'

५. बौ० श्रौ० २४।२१ ।

वचनाच्च नित्यत्वम् । तत्तत्फलमुद्दिश्यानुष्ठानविधानाच्च काम्यत्वम् । नित्यौ यावज्जीवं पर्वस्वनुष्ठेयौ त्रिंशतं वर्षाणि वा[1] । काम्यौ तु यदा फलेच्छा तदा विहिताविगीतकाले सकृदनुष्ठेयौ[2] ।

(४) हवींषि—दर्शपूर्णमासयोः प्रत्येकस्मिन् त्रीणि त्रीणि हवींषि भवन्ति आग्नेयोऽष्टाकपालः[3], ऐन्द्रं दधि ऐन्द्रं पय इति दर्शे । आग्नेयोऽष्टाकपालः, आज्येन प्राजापत्य उपांशुयाजः, आग्नीषोमीय एकादशकपाल इति पौर्णमासे[4] ।

(५) कृत्यानि—अत्र बौधायनश्रौतसूत्रमनुसृत्य सङ्क्षेपतः दर्शपूर्णमासयागानुष्ठानमुपवर्ण्यते । अनुष्ठानमिदं बौधायनश्रौतसूत्रस्य प्रथमप्रश्ने सप्तदशष्वध्यायेषु समाम्नातम् । अत्रानुच्छेदा अध्यायक्रममनुवर्तन्ते ।

(१) उपवसथीये दिवसे सपत्नीको यजमानः कृतस्नानादिनित्यक्रियः 'स्वर्गकामः पौर्णमासेनामावास्येन वा हविषा यक्ष्ये' इति सङ्कल्प्य, ऋत्विजो वृणीयात् । वृतोऽध्वर्युरग्नीनन्वाधाय, वाचंयमः प्राङ् वोदङ् वा गत्वा पलाशशाखामाच्छिद्य तया वत्सान् मातृभ्यः पृथक् कृत्य, यजमानं च वीक्ष्य शाखामनसि वोत्तरार्धे वाग्न्यागारस्योद्गूहेत् ।

(२) ततोऽसिदमश्वपशुं वादाय, तं गार्हपत्ये प्रतितप्य, आहवनीयमभिप्रेत्य वेदिं च प्रत्यवेक्ष्य यत्र बहिर्वेत्स्यन् मन्यते तां दिशं गत्वा, तत्र यावन्तमलं प्रस्तराय तावन्तं दर्भस्तम्बं परिगृह्य, उन्मार्जनाच्छेदनाभिमर्शनप्रत्यभिमर्शनलवनप्रस्तरनिधानशुल्वावेष्टनप्रस्तरसंभरणसन्नहनग्रन्थनग्रन्थ्यूपगूहनोद्यमनादीनि विधाय, एत्योत्तरेण गार्हपत्यमनघः सादयित्वा यत्र गुप्तं मन्यते तत्र निधाय, ततः तूष्णीं परिभोज-

---

१. स० I, पृ० ५७ । आप० श्रौ० I, पृ० २९६ ।

२. य० प्र०, पृ० १७-१८ ।

३. 'अष्टाकपाल इति त्वष्टसु कपालेषु संस्कृतः संस्कृतं भक्षा इति सूत्रेणाण् प्रत्यये तस्य लुकि च सति निष्पन्नः—स० श्रौ० I, पृ० ६० ।

४. तै० सं० भा०, पृ० १० । स० श्रौ० I, पृ० ५९-६० आप० प० २।३०-३४ ।

नीयानि लूत्वा, तथैव शुल्वं कृत्वैकविंशतिदारुमिध्मं संनह्य, वेदं कृत्वा प्रागुत्तरात्परिग्रहाद् वेदिं कुर्यात् । अथापराह्णेऽमावास्यायां पिण्डपितृयज्ञेन चरेत् ।

(३) ततः शाखायाः पर्णानि प्रच्छिद्याग्रेण गार्हपत्यं न्युष्य, तामधस्तात् परिवास्य स्थविमदुपवेषाय जघनेन गार्हपत्यं निधाय, तच्छाखायाः प्रादेशमात्रं प्रमाय, त्रिवृच्छाखापवित्रं कृत्वा, सायमग्निहोत्रे हुते सांनाय्यपात्राणि दोहनं पवित्रं सांनाय्यतपन्यौ स्थाल्यौ च संस्तृतेषु तृणेषु संसाद्य, तानि पात्राणि प्रोक्ष्य, जघनेन गार्हपत्यमुपविश्योपवेषेणाङ्गारान् निरूह्य, तेष्वङ्गारेषु सांनाय्यतपनीमधिश्रित्य, तस्यां शाखापवित्रं निधाय, वाचंयम आयतीर्गाः प्रतीक्ष्य, दोह्यमानां गामनुमन्त्र्य, तिसृषु दुग्धासु विसृष्टवागुत्तरा दोहयित्वा, दोहनेऽप आनीय संक्षालनकुम्भीमानीय, तप्त्वा, शीतीकृत्य, यावता दध्ना मूर्छयिष्यन् मन्यते तावताऽऽतच्य, ततोऽग्निहोत्रोच्छेषणमभ्यातच्य, उदन्वता च कंसेन चमसेन वा पिधाय गुप्तमुपरि निदध्यात् ।

(४) प्रतिपदि, प्रातर्हुतेऽग्निहोत्रे हस्तौ सम्मृश्याग्नीन् परिस्तीर्य, अग्रेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्वमधोमुखानि यज्ञायुधानि संसाद्य, ब्रह्माणं दक्षिणत उपवेश्य पृष्ठ्यां स्तृत्वा बर्हिषः पवित्रे कृत्वा, तेऽनुमार्ज्य, अग्रेण गार्हपत्यमुपविश्य प्रणीताप्रणयनं कंसं चमसं वा याचित्वा, अपः प्रणयनाय ब्रह्मणानुमतः प्रणीताप्रणयनं प्राणैः समं धारयन् उत्तरेणाहवनीयं दर्भेषु सादयित्वा, दर्भैः प्रच्छाद्य प्रदक्षिणमावृत्य, दक्षिणेनाग्निहोत्रहवणीं सव्येन शूर्पं चादाय, गार्हपत्ये प्रतितप्य, शकटस्योत्तरां धुरामभिमृश्य शकटमभिमन्त्र्य तद्दक्षिणमक्षपालिं क्रमित्वाऽभ्यारुह्य पुरोडाशीयान् प्रेक्ष्य धान्यगतं तृणं निरस्य, दशहोतारं व्याख्य, हविर्निर्वपाय यजमानमामन्त्र्य पवित्रवत्याऽग्निहोत्रहवण्या शूर्पे निरुप्य, शकटाभावे पात्र्यां पुरोडाशीयान् निर्वपेत् । यजमानेनानुज्ञातोऽग्नयेऽग्नीषोमाभ्यां च पौर्णमास्याम्, इन्द्राग्निभ्याममावास्यायामसंनयतः, इन्द्रायेति संनयतः, महेन्द्रायेति वा यदि महेन्द्रजी भवति । त्रिर्यजुषासकृत्तूष्णीमिति वारचतुष्टयं प्रत्येकं देवताभ्यो निरुप्य, निरुप्तानभिमृश्य, आहवनीयमीक्ष्य, एनानादाय, पत्योत्तरेण गार्हपत्यमुपसादयेत् ।

(५) सुच्यप आनीय पवित्राभ्यां निरुत्पूय, अद्भिरेवापः प्रोक्ष्य, पुरोडाशीयान् यथादेवतं त्रिःप्रोक्ष्य, पात्राणि प्रोक्ष्य, कृष्णाजिनमवधूय, प्रतीचीनग्रीवमुपस्तीर्य, तस्मिन्नुलूखलमध्यूह्य, तस्मिन् पुरोडाशीयानोप्य, मुसलमवधाय, हविष्कृदाहूय,

दृषदुपले वृषारवेणोच्चैः समाहत्य, अवहत्य, तुषान् कृत्वोत्तरतः, शूर्पमुद्यम्य, तस्मिन् पुरोडाशीयानुदुप्य, उदङ्पर्यावृत्य, परापूय, तुषानुपहत्य निरस्य, आचम्य, विविच्य, पात्र्यां तण्डुलान् प्रस्कन्द्य, तान् त्रिःफलीकर्त्तुमवहन्त्र्यै प्रदाय, तण्डुलप्रक्षालनमन्तर्वेद्युत्करे वा निनीय, एतस्मिन् काले प्रातर्दोहं धेनूर्दोहयेत्, न चातञ्च्यात्।

(६) अथ प्रोक्तेषु त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूय, उपस्तीर्य, तस्मिन् शम्यां निधाय, दृषद्युपलमध्यूह्य तस्यां पुरोडाशीयान् यथादेवतमध्युप्य, पिष्ट्वा कृष्णाजिने प्रस्कन्द्य शिष्टं पेषणायादिशेत्। यदि चरुं करिष्यन् भवेत् प्रागधिवपनात् पुरोडाशीयान् विभजेत्।

(७) अथ प्रक्षालितानि कपालानि जघनेन गार्हपत्यमष्टौ दक्षिणत एकादशोत्तरत उपसाद्य, धृष्टिमादाय, गार्हपत्यमभिमन्त्र्य, दक्षिणाङ्गारं निरस्य, अन्यं चावर्त्य दक्षिणेषां कपालानां मध्यमेनोपधाय, अङ्गारमधिवर्त्य पूर्वार्ध्यमुपधाय, अपरार्ध्यमुपधाय, दक्षिणार्ध्यमुपधाय, पूर्वमुपधिमुपधाय, अपरमुपधाय, द्वे उत्तरतः संसृष्टे उपधाय, अङ्गारैरधिवास्य चैतानि योगेन युञ्ज्यात्। एवमेवोत्तराणि कपालान्युपधाय पिष्टसंयनीया अपः तपेत्।

(८) अथ वाचंयमः पात्र्यां कृष्णाजिनात् पिष्टानि यथादेवतं समुप्य, पिष्टं जलेन संयुत्य व्यूह्य यथादेवतमभिमृश्य, पिण्डं कृत्वा, दक्षिणेषु कपालेषु तमधिपृच्य कूर्मप्रकारं प्रथयित्वा, आज्यस्थाल्यामाज्यं निरुप्योत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयेत्। एवमेवोत्तरं पुरोडाशमधिपृच्य, दक्षिणस्य पुरोडास्य त्वचं ग्राहयित्वा पर्यग्नि च कृत्वा तं श्रपयेत्। एवमुत्तरं श्रपयित्वा, पात्रीसंक्षालनं प्रतप्यान्तर्वेदि हृत्वा प्रतीचीं त्रिषु लेखासु निनीय वेदमादाय तेन वेदिं त्रिःमार्जयेत्।

(९) अथ स्फयमादायाभिमन्त्र्य बर्हिषा संशाय, अन्तर्वेद्युदीचीनाग्रं बर्हिर्निधाय तस्मिन् स्फ्येन प्रहृत्य तदादाय हृत्वा वेदिं प्रत्यवेक्ष्य, उत्करे न्युप्य, द्वितीयं तृतीयं च तथैवादाय हृत्वा वेदिं प्रत्यवेक्ष्योत्करे न्युप्य, तूष्णीं चतुर्थं बर्हिषा सह हृत्वा पूर्वं परिग्राहं परिगृह्य दक्षिणतः पश्चादुत्तरतश्च, करणं जप्त्वा, स्फ्येन प्राचीं वेदिमुद्धत्य, त्रिर्हरणायाग्नीध्रं प्रेष्य, ब्रह्मणाऽनुमत उत्तरं परिग्राहं परिगृह्य, स्फ्येन प्रतीचीं वेदिं समीकृत्य, प्रोक्षण्याद्यासादनाय प्रेषमग्नीधे दत्वा सोऽध्वर्युः प्रोक्षणीरभिपूर्य ता स्फ्य-

उपनिनीय स्फ्युस्य वर्त्मनि सादयित्वोत्करे स्फ्यं निहत्य हस्तौ स्फ्यं च प्रक्षाल्य, दक्षिणमिध्ममुत्तरं बर्हिश्चोपसादयेत् ।

(१०) अथ दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानि समादाय गार्हपत्ये प्रतितप्य, स्रुवं वेदेन संभृत्य, अद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छेत् । तथैव क्रमेण जुहूमुपभृतं ध्रुवां प्राशित्रहरणं संमृज्य, अद्भिः संस्पर्श्य प्रतितप्य, उत्प्रयम्य, स्रुक्संमार्जनानि चाद्भिः संस्पर्श्य गार्हपत्येऽनुप्रहरेत् । आग्नीध्रः पत्नीं योक्त्रेण संनह्य, आचाम्य, गार्हपत्ये समिधामाधाप्य, तां गार्हपत्यमीक्षयित्वा, आज्यमवेक्षयेत् । अध्वर्युराज्यं गार्हपत्ये आहवनीये चाधिश्रित्य यजमानमवेक्षयित्वा, तदवेक्ष्य पवित्राभ्यां त्रिरुत्पूय, दक्षिणेन स्रुवं सव्येन जुहूमादाय वेदे प्रतिष्ठाप्य, तस्यामाज्यस्थाल्याः चतुर्गृहीतं गृहीत्वा संमृश्योत्प्रयच्छेत् । तथैवोपभृत्यष्टगृहीतं ध्रुवायां च चतुर्गृहीतं गृहीत्वा संमृश्य चोत्प्रयच्छेत् ।

(११) अथाज्यस्थालीं जघनेन वेदिं निधाय, प्रोक्षणीः प्रोक्ष्य, इध्मं विस्रस्य प्रोक्ष्य, वेदिं बर्हिश्च प्रोक्ष्य अतिशिष्टाः प्रोक्षणीर्निनीय, प्रस्तरं गृहीत्वा तं यजमानाय ब्रह्मणे वा प्रयम्य, ततः दर्भैस्तां वेदिं पुरस्तात् प्रतीचीं त्रिवृतमानतिदृश्नं संस्तीर्य, प्रस्तरपाणिः परिधीन् आहवनीयस्य पश्चिमदक्षिणोत्तरभागेषु यथाक्रमं परिधाय, ऊर्ध्वे समिधावाधाय, अन्तर्वेद्युदीचीनाग्रे विधृती सादयित्वा, तदुपरि प्रस्तरं प्रस्तरे जुहूमुपभृतं ध्रुवां च सादयित्वाऽऽज्यानि चाभिमन्त्रयेत ।

(१२) अथ दक्षिणेनाज्यस्थालीं सव्येन पात्रीं वेदं चादाय, पात्र्यां, दक्षिणस्य पुरोडाशस्याङ्गारानपोह्य विरजसं च कृत्वा तमभिघार्य, उद्वास्य, आज्येन सुसंतर्प्य, उपरिष्टादभ्यज्य, अधस्तादुपाज्य, कपालान्युद्वास्य संख्याय संपरिगृह्यान्तर्वेद्यासादयित्वा मध्यतः पुरोडाशौ, दक्षिणतः शृतमुत्तरतो दधि चासादयेत् ।

(१३) अथेध्मात्समात् समिधमाददानः होतारं संप्रेष्य, होत्रा सामिधेनिसंज्ञकानामृचां पाठे क्रियमाणे प्रणवे प्रणवे समिधमभ्याधाय त्रिराहवनीयमुपवीज्य, अनूक्तासु सामिधेनीषु प्राजापत्यं तिर्यञ्चमाघार्य, त्रिःसंमार्जनायाग्नीध्रं प्रेषयेत् । आग्नीध्रः त्रिस्त्रिः परिधीन् संमृज्यात् । अध्वर्युर्यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणीत ।

(१४) अथ होत्राभिज्ञातोऽध्वर्युर्जुहूपभृतावादायात्याक्रम्याश्राव्य 'समिधो यज' इत्युक्त्वा वषट्कृते जुहुयात्। एवं पञ्च प्रयाजानिष्ट्वा संस्रावेणानुपूर्वं हवींषि चाभिधारयेत्, ध्रुवां दक्षिणं पुरोडाशं ध्रुवामुत्तरं पुरोडाशं शृतं दध्युपभृतं च। ततश्चतुर्वारमाज्यं गृह्णानः 'अग्नयेऽनुब्रूहि' इत्युक्त्वाऽत्याक्रम्याऽऽश्राव्य 'अग्निं यज' इत्युक्त्वा वषट्कृते उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग् जुहुयात्। एवं चतुर्वारमाज्यं गृह्णानः 'सोमायानुब्रूहि' इत्युक्त्वात्याक्रम्याश्राव्य 'सोमं यज' इत्युक्त्वा दक्षिणार्ध-पूर्वार्धे प्रतिमुखं प्रबाहुग्जुहुयात्। तत उपस्तीर्य 'अग्नयेऽनुब्रूहि' इत्युक्त्वा दक्षिणस्य पुरोडाशस्य पूर्वार्धादवदाय, ततोऽपरार्धाच्चावदायाभिघार्य प्रत्यङ्ङात्याक्रम्याश्राव्य 'अग्निं यज' इत्युक्त्वा वषट्कृते जुहुयात्। तथैव चतुर्वारमाज्यं गृह्णानः 'प्रजापतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैरुक्त्वात्यक्रम्याश्राव्य 'प्रजापतये' इत्युपांशु, 'यज' 'इत्यु-च्चैरुक्त्वा वषट्कृते हुत्वा, आचम्योपस्तीर्योत्तरपुरोडाशस्यापरार्धादवदाय, ततः पूर्वार्धादवदायाग्निवदभिधारणादि कृत्वा जुहुयात् 'अग्नीषोमाभ्याम्' इति 'इन्द्राय वैमृधाय' इति च पौर्णमास्याम्, 'इन्द्राग्निभ्याम्' इत्यमावास्यामसंनयतः, 'इन्द्राय' इति संनयतः, 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति। ततः उपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवदाय, ततः सकृद्ध्रुवाज्यात् सकृदुत्तरस्य पुरोडाशस्य सकृच्छृ-तस्य सकृद्दध्नोऽवदाय, द्विरभिघार्यावित्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ हुत्वा, मेक्षणमाहवनीये प्रहृत्य संस्रावेणाभिजुहुयात्। ततो जुह्वाऽप आनीय संक्षालनमन्तः परिधि निनीय, औपभृतमाज्यं सर्वश एव जुह्वां समानीय, यथायतनं स्रुचौ सादयित्वा, दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रं प्राशित्रमवदाय स्रुवदण्डेनाभिघार्य जघनेन प्रणीताः सादयित्वाद्भिः स्रुवदण्डं संस्पृश्यावदध्यात्।

(१५) अथेडोपहवनं कंसं वा चमसं वा याचित्वा तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धात् त्र्यङ्गुलं वा चतुरंगुलं वाज्येन संतर्प्य यजमानभागं निधाय, द्विर्ध्रुवाज्याद् द्विरुत्तरस्य पुरोडाशस्य द्विःशृतस्य द्विर्दध्नोऽवदायाभिघार्य होतुः प्रादेशिन्या उत्तमे पर्वणी अङ्क्त्वा जिघ्रेण तं होतारं भक्षयित्वा तद्हस्ते चतुर-वान्तरेडामवदायोपस्तीर्य द्विराधायाभिघार्य, होत्राभिज्ञातोऽध्वर्युः तद्दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं कुर्यात्। होत्राभिज्ञातो यजमानो होतारमीक्षमाणो वायुं मनसा ध्यात्वा, उपहूतायामिडायामग्नीधे षडवत्तमादध्यात्। होतृव्यतिरिक्ता यजमा-

मादयः तूष्णीं प्राश्नीयुः। ब्रह्मणे प्राशित्रं परिहृत्यान्वाहार्यं याचित्वोच्छिष्टं हविरुद्वासयेयुः।

(१६) अथाध्वर्युः प्रस्थानाय संप्रेषमुक्त्वा ब्रह्मणानुमतः तामवशिष्टां समिधं मध्यत आहवनीयस्याभ्यादध्यात्। आग्नीध्र इध्मसंनहनैः परिधीम् सम्मृज्य सकृदाहवनीयमुपवीज्य, तानीध्मसंनहनान्यद्भिः संस्पर्श्याहवनीयेऽनुप्रहरेत्। ततोऽध्वर्युः त्रीन् प्रतीचोऽनुयाजानिष्ट्वाप्रस्तरात्तृणं प्रच्छिद्य सूक्तवाकानुवाकपाठानन्तरं प्रस्तरं प्राञ्चं प्रहृत्य, ततोऽपात्तं तृणं, शंयुवाकपाठानन्तरं परिधीन् चानुप्रहृत्य, तान् संस्रावेणाभिहुत्वा शकटस्य धुर्युत्करे वा स्रुचौ विमुञ्चेत्। यजमानः सर्वत्रोद्देशत्यागानन्तरं यथादेवतमनुमन्त्रयते।

(१७) गार्हपत्यं परिक्रम्याध्वर्युर्गार्हपत्यस्योत्तरतः, होता दक्षिणत उपाविशेताम्। अध्वर्युर्वेदमुपभृतं कृत्वा चतुर्वारमाज्यं गृह्णानः 'सोमाय' इत्युपांशु 'अनुब्रूहि' इत्युच्चैरुक्त्वाश्राव्य प्रत्याश्रावितः 'सोमम्' इत्युपांशु 'यज' इत्युच्चैरुक्त्वा वषट्कृते जुहुयात्। एवं वषट्कृते त्वष्ट्रे, वषट्कारान्ते परिश्रिते देवानां पत्नीभ्यः, अग्नये गृहपतये च हुत्वाध्वर्युः पूर्ववद्धोतुरंगुलीपर्वणी अङ्क्त्वा जिघ्रेण भक्षयित्वा, आज्यस्यैव चतुर्हस्तेडां संपादयेत्। उपहूतायामिडायामग्नीधे षडवत्तमादध्यात्। होताग्नीध्रश्च प्राश्य मृज्याताम्। ततोऽध्वर्युः स्रुचि चतुर्गृहीतं गृहीत्वा प्रदक्षिणं पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहुयात्। पुनश्चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य फलीकरणं होमं हुत्वा होत्रे वेदं प्रदद्यात्। पत्नी योक्त्रं विमुंचेत्। अस्या अञ्जलौ योक्त्रमाधाय योदपात्रमानयेत्। पत्नी मुखं विमृज्यात्। तामाचाम्य समिधश्च गार्हपत्य आधापयेच्च निष्क्रमेच्च यथाप्रपन्नम्। अध्वर्युराज्यमादाय ध्रुवामाप्यायेत्। ततोऽध्वर्युरेव प्रायश्चित्तानि हुत्वा, यज्ञसमृद्धीर्हुत्वा, स्तीर्णदर्भमुष्टीराहवनीये प्रहृत्य, दक्षिणेन पदावेदिमवक्रम्य समिष्टयजुर्हुत्वा स्रुचं निनीयेत्। एवममावास्यं पौर्णमास्यं वा हविः संतिष्ठते।

इत्ययं संक्षेपेण दर्शपूर्णमासप्रयोगः

## प्रकृतभाष्यस्य पर्यालोचनम्

सूत्रानुसारिभि पदैः सूत्रार्थस्य प्रतिपादनं स्वपदैश्च तद्रहस्यस्य विवर्तनमेव भाष्यस्य प्रयोजनमुच्यते भाष्यविद्भिः।[1] सुगूढस्य सूत्रार्थस्य समुद्घाटने हि भाष्यकारस्य वैदुष्यं समीक्ष्यते। शिङ्गणाचार्यसुताग्रगण्येन सायणाचार्येण स्वपितामहस्य वैदिकभाष्याणां विश्रुतपरम्परां समुद्वाहयता सूत्रपदैरेव सूत्रार्थस्य स्पष्टीकरणेन सममेव सूत्रे निर्दिष्टा अनिर्दिष्टा अपि विषयाः प्रसंगसापेक्षतया समुपस्थाप्यन्ते। तद्यथा **प्रथमेऽध्याये** पंचहविः प्रकाराः, तेषां विवेचनं च, अग्न्याधेयात्प्रागनुष्ठेयानि कर्माणि, पर्वणि, वपनविचारः, तत्रापस्तम्बश्रौतसूत्रस्य धूर्तस्वामिभाष्ये रामाग्निचितो व्याख्यानस्य सोदाहरणं समालोचनं सूत्रदीपिकाकारस्य रुद्रदत्तस्य समर्थनं च; यज्ञोपक्रमे यजमानकृत्यानि, यागसंकल्पः, ऋत्विजां वरणम्; **द्वितीये** स्तम्बपरिमाणविकल्पाः, समिदायामः, पलाशत्रैविध्यम्, पिण्डपितृयज्ञस्य कालः, तस्य प्रयोगश्च; **तृतीये** द्रप्सानुमन्त्रणविषये मतभेदाः, अग्निहोत्रोच्छेषणम्; **चतुर्थे** मन्त्रकर्मणो कालसम्बन्धः, होतॄणां व्याख्यानम्, पंचावदानम्, माहेन्द्रपुरोडाशस्य पाक्षिकत्वम्, उपांशुयाजस्य करणम्; **पंचमे** प्रोक्षण-मन्त्रस्य वीप्सया विनियोगः, इतिकरणम्, प्रोक्षणस्य त्रित्वम्, दृषदुपले वृषारवेण समाहननम्; **षष्ठे** कृष्णाजिनावधूननं पेषणं निर्वापश्च, **सप्तमे** धृष्टेरादानम्, योगाभ्यूहौ; **अष्टमे** पारक्षुद्रसंज्ञा, आज्यनिर्वापः, पर्यग्निकरणम्, निनयनविमर्शः; **नवमे** वेद्याः परिग्रहणम्, वेदिस्वरूपम्; **दशमे** पत्नीसंनहनम्, अविद्यमानायां पत्न्यां तन्त्रजपविचारः, यागार्थं दारसंग्रहस्यापेक्षा, आज्यानां ग्रहणम्, श्रीरामाग्निचिन्मतस्य प्रत्याख्यानम्; **एकादशे** प्रोक्षणीनिनयने प्राचीनावीतत्वम्; **द्वादशे** वाक्यस्य विवेचनम्, ब्राह्मणपाठस्य समीक्षणम्, यद्देवतयथादेवतशब्दयोर्भिन्नार्थत्वम्, कपालानां विमोकः; **त्रयोदशे** होतुरङ्गत्वविचारः, हौत्रशेषप्रश्नोक्तानामुपांशुध्वानादीनां विवरणम्, प्रकृतौ सामिधेनीनां पांचदश्यम्, उपवीजनस्य दृष्टार्थत्वम्, अनादिष्टे स्रुचैव होमः, प्रवरवरणम्,

---

१. 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।' स. प., पृ० १६० वा, पृ० ४६४८।
'भाष्य' लक्षणं पराशरपुराणोक्तं तद्यथा—
सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः। अ. को, पृ० ५४३।

अयाज्ययाजने प्रायश्चित्ताम्नानम्, प्रायश्चित्तात् पापक्षयः; चतुर्दशे प्रयाजानां देवताः, हविषामवदानम् कल्पसारोक्ता अवदेयद्रव्यस्य परिमाणादिविशेषाः तन्त्रावापयोर्विवेकः; पंचदशे यजमानभागविचारः पुरोडाशस्य चतुर्धाकरणम्, आपस्तम्बश्रौतसूत्रोक्तस्यान्वाहार्यस्य सविस्तरं व्याख्यानम्, षोडशे अनूयाजानां द्वियजत्वम्, अंजनस्य प्रहरणाङ्गत्वम्, प्रहरणस्य हवनत्वम्, प्रस्तरप्रहरणनियमाः, सप्तदशे हौत्रशेषप्रश्नोक्तनक्षत्रनामकरणम्, पत्नीसंयाजे शंयुवाकस्य करणम्, पत्नीकर्तृकयोक्त्रविमोकादयश्च ।

तथैव भाष्यारम्भे भाष्याभरणभूता भूमिका कल्पावेक्षणमेव न प्रतिपादयति, अपितु यज्ञभेदान्, दर्शपूर्णमासयोः प्राथम्यं, प्रकृतिविकृतिविवेकममावास्यायाः प्रागुपदेशमपि समालोचयति, परं तत्रादौ स्थितेषु श्लोकपंचकेषु (२-६) सौष्ठवत्वमर्थसामञ्जस्यं न दृश्यते ।

नामनिर्देशपुरःसराण्युद्धरणानि भाष्ये सूत्रतात्पर्यस्याविष्करणार्थं प्रमाणत्वेन सर्वत्र प्रस्तूयन्ते, 'पूर्वव्याख्यातृभिः, सूत्रव्याख्यातृभिः, पूर्वाचार्यैः, कल्पान्तकारैः, अन्ये, अपरे, केचित्, अभियुक्ताः, याज्ञिकोपदेशः, याज्ञिकप्रसिद्धः' इत्यादिभिर्बहुभिः संकेतैरप्यनल्पानि वचनानि समुदाह्रियन्ते । बहुत्र तादृशं निर्देशं विनापि केवलमितिना शाबरभाष्यवाक्यपदीयगार्ग्यनारायणवृत्त्यादिभ्यो ग्रन्थेभ्योऽपि बहूनि वचनानि तथाविधेन सङ्घटनशिल्पपाटवेन संगृह्यन्ते यथा तानि भाष्यकारवचनेभ्यो न विशिष्यन्ते ।

भाष्येऽस्मिन् प्रायशः सर्वाण्यविस्पष्टानि समुदाहृतवाक्यानि विस्पष्टीकृतानि । आपस्तम्बश्रौतसूत्रस्योद्धरणानि सर्वत्र 'सूत्रम्' इत्यनेन संकेतेन समुपस्थापितानि । बहुधा बौधायनीया ग्रन्था बौधायनस्य नामनिर्देशं विनापि 'धर्मे, परिभाषायाम्' इत्यादिभिर्वचनै समुद्घृताः । एवं भाष्यकारस्योद्धरणपरिपाटी विलक्षणैव प्रतिभाति ।

अत्र सर्वे पारिभाषिकाः शब्दाः विशदं व्याख्याताः, समानार्थाः सुविवेचिताः, अनेकार्थाश्च शब्दाः स्पष्टं प्रसंगविशेषे तथा विवृता येन भाष्यकारस्य सदसद्विवेचिनी प्रज्ञा सर्वत्र प्रतिभासते, पदवाक्यप्रमाणशास्त्रपारङ्गतत्वं पदे पदे प्रादुर्भवति, प्रयोगशास्त्रपाण्डित्यं च प्रतितिष्ठति । यज्ञरहस्यानां प्रतिपादने प्रमाणत्वेन यथोचित

ब्राह्मण वाक्यानि बहुधोल्लिखितानि येन तस्य वेदशास्त्रपारंगतत्वं वैदिकत्वं च सुनिपुणं विज्ञायते । सूत्रपाठस्य पर्यवेक्षणे, यज्ञरहस्यानामुद्घाटने, प्रयोगकर्मणां क्रम-निर्देश पुरस्सरं सुप्रतिपादने, पूर्वसूरिमतानां समीक्षणे, तदनभिमतमतानां समुच्छेदने स्वकीयानां सिद्धान्तानां समुपस्थापने, आचार्याभिप्रायाणामवबोधने च भाष्यकार-प्रवरस्य सूक्ष्मेक्षिका सर्वत्र दरीदृश्यते, वेदवेदांगधर्मशास्त्रेतिहासपुराणमीमांसादि-शास्त्राणां प्रौढपरिज्ञानं च राजते, विषयवस्तुविश्लेषणसामर्थ्यं च देदीप्यते ।

हस्तामलकीकृतशब्दशास्त्रेण सायणसुपौत्रेण सूत्रस्यापपाठा अपि विविच्यन्ते यथावसरम् । यथा—सप्तदशाध्याये योक्त्रविमोचनप्रसंगे "ततः पत्नी विष्यति योक्त्रं विमुञ्चति 'इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ।' ( तै० ३।१।१०।९ ) इतिमन्त्रलिङ्गाच्च पत्नीकर्तृक एव विमोको मन्त्रजपश्च । 'पत्नीं विष्यति' इति क्वचित्पाठः तत्रान्तर्भावितण्यर्थत्वमाश्रयणीयम्, तथापि मन्त्रजपोऽध्वर्युकर्तृकः स्यात् । तथा च मन्त्रलिंगविरोधः । ततः पत्नी विष्यति इत्येव पाठोयुक्तः ।" 'पत्नी विष्यति' इति पाठस्याङ्गीकरणे परकलत्रसंस्पर्शदोषोऽपि न स्यात् । भारतराष्ट्रस्य महनीय-परम्परासु 'मातृवत् परदारेषु' इति नयेन परकलत्रसमीक्षणमपि समाजिकै र्न सह्यते, किमुत परकलत्रगात्राणां संस्पर्शः । अतएव धर्मशास्त्रलोकपरम्पराभिज्ञेन विदुषा भाष्यकारेण 'पत्नीं विष्यति' इति पाठो नाङ्गीक्रियते । तथैव योक्त्रसन्नहन प्रसंगेऽपि पत्नीकर्तृकयोक्त्रसन्नहनमपि युक्त्या महनीयेनाचार्येण प्रमाणीक्रियते ।

प्रसंगभेदादपि शब्दानामर्थाः परिवर्तन्ते, प्रसङ्गविशेषे, शास्त्रविशेषे, प्रयोजनभेदे च तेषां वाचकत्वं तत्तच्छास्त्रविशेषज्ञैः स्फुटीक्रियते । प्रसङ्गविशेषे कस्य शब्दस्य कोऽर्थोऽस्तीति भाष्यकारो निर्भ्रान्तं विजनाति । डा० कालण्डप्रभृतिभिर्विद्वद्भिर्बौधा-यनश्रौतसूत्रे केषुचित् स्थलेषु[1] कालशब्दस्य स्थानवाचकत्वं स्वीक्रियते[2] । अत्र भाष्य-

---

१. बौ० श्रौ० २।१३ 'तस्यवहमः काले' ४।१ 'चाषालस्य काले परिवास्यति', ६।१० 'उपरवाणां काले', ३।२२ 'उपरवाणां कालात्' ६।१४ 'उपरवकाले तृतीयं निधनमुपयन्ति'' १०।२३ 'स उपरवाणां कालः', 'स उत्करस्य कालः, 'अथोपरवाणां कालात्' इत्यादिषु ।

२. भा० श्रौ० I भूमिका पृ० ७८ ।

कृतापि कालशब्दस्य स्थानवाचकत्वं व्याख्यातम् । यथा—'अथोपरवाणां कालात् स्तम्बयजुर्हरति इति कालशब्दो देशवचनः' । अन्यत्रापि भाष्यकारेण स्थलविशेषे शब्दानां विशिष्टा अर्था उद्घाटिताः । तद्यथा—प्रथमेऽध्याये 'यन्त्रलोपो नियमलोपः,' एकादशेऽध्याये 'धातुशब्दः सन्धिवचनः', चतुर्दशे 'अङ्गुलिशब्दोऽङ्गुष्ठस्यापि वाचकः पञ्चदशेऽध्याये 'चमसशब्दो दारुमये पात्रे रूढः' इत्यादीनि ।

भाष्यकारस्य शास्त्रपाण्डित्यसूर्यस्य प्रखरतेजसि लोकव्यवहारशास्त्राभिज्ञान-शशिनो शीतरश्मयोऽपि न विलीयन्ते । पदे पदे श्रौतशास्त्रपरिज्ञानेन सह लोकव्यव-हाराभिज्ञत्वं व्यज्यते । स्थालीपुलाकन्यायेनात्रैकमुदाहरणं प्रस्तूयते । पञ्चदशाध्याये दक्षिणाप्रसङ्गे रथदाने रथस्य चातुर्विध्यमुपवर्णितम्—'रथः चतुर्विधः देवरथः, साङ्ग्रामिकः, सांयात्रिकः, क्रीडरथ इति । देवतोत्सवादिषु प्रसिद्धो देवरथः, स च मनुष्यवाह्यो भवति, सङ्ग्रामोपयुक्तः साङ्ग्रामिकः, स त्वश्ववाह्य एवेति । यात्रादि-षूपयुक्तः सांयात्रिकः, स त्वनडुद्वाह्यो वा भवति । क्रीडारथस्तु यथारुचिनिर्मातव्यः ।'

एवमसङ्ख्यातवैशिष्ट्यसमुपेतं सूत्रार्थप्रकाशनक्षमं व्यवस्थितप्रयोगोपेतं सुविस्तृतं गम्भीरार्थसमन्वितया सुबोधिन्या सुरगिरागुम्फितं प्रसन्नगम्भीरमतिना श्रीसायणाचार्येण प्रणीतं दर्शपूर्णमासभागात्मकं बौधायनश्रौतसूत्रसायणभाष्यमत्र सम्पाद्य प्रस्तूयते ।

---

# लिखितग्रन्थादिसामग्री

दर्शपूर्णमासभागात्मकस्य बोधायनश्रौतसूत्रसायणभाष्यस्य सम्पादने षड् लिखिताः ग्रन्थाः सम्प्रयुक्ताः । तेषां विवरणं चेत्थम्—

**१—इ१ ग्रन्थोऽयं पुण्यपत्तनस्थ-भारतेतिहाससंशोधनमण्डलस्थः ।**

**नाम—बौधायनश्रौतसूत्रभाष्यम् ।**

**लेखकः—सायणाचार्यः ।**

**क्रमाङ्कः ३६।१५०। पर्णानि १२२। आकारः २०.४×१० से० मी० ।**

लिपिः देवनागरी । आधारः कागदम् । प्रायशः सम्पूर्णोऽपि ग्रन्थः स्थलद्वये भग्नः । पाठः समीचीनः ।

यद्यपि स्थलद्वये (एकत्र पुटमात्रस्येतरत्र पंक्तिचतुष्टस्य) अस्य ग्रन्थस्य भग्नता स्वयं लिपिकरेणात्र सूचिता तथापि पुटमात्रस्य भग्नता तत्रैव (चतुस्त्रिंशत्तमे पुटे) पृथक् पर्णमेकं सन्निवेश्य केनापि सम्पूरिता । येनायं भागः सम्पूरितः तेनैव कतिपयेषु-पदेषु यत्र तत्र टिप्पण्योऽपि लिखिता इति वक्तुं शक्यते । तेनैव च महाभागेन ग्रन्थारम्भात् प्राग्विस्तृता भाष्यानुक्रमणिका सप्रयोगा संयोजितेति प्रतीयते । लिपिकारेण पाठस्य परिरक्षणे महानायासो विहित इति तस्य लेखनपाटवेनाभिधातुं शक्यते । अत्र 'च्छः' इति संयुक्ताक्षरस्य स्थाने सर्वत्र छकारमात्रमेव लिखितम् । लेखनस्येयं विधा वक्ष्यमाणेषु लिखितग्रन्थेष्वपि विद्यते ।

**आरम्भः—**श्रीगणेशाय नमः ।

> **वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।**
> **यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥**
> **त्रयीमंगत्रयीकल्पलतया यन्निरूपितम् ।**
> **दोहयत् श्रियमावते मीमांसासङ्ग्रहद्वयम् ॥**

**परिसमाप्तिः**—प्रणीता बर्हिषि निनयति। समुद्रं व० प्रत्यय इति। प्रणीता-मन्त्रणादियजमानेन सहेति। इति श्री बौधायनाचार्यप्रणीतसूत्रभाष्ये विद्यारण्य-श्रीपादविरचिते प्रथमप्रश्नेऽष्टादशोऽध्यायः ॥छ॥ श्री राम॥ जय राम॥ जय जय राम। श्री शिवाय नमः। रामाय नमः ॥छ॥ ॥छ॥

**२—इ₂ =अयमपि ग्रन्थः पुण्यपत्तनस्थभारतेतिहास संशोधनमण्डलस्थः।**

**लेखकः**—सायणाचार्यः।

**क्रमाङ्कः** ३७।२०२। पर्णानि ३७। आकारः २१.६×११ से० मी०।

अपूर्णः। अशुद्धिबहुलः।

**आरम्भः**—श्रीगणेशायनमः।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्यास्युस्तं नमामि गजाननम् ॥१॥
त्रयीमंगलत्रयी कल्पतीयां यन्निरूपितः।
दोहयन् नियमावस्ते मीमांसासंग्रहद्वयम् ॥२॥

**परिसमाप्तिः**—वेदिं करोति प्रागुत्तरात्परिग्राहात्। कृत्वेति। उत्तरत्राप्ये-तत्समन्त्रकं पुनराम्नायते एवं सति दर्शपूर्णमास......।

३—प = ग्रन्थोऽयम् एसियाटिकसोसायटीकलिकातास्थः। अत्र विद्यापीठे माइक्रोफिल्मरूपतोऽधिगतः।

**क्रमाङ्कः**—७६/१ (विद्यापीठे प्रयागस्थे)। नाम—दर्शपूर्णमासव्याख्या।

**लेखकः**—सायणाचार्यः। पर्णानि ६० (५१-११०)। अपूर्णः। लिपिः—देवनागरी। प्रायशः शुद्धः। लिपिकालः=१८४१। पाठक्रमः प्रायशः इ₁—पुस्तकमनुकरोति।

**आरम्भः**—व्रजं गच्छ गोष्ठानमिति हरति, वेदिं प्रत्यवक्षेते, वर्षतु ते द्यौरिति हृत्वोत्करे निवपति बधान देव मागीररुस्मास्कान्।

**परिसमाप्तिः**—ध्रौवात् स्रु वेणोपहत्य ब्रह्मप्रतिष्ठमनस इत्येतेनानुवाकेन प्रति-

मन्त्रं जुहोति । शुभमस्तु । संवत् १८४१ । समयः कुआरमासे कृष्णपक्षे तृतीयायां समाप्तः । शुभमस्तु । कल्याणमस्तु । श्रीरामचन्द्रजी अपि नमहम् ।

४—ग = ग्रन्थोऽयं गङ्गानाथ झा केन्द्रीयसंस्कृतविद्यापीठस्थः ।

नाम बोधायनकल्पसूत्रभाष्यम् ।

लेखकः—सायणाचार्यः ।

क्रमांकः ३६०१।१५ पर्णानि ११७ । आकारः २८×११.८ से० मी० । लिपिः देवनागरी । आधारः—कागदम् । प्रायशः सम्पूर्णोऽपि स्थलद्वये मग्नः । प्रायशः शुद्धः । लिपिकालः—संवत् १८४९ । पाठक्रमः प्रायशः स पुस्तकमनुकरोति ।

अत्रापि स्थलद्वयस्य भग्नता लिपिकारेण सूचिता । चवूकारयोः यकारपकारयोश्च भेदोऽस्पष्टः ।

आरम्भः—श्रीगणेशाय नमः । हरिः । ॐ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
त्रयीमंगत्रयीकल्पलताया यन्निरूपितम् ।
कोहनं धियमावत्ते मीमांसासंग्रहद्वयम् ॥

परिसमाप्तिः—ध्रौवात् स्रुवेणोपहत्य ब्रह्मप्रतिष्ठमानसः इत्येतेनानुवाकेन प्रतिमन्त्रं जुहोति । शुभमस्तु । संवत् १८४९ ॥ छ ॥ छ ॥ छ ॥

पुस्तकमिदं सप्तर्ष्यपरनामधेयस्य ।

५—भ = ग्रन्थोऽयं भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरस्थः ।

नाम—बौधायनदर्शपूर्णमासभाष्यम् ।

लेखकः—सायणाचार्यः ।

क्रमांकः—२७ $\left(\frac{१७}{१८८४-८७}\right)$ । पर्णानि १३४ ।

आकारः— २९½ × १४ से० मी० । लिपिः देवनागरी ।

**आधारः**—कागदम् प्रायशः सम्पूर्णोऽपि स्थलद्वये भग्नः। पाठक्रमः प्रायशः इ१ पुस्तकमनुकरोति, किन्तु पाठस्य तादृशी शुद्धता नास्ति।

अत्रापि स्थलद्वयस्य भग्नता लिपिकारेण तथैवाभिव्यक्ता। पकारयकारयोः वकारबकारयोश्चान्तरमस्पष्टम्।

**आरम्भः**— श्रौतप्रयोगभाष्यप्रारम्भः

विद्यारण्यकृतम्

श्री गणेशायनमः ॥ हरिः ॥ ॐ

**वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।**
**यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥**
**त्रयीमंत्रत्रयीकल्पतायां यन्निरूपितम्।**
**दोहयन् श्रियमावर्त्ते मीमांसासंग्रहद्वयम् ॥**

**परिसमाप्तिः**—ध्रौवात् स्रुवेणोपहत्य ब्रह्मप्रतिष्ठमनस इत्येतेनानुवाकेन प्रतिमन्त्रं जुहोति ॥

॥ सप्तदशः ॥

श्री भवानीशंकरार्पणमस्तु श्रीसाम्बसदाशिवाय सिद्धेश्वरार्पणमस्तु। इदं पुस्तकं यशवन्तनरसिंहमजुमदारवास्तव्यतले ग्रामनगर श्रीसिद्धेश्वरार्पणम० ॥

**६—स = ग्रन्थोऽयं सरस्वतीभवनवाराणसीस्थः।** अत्र प्रयागस्थे गङ्गानाथझा केन्द्रीयसंस्कृतविद्यापीठे माइक्रोफिल्मरूपेणाधिगतः। क्रमाङ्कः—७८/२ (विद्यापीठे) ग्रन्थसंख्या—४७६७९ (सरस्वतीभवने)।

**नाम**—दर्शपूर्णमासभाष्यम्। लेखकः—विद्यारण्यः। पर्णानि ३२५ (१-२१५)। लिपिः देवनागरी। लिपिकालः १८२४। आधार—कागदम्। प्रायशः सम्पूर्णोऽपि स्थलद्वये भग्नः। पाठः प्रायशः शुद्ध एव।

अत्रापि स्थलद्वयस्य भग्नता लिपिकारेण सूचिता।

**आरम्भः**—**वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।**
**यं नत्वा कृतकृत्यास्युः तं नमामि गजाननम् ॥**

त्रयमंगत्रयीकल्पताया यं निरूपितम् ।
दोहयन्निश्चयमादत्ते मीमांसासंग्रहद्वयम् ॥

**परिसमाप्तिः**—ध्रौवात् स्रुवेणोपहत्यब्रह्मप्रतिष्ठामनस इत्येतेनानुवाकेन प्रतिमन्त्रं जुहोति । शुभमस्तु । संवत् १८२४ । समयः—फाल्गुनमासे शुक्लपक्षे तृतीयायां समाप्तः ॥ॐ ॐ ॥ शुभमस्तु ॥

एते षडपि ग्रन्था एकामेव वंशपरम्परामनुवर्तन्त इति पाठक्रमसादृश्येन स्थलद्वयभग्नतासाम्येन चाभिधातुं शक्यते । तत्रापि गसपुस्तकयोः, इ१भपुस्तकयोश्च विशिष्टं साम्यं प्रायशः दृश्यते । श्रौतसूत्रपाठविनिश्चयार्थं मया डा० कालण्डसम्पादितस्य बौधायनश्रौतसूत्रस्य, वैदिकसंशोधनमण्डलेन च प्रकाशितस्य श्रौतकोशस्य पाठभेदनिदर्शने यथावसरं प्रयोगोविहितः तयोश्च निदर्शनं तत्र क्रमशः ब–श्रसंकेताभ्यां कृतः । अन्येषामप्युद्धृतानां ग्रन्थानां पाठभेदा अपि तत्तत्संकेतेनात्र प्रदत्ता सन्ति ।

लिखितपुस्तकेषु खल्वाद्यन्तसंकेतेन लिखिता मन्त्राः प्रथमं सकलपाठेनात्रोद्ध्रियन्ते । अन्यदा च ते प्रायेणाद्यक्षरनिदर्शनेनैव । कानिचनाप्रकाशितानि परिहाय प्रायशः भाष्यस्थानि निखिलान्युद्धरणान्यत्राविष्कृतानि । विपुलानि पारिभाषिकपदानि भाष्ये सायणाचार्येण स्वतः एव व्याख्यातानि, तेन हि तेषां पृथग्विवृत्तिर्मया नैवाकारि । इ१—लिखित पुस्तकगता अखिला टिप्पण्योऽत्र पाठभेदनिदर्शनानन्तरं प्रदत्ताः ।

एवंविधस्य विविधविषयविलसितस्य दर्शपूर्णमासभागात्मकस्य बौधायनश्रौतसूत्रसायणभाष्यस्येदं प्रथमं सम्पादनं मया सानन्दं प्रस्तूयते । मन्ये शोधप्रबन्धभूतमिदं सम्पादनं निरवद्यवेदविद्याजुषां विदुषां श्रौतधर्मप्रणयिनां सज्जनानां चेतः सम्प्रसादयेत् श्रौतयागपरम्परां चापि संजीवयेत् ।

# बौधायनश्रौतसूत्रसायणभाष्यम्

## दर्शपूर्णमासभागात्मकम्

### प्रथमोऽध्यायः

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥

[1]त्रयीमङ्गत्रयीकल्पलतायाः[2] यन्निरूपितम्[3] ।
[4]दोहनं श्रियमादत्ते मीमांसासंग्रहद्वयम् ॥२॥

यः सायणाचार्यपदाभिषिक्तः[5] श्रीशिङ्गणाचार्यसुताग्रगण्यः ।
प्रसन्नगम्भीरमति[6]स्फुटार्थं बौधायनं कल्पमथो विधास्यन् ॥३॥

व्याख्याय विद्यास्थानानि[7] पुराणादीनि साम्प्रतम् ।
[8]व्याचष्टे सायणाचार्यः कल्पं बौधायनं सुधीः ॥४॥

पूर्वव्याख्यातृभि र्येऽर्थाः स्पष्टा इत्यनिरूपिताः ।
अप्रबुद्धप्रबोधार्थं  निरूपयति  तानपि ॥५॥

अनुष्ठानविकल्पाश्च[9] कल्पादौ ये व्यवस्थिताः ।
सम्यक् तेऽपि निरूप्यन्ते पूर्वकल्पे[10] यथोचितम् ॥६॥

---

१. इ$_{2}$—त्रयीमंगल० । भ—त्रयीमन्त्र० ।
२. इ$_{1}$— °लतया । इ$_{2}$— °लतायाम् ।
३. इ$_{2}$— रूपितः ।
४. इ$_{1}$— दोहयत् । इ$_{2}$ भ स— दोहयन् ।
५. इ$_{2}$— श्रीशिगिणां० ।
६. भ— स्फुटार्थे ।
७. भ—°ख्यानानि ।
८. भ इ$_{1}$— व्यावष्टे । ग = व्याचष्ट ।
९. ग स— कणादौ । भ— करणादौ ।
१०. भ—°कल्प० ।

तत्र तावद्विध्यर्थवादमन्त्रात्मना त्रिधा व्यवस्थितो वेदराशिः, तस्य च कर्माव-बोधमेवार्थः। [१]तदधीतमेव कर्माभ्युदयहेतुः। तथा चोक्तम्—'**दृष्टो हि तस्यार्थः कर्मावबोधनं नाम न च[२] तत्राप्यध्ययनमात्रान्मन्त्रमनुभवन्तो[२] याज्ञिकाः फलं समामनन्ति** ( श० भा० १।१।१ ) इति।' **विधिविहितमर्थवादप्ररोचितं[३] मन्त्रेण स्मृतमभ्युदयकारि भवति** इति। ततश्चोदितानां कर्मणां सुखावबोधनाय भगवान् बौधायनः कल्पमकल्पयत्। यतो ब्राह्मणानामानन्त्यं[४] दुख-बोधता च, अतो न[५] तैः सुखं कर्मावबोध इति कल्पसूत्राणीमानि प्रतिनियतशाखान्तराण्यङ्गीचक्रुः[६] पूर्वाचार्याः। अतएवाध्ययनविध्याक्षिप्तस्याध्येतव्यस्य स्पष्टार्थत्वात्तदु*पबृंहण[७]विशेषैरूपबृंहितस्य कल्पस्य[८] वैशद्य**लाघवकात्स्र्न्यप्रकरणशुद्ध्यादिभिः प्रकर्षैर्युक्तस्य तत्तन्मार्गानुसा-रिभिः स्वानुष्ठेयकर्मावबोधनार्थमध्ययनं सिद्धम्।

एतदेवाभिसंधायोक्तं कर्मान्ते—'**पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन[९] सिद्धिवशेनेति**।' (बौ० श्रौ० २४।१) कल्पत इति कल्पः प्रयोगः। सोऽत्र निरूप्यत इत्ययं ग्रन्थोऽपि कल्पः, तं कल्पं पञ्चतयेन परीक्षेत। पञ्चावयवा अस्य वक्ष्यमाणस्य समुदायस्यासौ पंचतयः, तेनेत्यर्थः। तानेवावयवान्विवृणोति—

---

१. ग— तदधीन०।

२-२. श० भा०— तत्राध्ययनमात्रात् तत्रभवन्तो०।

३. इ२— °रोचिते।

४. इ२— दुःखबोधतया भवति।

५. भ— नन्तः।

६. ग स— °शाखान्तरानङ्गीचक्रुः। भ— शाखान्तराण्यं चक्रुः।

७. ग— °विध्याक्षिप्तमध्येतव्यत्वादुपबृंहण। अ— विध्याक्षिप्तध्येतव्यस्यास्पष्टार्थ-त्वात्तदुपवृद्ध०।

८ भ— वैषघलायघवकास्मीश्रिकरण०, इ२— °वैशघलावश्यकघेवकात्स्र्न्येप्रकरण०।

९. ब श्र— संस्थावशेन।

---

*उपबृंहण—दृढीकरण— इ१ (°'उपबृंहण०'—इति पदे 'इ' पुस्तके लिखिता टिप्पणी एवमग्रेऽपि)

**वैशद्य—स्पष्टत्व— इ१।

'छन्दसेति यद्वोचाम यथाम्नायप्रणिधिरिदं[1] पूर्वमिदमुत्तरमिति।' (बौ० श्रौ० २४।१) आम्नायस्य प्रणिधिः प्रणिधानं क्रम इत्यर्थः। येन क्रमेण पदार्थाः समाम्नाताः तेन क्रमेण श्रुत्यादिभिरविनियुक्ता मन्त्रा विनियोज्याः। यथा काम्यपशुषु 'सा वा एषा सर्वदेवत्या यदजावशा' (तै० ३।४।३।२ इत्युपक्रम्य तत्तत्कामनानुरोधेन देवताविशेषादजावशालम्भे 'त्वं तुरीया वशिनी वशासि' ( तै० ३।४।२।७ ) इत्यादीनां मन्त्राणां[2] नियमेन पश्वनुमन्त्रणादिषु विनियोगः।

पक्षान्तरमाह 'अथापि मन्त्र एव स्वयं कर्म प्रब्रूते[3]। कर्मानुवादो भवति' (बौ० श्रौ० २४।१) इति, [4]तद्विवरणम्—'यथैतद्भवति' इत्युदाहरणोपन्यासप्रतिज्ञा 'प्रेयमगाद्धिषणा' इति 'उर्वन्तरिक्षमन्विहि' इति च बर्हिराहरणार्थम्। गमनागमने मन्त्रवाच्ये। तद्वशात्तत्रैव विनियोगः। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि इति।' ( बौ० श्रौ० २४।१ ) एवमन्यत्रापि छन्दसा मन्त्रलिङ्गेन विनियोगः।

यत्र [5]तु मन्त्रलिङ्गेन विनियोगो न ज्ञातुं शक्यते तदा ब्राह्मणानुरोधेन विनियोग इत्याह 'यच्छन्दसा न शक्नुयात् कल्पयितुं ब्राह्मणेन तच्चिकल्पयिषेत्। ब्राह्मणमुहैवैनान् [6]मन्त्रान् प्रज्ञातान्* विदधातीदमनेन[7]करोतीदमनेनेति। यथैतद्[8]भवति—इषे त्वोर्ज्जे त्वा इति शाखामाच्छिनत्ति, वायवः स्थोपायवः

१. भ— पूर्वविपुतरमिति।
२. इ₂— नियमानाम्।
३. भ— प्रते।
४. भ— तदुदाहरणम्।
५. इ₂— तत्र।
६. व श्र— मन्त्रानप्रज्ञातान्।
७. ग— करोतीदमनेन करोतीति।
८. इ₂ ग भ— यथापि।

*प्रज्ञातान् = स्वतन्त्रान्— इ₁।

स्थ इति वत्सानपाकरोति ।' (तत्रैव) क्वचित्तु ब्राह्मणमेव मन्त्रानपेक्षितं विदधातीत्याह— अथाप्यमन्त्राणि कर्माणि विदधाति । यथैतद् भवत्यष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतेत्येकादशसु राजन्यः द्वादशसु वैश्य इति व्यवस्था वर्णसंयोगात् ।' (बौ० श्रौ० २४।१) अग्न्याधाने यथावर्णं प्रक्रमव्यवस्था ।

प्रत्ययेनेति तृतीयं विवृणोति—'यथो एतत्प्रत्ययेनेति । [1]छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति ।' (बौ० श्रौ० २४।१) प्रतीयते ज्ञायते विशेषो येन स प्रत्ययः प्रमाणमित्यर्थः । छन्दोगादयः[2] शाखावचनाः तेषां प्रत्ययेनेति भावप्रधानो निर्देशः । छन्दोगादिशास्त्रप्रामाण्येनेत्यर्थः ।[3] सोमे स्य च्छन्दोगप्रत्ययेन तावद्रथन्तरादिपृष्ठसामवशेन[4] ग्रहग्रहणानुपूर्व्ये नियमः । तथा चापस्तम्बः 'यदि रथन्तरसामा सोमः[5] स्यादैन्द्रवायवाग्रान् ग्रहान्[6] गृह्णीयात् ।' ( आप० श्रौ० १२।१४।१, भा० श्रौ० १३।१४।२ ) इत्यादि । बह्वृचप्रत्ययेनेति । यथा—सौम्ये चरौ[7] 'परियक्ष्छसि सौम्यां न परियक्ष्छसि इति' ( बौ० श्रौ० ८।१४ ) अध्वर्युणा पृष्टे होता यं [8]पक्षमनुमन्यते तदनुष्ठानमिति । अध्वर्युप्रत्ययेन, यथाग्रयेण हविषामानुपूर्व्ये बह्वृचोक्तैन्द्राग्नादित्वमपवादेन सौम्यादित्यादित्वमध्वर्युवशादैन्द्राग्नादित्वं वेति[9] ।

चतुर्थं विवृणोति 'यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतन्यायमनधिगच्छन्नाम्नायं प्रतीयादयमिहार्हतां समारम्भ इति ।' ( बौ० श्रौ० २४।१ ) प्रस्तुते

---

१. इ₂— छन्दोगं बह्वृचा० ।

२. इ₂— मासो छन्दोगादयः ।

३. इ₂— सोमे मासो स्मा० ।

४. इ₂ ग— रथन्तरादिष्टसामवशेन ।

५. इ₂ ग— 'सोमः' नास्ति ।

६. व श्र— 'ग्रहान्' नास्ति ।

७. ग— पर्यक्ष्यसि । भ— परियक्ष्यसि ।

८. ग— अमुम् ।

९. इ₂— चेति ।

[1]श्रौततन्त्रे श्रौतवचनमनधिगच्छन्* ग्रामन्यायं स्मार्तवचनं प्रतीयात् अधिगच्छेत्। इह अस्मिन् विषये अर्हतां मन्वादीनाम्[2] अयं समारम्भः स्मरणमित्यर्थः। तद्यथा— कर्ममध्ये हुतभक्षणाद्याचमननिमित्तसंभवे [3]तद्विधायकश्रौतवचनाभावेऽपि स्मृत्यनुरोधदाचमनम्। तच्च न कर्मव्यवधायकमिति। यत्तु तत्र तत्र श्रौतमाचमनं विहितम्— **'अथ सायं हुतेऽग्निहोत्रे यज्ञोपवीत्यप आचम्य'** (बौ० श्रौ० ३।८) इत्यादि तत्कर्माङ्गम्।

[4]पञ्चमं विवृणोति—सिद्धिवशेनेति[4]। सिद्धिः संस्थासमाप्तिरित्यर्थः। उपक्रान्तस्य कर्मणः समाप्तिर्यथा भवति, तथा प्रतिनिधयो ग्राह्या इत्यर्थः। यथा— **'सोमेऽपहृत आदारांश्च फाल्गुनानि चाभिषुणुयादिति।'** (बौ० श्रौ० २४।१) तथोक्तमौपानुवाक्ये **'अथ वै भवति यस्य [5]क्रीतमपहरेत्'** (बौ० श्रौ० १४।२४) इति। आदारान् क्षुद्रतृणानि [6]सोमवल्याकाराणि। फाल्गुनानि हैमवतानि।

प्रकारान्तरेण मन्त्रविनियोगज्ञानोपायमाह—**'चतुष्टयेन मन्त्रा वर्तन्ते श्रुत्या[7] निर्देशेनाशिषा, नैव श्रुत्या नाशिषा** न निर्देशेनेति[7]।'** (बौ० श्रौ० २४।१)। [8]चतुष्टयेन चतुरवयवेन चतुर्धा मन्त्रा वर्तन्ते इत्यर्थः श्रुत्या, यथा—**'त्वमग्ने द्युभिः'** (तै० ४।१।२।२१) इत्ययं मन्त्र [9]उखासंभरणप्रकरणे श्वपदपरिलेखने विनियुक्तः।

---

१. इ₂ भ— श्रौते तन्त्रे।
२. भ— मन्यादानाम्।
३. इ₂— तद्विधाय श्रौत०।
४-४. ग स— 'पंचमं विवृणोति सिद्धिवशेनेति' नास्ति।
५. ब— क्रीतं सोममपहरेयुः।
६. इ₂— 'सोमवल्याकाराणि तृणानि'। ग भ स— 'सोमवल्याकाराणि' नास्ति।
७-७. भ— निर्देशेनाशिषा ये निर्देशेनेति।
८. ग— 'चतुष्टयेन' नास्ति। स— चतुर्थम्।
९. ग स— उषा। भ— उषी०।

---

*अनधिगच्छन् = अजानन्— इ₁।
**आशिषा = प्रार्थनेन— इ₁।

श्रुतिरेव तस्य प्रयोजिकेति श्रुत्या तत्र वर्तते। तथा निर्देशेन—'**अग्नये त्वा। अग्नीषोमाभ्यां त्वा**' (तै० १।१।८।५-६) इति पुरोडाशाभिमर्शने निर्देशेन विनियुक्तः। आशिषा तु '**बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम्**' (तै १।६।३।१) इत्येवमादयोऽनूयाजादिषु। श्रुत्यादित्रितयस्याप्यभावेन[1] चतुर्थः प्रकारः। यथा हविरासादनादौ '**भुर्भुवः स्वः**' (तै० ५।५।५।१) इत्येवमादयः। एवं बहुधा विप्रकीर्णा* मन्त्रविनियोगज्ञानोपायाः। तान् यथायोगं** संगृह्यानुष्ठेयकर्मावबोधनं[2] कल्पेऽस्मिन् क्रियते।

तच्चानुष्ठेयं कर्म त्रिविधम्—नित्यं नैमित्तिकं काम्यमिति। नित्यमपि पाकयज्ञ हविर्यज्ञ सोमयज्ञभेदात् त्रिविधम्। तत्र पाकयज्ञाः 'हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्था इति' (बौ० श्रौ० २४।४) [3]गृह्ये निरूपिताः। अपरिमिता इति च कर्मान्ते, तद्यथा—'**कियत्यः पाकयज्ञसंस्थाः**' इत्युपक्रम्योक्तम् '**अपरिमिता उ हैके ब्रुवते। यच्च[4] किं चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्था इति**। (तत्रैव) विहारादन्यत्रेति वैतानिकाग्निभ्योऽन्यत्रेत्यर्थः।

हविर्यज्ञाः '**अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिनामयनमिति**' ( बौ० श्रौ० २४।४ ) सप्त। अन्ये तु कौण्डपायिनामयनस्य कदाचित् सोमानुबन्धत्वात् सौत्रामणीं सप्तमं हविर्यज्ञमामनन्ति। अपरे तु दाक्षायणयज्ञस्य कदाचित् सोममिश्रत्वान्निरूढपशुबन्धं षष्ठमाहुः। सोमयज्ञास्तु '**अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त**' ( बौ० श्रौ० २४।४ ) इत्येते नित्याः।

---

१. ग— °त्रितयसाम्यभावेन।

२. ग— °कर्मविबोधनम्।

३. ग— गृह्यनिरूपिताः।

४. ग— यत्किञ्चनान्यत्र। भ— यच्च किं चान्यश्च। इ₂— यं किं चान्यत्र।

---

*विप्रकीर्णाः = संकीर्णा— इ₁।

**यथायोगम् = यथाविनियोगम्— इ₁।

नैमित्तिकास्तु पाकयज्ञरूपाः [1]कूष्माण्डादयः, हविर्यज्ञरूपा जातेष्ट्यादयः, सोमयज्ञरूपाः पुनस्तोमादयः। काम्या अपि पाकयज्ञरूपाः प्रजार्थिहोमादयः, हविर्यज्ञरूपा आयुष्कामेष्ट्यादयः, सोमयज्ञरूपा उद्भिदादयः।

तत्र प्रत्यक्षश्रुतिमूलतया हविर्यज्ञेषु [2]सर्वेष्विष्टेः प्रकृतितया मन्त्राम्नानात् कर्मानुरोधाच्च प्रथमं दर्शपूर्णमासौ निरूपयति—**'आमावास्येन वा'** (बौ० श्रौ० १।१) इत्यादिना। ननु **'सर्वक्रतूनामग्नयः सकृदाहिताः'** ( आप० प० १।२४ ) इत्यग्निसंस्कारादेवाग्निसिद्धिः। तत्रापि **'नक्तं गार्हपत्यमादधाति, अर्धोदिते सूर्य आहवनीयमादधाति'** ( आप० श्रौ० ५।१३।१ भा० श्रौ० ५।९।१ ) इति। तदितिकर्त्तव्यताविशेषादेवाहवनीयत्वादिसिद्धिः। तेनाधानमेवाग्न्युत्पादकम्, ते चाग्नयः सर्वक्रत्वङ्गभूता यथोपनयनसंस्कृताधीना मन्त्राः। अतएवानुष्ठानेऽप्याधानस्य[3] प्राथम्यं नियतम्। तत् कुतः तदतिक्रमेण दर्शपूर्णमासयोः प्रागभिधानमिति।

सत्यम्, तथापि [4]**अग्न्याधेयप्रभृतीन्याह वैतानिकानि। दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राम्नातत्वात्।'** (आ० श्रौ० १।१।१।२-३) इति संभूयाग्निसाधकस्य पवमानेष्टितन्त्रस्य तदुपदेशेऽनुपदिष्टस्य दर्शपूर्णमासयोराम्नातत्वाद्धर्मातिदेशं विना पवमानेष्टयनुष्ठानायोगाद्दर्शपूर्णमासयोरेव प्रथमुपदेशो[5] युक्तः।

न च वाच्यम् **'पूर्णाहुत्यन्तमग्न्याधेयम्'** ( आ० श्रौ० २।१।१।१७ ) इति [6]वचनादाधानमात्रादेवाग्निसिद्धिः, **'अग्निसंस्कारत्वं पवमानेष्ट्यादेः'** इति सूत्रस्याहिताग्निव्रतप्रापणार्थत्वात्। अन्यथाऽऽधानमिष्टिं चोक्त्वा **'आधानाद् द्वादशरात्रमजस्राः'** ( आ० श्रौ० २।१।३५ ) इति नोच्येत, उच्यते च तथा। ततोऽवगम्यते

---

१. ग स— कूश्माण्डादयः।

२. ग भ स— सर्वेष्टि०।

३. इ₂— °प्याधानेस्य।

४. ग— अग्न्याधान०।

५. ग— °देशे।

६. इ₂— वाचना०।

**'यावता कर्मसमुदायेनाग्निसिद्धिर्भवति तावतः 'कर्मसमुदायस्याधानशब्दो-वाचकः'** ( आ० श्रौ० २।१।३५-गा० वृ० पृ०, ८७ )। ततश्चान्यत्रापि **'अग्नेयाधेयं [1]पुनराधेयं वा'** ( बौ० श्रौ० २४।११ ) इत्यादौ सेष्टिकस्यैवाधानशब्देनोपन्यासः। ततश्चाधानस्येष्टि[2]सापेक्षत्वादनुष्ठानप्राथम्यमनादृत्य सर्वेष्टिप्रकृतित्वादन्यासां[3] विकृतित्वाच्च दर्शपूर्णमासयोरेवपूर्वमभिधानं युक्तमिति।

स च प्रकृतिविकृतिविचारः कर्मान्ते कृतः **'कथमु खल्वेतज्जानीयादियं पूर्वा ततिरियमुत्तरेति।'** (बौ० श्रौ० २४।५) पूर्वा प्रथमा कर्मान्तरोपदिष्टेतिकर्त्तव्यतानपक्षेतया पूर्वमुपदेशात्। अतएव ततिः तन्यते विस्तार्यतेऽस्यामितिकर्त्तव्यताकलाप[4] इति ततिः प्रकृतिरित्यर्थः। उत्तरा अन्यापेक्षत्वात् ततिरित्यनुवर्तते, विकृतिरिति यावत्। इयं प्रकृतिरियं विकृतिरिति कथं ज्ञायत इत्यर्थः। उत्तरमाह— **'या प्रकृतिः सा पूर्वा ततिः। अथ यद्विदधाति सोत्तरा ततिः।'** (बौ० श्रौ० २४।५) यस्या सम्बन्धिनो धर्मा कर्मान्तरे प्रक्रियन्ते अतिदिश्यन्ते सा प्रकृति। यत्र तु प्रधानमात्रं विधीयते, न धर्मविशेषाः सोत्तरा तति विकृतिरित्यर्थः। उदाहरति—**'अग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिः दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः[5] इष्टय उत्तरा ततिः।'** ( बौ० श्रौ० २४।५ ) इत्यादि।

तत् सिद्धमेतद्दर्शपूर्णमासावेव प्रागुपदेष्टव्याविति। यद्यपि **'अथेमौ दर्शपूर्णमासौ पूर्णमास्युपक्रमावमावास्यासंस्थावाचार्याः ब्रुवते'** ( बौ० श्रौ० २४।२० ) इति वचनात् पूर्णमासस्यैव प्रागुपदेशो युक्तः तथापि मन्त्राम्नानक्रमानुरोधात् पौर्णमास्यां दाक्षायणयज्ञे[6] सान्नायधर्मोपजीवनाच्चामावास्यस्य प्रागुपदेश इति। तदुच्यते—

---

१. इ₂— पुनराधेयं सप्त्यादौ। ग भ— पुनरादेयम्।

२. ग भ— °सव्यपेक्ष०।

३. इ₂— °दन्यस्याः।

४. ग भ— °कर्त्तव्यकलापः

५. ब श्र— 'सर्वाः इत्यस्यानन्तरम् 'काम्याः'।

६. भ इ₂— °पक्षे।

**आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति। स पुरस्तादेव हविरातञ्चनमुपकल्पयते-इति ।**

अत्र 'यो यक्ष्यमाणो भवति स उपकल्पयते' इति वक्तव्ये यच्छब्दानुपादानस्यैतत्प्रयोजनम् **'प्रक्रान्तप्रसिद्धार्थानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते'** [1](का० प्र०, स० ७०, पृ० ३०७) इति न्यायेन विधिवत् कृताधानतया प्रक्रान्तो यथाधिकारी स्यादिति । अमावास्यासम्बन्धिना हविषा । पौर्णमाससम्बन्धिना हविषा । यक्ष्यमाणः यष्टुं प्रवृत्तः । अत्र [2]कालहविषोर्निमित्तनैमित्तिकभावः संबन्धः । ततश्च **'प्रतिनिमित्तं नैमित्तिकमावर्तते'** इति यावज्जीवमनुष्ठेयमौत्सर्गिकं[3] सिध्यति। प्रव्रजितदीक्षितज्वराभिभूतादेर्मध्ये[4] परित्यागस्त्वापवादिकः । ज्वराभिभूतस्य तु दर्शपूर्णमासतद्विकारादेव परित्यागो नाग्निहोत्रस्येति वक्ष्यामः ।

हविषेत्येकवचननिर्देशादाग्नेयादीनां समुदितानामेकफलसम्बन्धं द्योतयति । तत्रापि समुदायद्वयापेक्षया कालप्रयोगभेदज्ञापनाय **'आमावास्येन पौर्णमासेन वा'** इति द्वयोः पृथङ्निर्देशः। **'यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेत्'** (बौ० श्रौ० २३।१) इत्यादिलिङ्गदर्शनान्नासंहतत्वमाशङ्क्येत,[5] यथा— **'आशौचिनं पयसा भोजयेत्तक्रेण वा'** इति। वाशब्दद्वयोपादाने [6]तु न तथा **'बैल्वो वा खादिरो वा पालाशो वा'** इत्यादि । अपि वा जात्यभिप्रायमेकवचनम् । पञ्चसु [7]हविराकारेष्वौषधाज्यपयसां ग्रहणम् । पञ्चापि हविःप्रकाराः कर्मान्ते दर्शिताः **'अथेमे पञ्च हविराकाराः औषधं पयः पशुः सोम आज्यमिति'** (बौ० श्रौ० २४।२)

---

१. का० प्र० °प्रसिद्धा० ।

२. इ₂— कालहविषोर्निमित्तभावः ।

३. इ₂— °मनुष्ठेयत्वम् ।

४. ग स— परित्यागस्त्वापदिकः ।

५. इ₂— °दर्शनान्नसंहृतमाशक्यते ।

६. ग भ— न तु ।

७. इ₂— हविष्वा० ।

पंचविधत्वे कारणमाह—**तेषां पृथक् पृथग्धर्माः**' (तत्रैव)। तेषाम्[1]औषधादीनां परस्परमसङ्कीर्णा धर्मा यतः, अतः पंचविधा इत्यभिप्रायः।

[2]अथाप्यौषधविकाराणामेवाहननादयो धर्माः। ते चौषधयः तण्डुलाः पिष्टानि फलीकरणाः पुरोडाशो यवागूः [3]शिथिलोदनः पृथुका लाजा धानाः सक्तव इत्येवमादयः। पयो धर्मा दोहनादयस्तद्विकारा दध्यामिक्षावाजिनादयः। पशुधर्मा उपाकरणादयस्तद्विकारा वपात्वङ्मांसलोहितवसादयः। सोमधर्माः क्रयाभिषवादयः। आज्यधर्मा विलापनोत्पवनादय इति। न केवलं धर्मभेदादेषां भेदः। निवर्तकभेदादपीत्याह—'**पृथगधिकरणानि**' (बौ० श्रौ० २४।२) इति। अधिक्रियन्ते यैरिति व्युत्पत्त्याधिकरणशब्दो हविर्निवर्तकवस्तुवाचकः। पृथक् पृथक् [4]अधिकरणानि येषां तानि पृथगधिकरणानि। तद्यथा पुरोडाशादयोऽवघातादिकमन्तरेण न सिध्यन्ति, नापि विना दोहादिकं पयः प्रभृतय इति। संभवतामपि संस्कारकर्मणां व्यत्ययो विना वचनं न कार्यः, इत्याह—'[5]**तान्न मिथः संसादयेदनादेशात्** (बौ० श्रौ० २४।२) इति। यत्र त्वादेशस्तत्र कुर्यादेव, यथा [6]सांनाय्यधर्माः स्थाल्यधिश्रयणादयः पशाविति। निवर्तकानि नियत एवेत्याह—**येन येन यद्धविः संसिध्येत्तेन तेन तत् कुर्यात्तत्तस्याधिकरणम्**[7]। **उक्तान्यधिकरणानि**' (बौ० श्रौ० २४।२) इति।

हविषेत्येकवचनस्यापि प्रयोजनमुक्तम्। आपदि येन केनापि हविषा प्रधानयागमात्रेऽप्यनुष्ठिते [8]विधिफलसिद्धिर्भवतीति '**अशक्तावेकदेशः स्यात्**' इति न्यायात्।

---

१. ग— औषधीनाम्।

२. $इ_1$— अथाप्योषधि०, $इ_2$ स— अथाप्यौषधि०।

३. $इ_1$ ग भ स— 'शिथिलोदनः' नास्ति।

४. भ— अधिकारणानि।

५. $इ_2$— तन्नमिथः। भ— तानमिथः।

६. $इ_2$— सांनायधर्माल्पस्थाल्यधिश्रपणादयः।

७. भ— °कारणम्।

८. $इ_2$ ग भ— विधिसिद्धि०।

यक्ष्यमाण इत्येतद् व्याख्यातम्[1] 'भवति' इति तस्याप्रयोगेऽपि **'यक्ष्यमाण उपकल्पयते'** इत्येतावतैव कर्तृसामान्यं सिध्यति, तथापि भवतीतिग्रहणादर्थी समर्थो[2] विद्वानदुष्ट एवाधिकारी यजमानः स्यादिति द्योतयति **'स उपकल्पयते'** इति तच्छब्देन [3]तादृशं यजमानं परामृशति। तेन च सत्रे न केवलं गृहपतिनैव यागसाधनद्रव्योपकल्पनं कर्त्तव्यम्, अपितु सर्वैर्यजमानत्वस्या[4]विशेषादिति द्योत्यते। पुरस्तादेवेत्यनेन यावता कालेन यागसाधनद्रव्यसंपादनं कर्तुं शक्यते तावति काले संपादयेन्न पूर्वक्षणमात्रे तस्याशक्यत्वादिति द्योत्यते[5]। एष एव न्यायः[6] सर्वत्रानुसरणीय[7] इति। सर्वत्र '[8]**अग्नीनाधास्यमानो भवति स उपकल्पयते**' ( बौ० श्रौ० २।१२ ) इत्यादौ पुरस्ताद्ग्रहणं न करोत्याचार्यः।

हविरातञ्चनमिति हविष आतञ्चनार्थं द्रव्यमुकल्पते। [9]उपकल्पयन्ति परिकर्मिणः, तान् प्रयोजयेद् यजमान इत्यर्थः। अत्रातञ्चनद्रव्येषु दध्न एव मुख्यत्वात् तत् सम्पादनविकल्पमाह—

## एकाहेन वा द्व्यहेन वा यथर्तु इति।

ग्रीष्मे एकाहेन हेमन्ते द्व्यहेन च। वाशब्दादनियमं द्योतयति। यावता कालेन दधि संपद्यते तावतः कालात् पुरस्तादेवेत्यर्थः। आतञ्चनद्रव्येषु मुख्यत्वे ब्राह्मणमुदाहरति—

---

१. इ$_1$— व्याख्यानम्, इ$_2$— व्याख्यानाम्।
२. °दर्थसमर्थो। भ— °दथसमर्थो०। इ$_2$— °दर्थसमर्थो०।
३. इ$_2$— तादृशयजमानम्।
४. भ— यजमानतस्या०।
५. इ$_1$ इ$_2$ ग, स— द्योतयति।
६. ग भ— प्रायः।
७. इ$_2$— °सरणीयम्।
८. ग— अग्नीधास्यमानो भवति ति, भ— अग्निनाधास्यमानो भवति।
९. इ$_2$— उपकल्पयति पारिकर्मिणः।

**अथ वै ब्राह्मणं भवति—"[1]दध्ना तनक्ति सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सन्तत्यै[1]" ( तै० २।५।३।१०-११ )' इति ।**

अत्र 'दध्नातनक्ति' इत्युदाहरणादेव ब्राह्मणत्वेऽवगते यदुक्तम्—'**अथ वै ब्राह्मणं भवति**' इति तस्यैतत् प्रयोजनम्, अन्यत्र '**अथ वै भवति**' इत्युक्ते [2]ब्राह्मणोदाहरणप्रतिज्ञैव स्यादिति । '**अग्निहोत्रोच्छेषणमभ्यातनक्ति**' इत्येतद्दोहप्रकरणे निरूपयिष्यामः । एवं व्यवस्थिते [3]पर्वण्यन्वाधानात् प्रागनुष्ठेयं कर्मान्ते दर्शितम्—'**सोऽयमाहिताग्निः पुरा प्रातरग्निहोत्रात् [4]पिङ्ख्यानुपसादयेदनुग्रहार्थान् ।**' ( बौ० श्रौ० २४।२१ ) [5]पिङ्ख्यान् स्थूलकाष्ठविशेषान् । अनुग्रहार्थान् अग्निरक्षणसमर्थान् [6]देवतापरिग्रहणार्थान् । उपसादयेत् उप समीपे सादयेत् स्थापयेत् ।

अत्र केचिदग्निहोत्रविहरणात्प्रागेव काष्ठोपसादनविधानादग्निहोत्रदर्शपूर्णमासयोरेकमेव विहरणमिति मन्यन्ते । यदि विहरणभेदः स्यात्, अग्निहोत्रानन्तरं स्थूलकाष्ठोपसादनं ब्रूयात् । न च तथाब्रवीत् । तन्मन्यामहे [7]तन्त्रमेवैतद्विहरणमिति । अन्ये तु विहरणविकल्पं मन्यन्ते, यथाह भरद्वाजः '**य एवैषामग्निहोत्राय [8]प्रणीतस्तं गृह्णीयादित्याश्मरथ्यः । अन्यं प्रणयेदित्यालेखनः**' इति । तदेतदाचार्यस्याभिमतमित्येतदनुपपन्नम् । स्थूलकाष्ठानां समीपे स्थापनमात्रस्योक्तत्वात् । न चैतावता

---

१-१. पाठोऽयं भाष्यानुरोधेन मुद्रितबौधायनश्रौतसूत्रमनुसृत्य संयोज्यते ।

२. इ१— ब्राह्मणोदाहार० ।

३. इ१ इ२ ग— पर्वण्यग्न्याधानात् ।

४. इ२— विहव्या० ।

५. इ२— विहव्यान् ।

६. इ१ इ२ स— देवतापरिवहणार्थान् ।

७. इ२— तन्त्रेणमेव० ।

८. इ२— प्रणीतस्न ।

विहरणस्य तन्त्रत्वं श्रौतमार्थं वावगम्यते। प्रतिकर्म प्रणयनं चाचार्यस्याभिमतम्। तथा च वक्ष्यति 'उदह्लवपदिकं सृजेत्' (बौ० श्रौ० २।७) इत्यादि।

**'व्रतोपानीयमन्नीयपाचयति'** ( बौ० श्रौ० ४।२१ ) व्रतोपायनं व्रतोपगमनं तत्र[1] हेतुभूतमन्नं परिकर्मिभिः पाचयति। **'तस्याशितौ भवतः'** (बौ० श्रौ० २४।२१) इत्यादिनास्मिन्नेव काले भोजनं न विधीयते। द्वैधे कालान्तरग्रहणात्—**'व्रतोपायन- इति। स ह स्माह बौधायनः संगवकाले वा व्रतमुपेयाद् धेनुषु वा दोह्यमानासु, प्रणीतासु वा प्रणेष्यत्सु हविष्षु वाऽऽसन्नेष्विति'** (बौ० श्रौ० २०।२१)। प्रणेष्यत्सु प्रणीयमानास्वित्यर्थः। छान्दसो व्यत्ययः। तदेतत्कालद्वयं शालीकिमतेन पर्युदस्यति **'अत्रो ह स्माह शालीकिः पूर्वेद्युः कालं खलु व्रतोपायनं भवति।'** (बौ० श्रौ० २०।१) खलुशब्दोऽवधारणे। अत्रार्थे ब्राह्मणमुदाहरति **'ब्राह्मणम्–बर्हिषा [2]पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्** (तै० १।६।७७) **इति'**। ब्राह्मणाभिप्रायमाह— **'संगवकाल* एव व्रत**मुपेयादिति।'** (तत्रैव) यतो बर्हिराहरणं वत्सापकरणं च संगवकाले ततो बर्हिवत्सशब्दौ [3]तत्कालोपलक्षणावित्यर्थः। पक्षान्तरमाह **'अन्वाधानप्रभृतीन्यौपमन्यवः।'** (तत्रैव) अन्वाधानान्तरं चोदितेषु कालेषु अविरोधेन भोजनमित्यर्थः। तमेवाविरोधं कर्मान्ते स्फुटयति **'सर्पिर्मिश्रं [4]दधिमिश्रमक्षारलवण- मपिशितम्। [5]सर्वमेवैतदहः कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यः। तस्य ब्राह्मणं**

---

१. इ₁ ग भ— 'तत्र' नास्ति।

२. भ— मासे व्रत०।

३. भ— तत्कालो (अविरोधेन भोजनमित्यर्थः) पलक्षणावित्यर्थः।

४. ग— दधिमिश्रिमक्षारालवण०। इ₂ दधिमिश्रमाक्षारलवण०।

५. ब श्र— कौशीधान्यम्।

---

*संगवकाले वा = अयं चास्मिन्नहन्यर्थप्राप्तस्याशनकालनियमस्तेन सद्यस्कालासु असत्यां चक्षुधिनेष्यते—इ₁।

**व्रतम् = दैवात् प्रातराशे सायमुत्कृष्टेऽपि नैते विकल्पा भवन्ति, किन्तु प्रातराशः पूर्ववदेवेति—इति वैजयन्त्याम्— इ₁।

**प्रतिपाद्याश्नीयात् ।'** ( बौ० श्रौ० २४।२१ ) अपिशितम् अमांसम् । *कोशीधान्य-[1]शिम्बीधान्यफलोद्भवं मुद्गादिकमित्यर्थः । ब्राह्मणं प्रतिपाद्य भोजयित्वा तस्याश्नीयादित्यन्वयः । व्रतोपायनमन्नमश्नीयादित्यर्थः । **नैतदहः शूद्रायोच्छिष्टं दद्यात् ।'** (तत्रैव) **'उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च'** (मा० ध० १०।१२५) इति प्राप्तस्यास्मिन् विषये प्रतिषेधः । **'पत्न्या एवैतदहरुच्छिष्टं दद्यात् ।'** (बौ० श्रौ० २४।२१) अत्रैकवचनमविवक्षितम् ।

**'नासन्द्यां शयीत'** (तत्रैव) । आसन्दी खट्वा । **'न स्त्रियमुपेयात् ।'** (तत्रैव) अशक्तश्चेत् **'कामं त्वेवोपरि शयीत । स्त्रियं त्वेव नोपेयात्'** (तत्रैव) [2]अशक्तोऽपि **'व्रतचारी त्वेव स्यात्'** (तत्रैव) इत्यनेन क्रोधरोदनादिपरित्यागोऽपि सङ्गृहीतः । तथा च गोपालः—

**'अग्निहोत्रे हुते विप्रं भोजयित्वैव दम्पती ।**
**आशितौ सर्पिषा दध्ना मिश्र[3]मुच्छिष्टकं स्त्रियै ॥**
**मांसेक्षुरसनिर्यासलवणानृतमैथुनम् ।**
**शूद्रायोच्छिष्टदानं च न कुर्यात् क्रोधरोदने' इति ॥**

कर्त्तव्यान्तरमाह—**'स यदि केशश्मश्रु वापयिष्यमाणः स्यात् केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत । स्नायादभ्यञ्जीत । दीक्षायै रूपं [4]कुर्वीत'** (तत्रैव) इति । स यजमानो यदि वपनयोग्यकेशश्मश्रुतया तद्वपनेच्छवान् स्यात्तदा पर्वणि वापयीत । अतिसूक्ष्मत्वादवपने न दोष इति – **यदी**त्यनेन [5]द्योतयति । तथा च गोपालः **'विकल्पो वपनः'** इति । **केशश्मश्रु वापयित्वा'**

---

१. ङ₁— शिम्बीधान्यं फलोदभवम् । ङ₂ 'शिम्बीधान्यम्' नास्ति ।
२. ङ₂— अशक्तेऽपि ।
३. ग— °मुच्छिष्टं स्त्रियम्, भ— °मुच्छिष्टं स्त्रियै ।
४. ङ₂— कुर्वन्ति ।
५. भ— द्योत इति ।

---

*कोशीधान्यम् = प्राशातिकधान्यमपामार्गबीजसदृशमिति भाष्यकारमतिः । कोशीधान्यमित्यन्यः वैजयन्त्याम्— ङ₁ ।

इत्यत्र पाठक्रमो न विवक्षितः, तत्प्रकरणे श्मश्रुवपनस्यैव प्राथम्यविधानात्—**'श्मश्रुण्येवाग्रे वपते। अथोपपक्षौ। अथ केशान्'** (बौ० श्रौ० १७४०, बौ० गृ० प० १।१३) इति।

स्नायादित्यत्र कर्माङ्गम्। स्नानान्तरं विदधाति, न शुद्ध्यर्थं तस्यान्यतः प्राप्तत्वात्। तथा [1]चोपव्याहरणे वक्ष्यति—**'आदित एव तीर्थे स्नात्वोदेत्य'** (बौ० श्रौ० २।२) इति। अभ्यञ्जीत **'नवनीतेन'** इतिशेषः, अभ्यक्तो **'नवनीतेन'** (तै० ६।१।१४,१म्) इत्युक्तत्वात्। अञ्जनेनाञ्जीत। दीक्षायै रूपं कुर्वीतेति [2]स्तुत्यर्थं न तु तद्धर्मातिदेशार्थम्।

ननु, **'पर्वणि च केशश्मश्रु वापयते। 'अप्यल्पशो लोमानि वापयते'** (आप० श्रौ० ४।१।४-५) इति सूत्रे वपनस्य पाक्षिकत्वं न प्रतीयते, प्रत्युत **'अप्यल्पशः'** इत्यस्योभयत्राभिसम्बन्ध इति व्याख्यातृपक्षे केशादीनामल्पत्वेऽपि वपनं विधीयते, तत्सूत्रविरोध इति। मैवम्। सूत्रार्थपरिज्ञानात्। एवं हि तद्भाष्ये व्याख्यातम्—**'अर्थप्राप्तत्वाद्वपनस्य यदि विद्यते [3]ततोऽस्मिन् काले नियम्यते। अत इष्टि-बहुत्वेऽपि पुनः पुनर्न क्रियते। च शब्देनान्यत्राप्यप्रतिषेधोऽनुमीयते। अप्यल्पशः अल्पान्यपि लोमानि, असमर्थान्यपि श्मश्रूणि'** (आप० श्रौ०, धूर्तस्वामिभाष्यम् ४।१।४-५) अस्य भाष्यस्य [4]श्रीरामस्वामिव्याख्याने **'यदि विद्यते'** इत्यस्य **'यदि वर्षिष्ठा, केशा विद्यन्ते, इच्छा च विद्यते ततोऽस्मिन् काले नियम,'** (आप० श्रौ०, रामाग्निचिद्वृत्तिः ४।१।४) इत्यर्थमभिधायानन्तरमेवोक्तम्' **अनिच्छायां च केश-भूयस्त्वे नियतम्। मृता वा एषा त्वगमेध्या** (तै० ६।१।१।४) **इत्यादि लिङ्गात्'** (तत्रैव) इति। तदेतत्पूर्वापरविरुद्धं वचनम्। पूर्वमिच्छायां निमित्तत्वमभ्युप-गम्य समनन्तरमेव तन्निषेधात्। छेदनभेदननिमित्तकर्मणामिव कादाचित्काङ्गत्वमिति

---

१. इ$_2$— चोपव्याहकरेण।

२. भ— श्रुत्यर्थम्।

३. आप० श्रौ० (धूर्त०)— अन्यस्मिन्।

४. भ इ$_1$— श्रीरामव्याख्याने।

वदता कथं नामेच्छानिमित्तकत्वं वपनस्योच्यते ? नहि भवति नैमित्तिकमैच्छिकं चेति । इच्छापि निमित्तं चेत्, न । अनिच्छायां च केशभूयस्त्वे नियतमिति व्याहन्येत ।

यच्चान्यदुक्तम्—'[1]पक्षद्वयेऽपि प्रतिपौर्णमासमेव वपनं न दर्शे । अविकारिसंस्कारत्वादेकत्वाच्चाधिकारस्य' ( आप० श्रौ० रामाग्निचिद्वृत्तिः ४।१।५ ) इति । एतदपि पूर्वापरानुसन्धानरहितमेव, यतः कर्मण्यप्रवृत्तोऽपि कुर्यादिति केचित्' (तत्रैव ४।१।४) इत्युदाहृत्य न प्रत्याख्यातम् ।

अतः कर्मण्यप्रवृत्तश्च कथमधिकारी स्यात् । किं 'प्रकरणादेव' कर्माङ्गत्वे सिद्धे पर्वग्रहणात्कर्मणोऽनङ्गम्[2]' ( तत्रैव ) इति चोक्ते नैकतरपक्षपरिग्रहोऽपि । अपर्वकालेऽपि दर्शपूर्णमासप्रवृत्तौ कर्त्तव्यम्' (तत्रैव) इति केचिदित्युदाहृतः पक्षोऽपि । 'चशब्देनान्यत्राप्य[3]प्रतिषेधोऽनुमीयते' ( आप० श्रौ०, धूर्तस्वामिभाष्यम्, ४।१।४ ) इति भाष्य-[4]सम्मतोऽर्थः, तमप्यनादृत्य किमर्थं दर्शे वपननिषेधनिर्बन्धः कृत[5] इति चिन्त्यमेतत् ।

किं चैतस्मिन् पक्षे सौत्रः पर्वशब्दः पूर्णमासवचनो न दर्शवचन इति वक्तव्यम् । न चात्र नियामकं किंचिदस्ति । सत्त्वे वा 'चशब्दादन्यत्रानियमोऽनुमीयते' (द० प्र०, पृ० ४१३) इति व्याख्याय दर्शे तन्निषेधः स्ववचनविरुद्धः, दर्शस्य पूर्णमासादन्यत्वादिति । अतएवाभियुक्ततरैरन्यै[6] रुद्रदत्तादिभिः सूत्रमेवं व्याख्यातम्—'ऐच्छिकत्वाद्वपनस्य पर्वणि पाक्षिकं* सन्नियम्यते । वापयत एव पर्वणि । तेनापर्वण्यनियमः' (आप० श्रौ० रु० ४।१।४, द० प्र०, पृ० ४१३) इति ।

---

१. आप० श्रौ०— अस्मिन्नपि पक्षे ।

२-२ इ₂— नार्थग्रह्णात् कर्मणोनङ्गम् ।

३. आप० श्रौ०— °यत्रास्य ।

४. ग— समानार्थः ।

५. इ₂— वपननिषेधनिवन्धे कुतः ।

६. इ₁ इ₂ — 'रुद्रदत्तादिभिः' नास्ति । भ— रुद्रदत्ताख्यैः ।

---

*पर्वणि पाक्षिकम् = पथिकृन्मुखायां प्रकृतौ विकृतिषु चापर्वकालासु नेष्यते—इ₁ ।

'अत्र 'पर्वणि वापयत एव' इति वपनाभावप्रतिषेधोऽवगम्यते। अतोऽत्यल्पभावादेव केशानां वपनानिच्छयैव पाक्षिकत्वमित्यस्मद्व्याख्यैकवाक्यता। उत्तरत्रापि' [1]तनुरुहाण्यल्पान्यपि वापयितव्यानि। केशश्मश्रु त्वल्पं [2]सदुपेक्षणीयम्' (तत्रैव ४।१।५) [3]इति भावनिगमनाच्चापि रुद्रदत्तेनैव[3] 'पितृयज्ञवदनङ्गं स्वकालविधानात्' (तत्रैव) इति वदताप्यासंवत्सरं दर्शपूर्णमासानारम्भे ज्वराभिभवादिना तत्परित्यागे च पर्वणि वपनस्यावश्यकता द्योतितेति, न दर्शे तन्निषेधशङ्काप्यवकाशमासादयेत्। प्रवरणादङ्गत्वपक्षेऽपि 'मृता वा एषा त्वग्' इत्यादिलिङ्गाद्वपनयोग्यकेशादिसंपत्तौ यज्ञियत्वापादनाय[4]दर्शे च पूर्णमासे च[4] सर्वथैव वपनं कर्त्तव्यमिति सिद्धम्[5]।

**अयमत्र प्रयोगक्रमः—**

प्रातर्होमार्थं विरहणात्प्रागेव गार्हपत्यस्योत्तरतोऽन्वाधानार्थं स्थूलानि काष्ठान्यासाद्य, व्रतोपायनीयपाकाय[6] समादिश्य, विहरणपक्षे विहृत्याग्निहोत्रानन्तरमग्निद्वयमपास्य[7] गोमयेनोपलिप्य वापयीत। ततः सपत्नीकः स्नात्वा, अहतं वासः परिधाय यजमानो नवनीतेनाभ्यञ्जीत, लब्धब्राह्मणानुज्ञः पवनमन्त्राचमने कुर्यात्। तथा च परिभाषायाम्—'[8]ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात्, समृद्धमेवास्य तत्' (बौ० गृ० प० १।५।१०) इति। यद्यत्कर्म कुर्वीत् तद्ब्राह्मणानुज्ञा-

---

१. आप० श्रौ० रु०— तनूरुहाणि तान्यल्पान्यपि।

२. आप० श्रौ० रु०— सदुपेक्ष्यताम्।

३-३. ग स— भावनिगमनाच्चापि। भ— भाव इति रुद्रदत्तेनैव।
इ१ इ२— भाव इति निगमनाच्चापि।

४-४. भ— दर्शपूर्णमासे च।

५. भ— 'सिद्धम्' इत्यस्यानन्तरम् 'तदयमर्थः—केशश्मश्रुषु च मध्ये श्मश्रु त्वल्पमपि वापयत एव। केशास्त्वल्पे सन्तोऽप्युपेक्षेरन्निति। बौधायनश्चाह— यदि केवलं श्मश्रु वापयिष्यमाणं स्यादिति।'

६. ग— °पाककाय।

७. इ२— °द्वयमस्य।

८. इ२— येऽत्र।

पूर्वकं चेत्साङ्गं भवतीत्यर्थः। [1]तदेवं वेदकर्माणि प्रयोक्ष्यन्नादित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय, [2]एकविंशत्या दर्भपुंजीलैरात्मानं पावयित्वा यस्य कुर्वन् भवति तं पावयति।' (बौ० गृ० प० १।३।७) अध्वर्युरात्मानं पावयित्वा यजमानं पावयतीत्यर्थः। तत्र एकविंशतिदर्भपुंजीलै[3]स्त्रेधा विभक्तैः सप्तभिः कण्ठादुपर्युन्मृज्य नाभेरुपर्याकण्ठमुन्मृजेत्[4]। नाभेरधस्तादगुल्फमवमृजेत्[5]। त्रेधा विभक्तान् समुच्चित्यादभिरभ्युक्ष्योदङ् निरस्याप उपस्पृशेत्। निरसनादिषूदकोपस्पर्शनस्य [6]धर्मे विधानात्—'अंगमुपस्पृश्य [7]सिचं वाप उपस्पृशेत्' (बौ० ध० १।१५।५) [8]इति। सिचं वासः। 'एवं छेदनभेदनखननिरसन[9]पितृराक्षसनैर्ऋतरौद्राभिचारणीयेषु' (बौ० ध० १।१५।६) इति।

'अथाप आचम्येति तदपि द्वितीयमब्लिङ्गाभिस्त्रिः पिबेद् व्याहृतिभिस्त्रिः परिमृजेत्। अपि वा व्याहृतिभिस्त्रिः पिबेदब्लिङ्गाभिस्त्रिः[10] परिमृजेत्' (बौ० गृ० प० २।४।२) इति। 'तदपि द्वितीयम्' इत्यनेन प्राथमिकं प्राकृतमाचमनं द्योतयति। अब्लिङ्गाभिरिति। 'आपो हि ष्ठा मयोभुवः' 'यो वः शिवतमो रसः' 'तस्मा अरं गमाम वः' (तै० ४।१।५।२-४), इत्येताभिः तिसृभिः प्रत्यृचमपः पीत्वा। व्याहृतिभि[11]स्त्रिः परिमृजेदिति। सप्रणवाभिः समुच्चिताभिरेकैकं मार्जनम्। तथा

---

१ ग भ— वदेवं कर्माणि।

२. ग भ इ₂— एकविंशतिदर्भपुंजीलै०।

३. इ₁ इ₂— °पिंजूलैः।

४. ग — °'मृजेत्' इत्यस्यानन्तरम् 'सप्तभिर्गुल्फौ'।

५. इ₂— °ताङ्गुष्ठमवमृजेत्।

६. इ₂— धर्मविधानात्।

७. इ₂ ग भ— सिञ्चन।

८. इ₂— अतिसिचवासः।

९. बौ० ध०— °पित्र्यराक्षस०।

१०. इ₂— 'त्रिः' नास्ति।

११. ग भ— व्याहृतीभिरेव।

च धर्मे—'ॐ भुर्भुवः सुवरित्येताभिर्व्याहृतिभिस्सर्वाभिस्सर्वपातकेष्वाचामेत्' ( बौ० ध० ४।३।२ ) इति। व्याहृतिभिः पानपक्षेऽपि समुच्चिताभिरेवाचामेदिति। अविशेषेण विधानात् पक्षद्वयेऽपि व्याहृतिभिरेव स्वान्यङ्गानि चोपस्पृशेत्।

ततो मन्त्रप्रोक्षणं कुर्यात् तदुक्तं धर्मे—'अप आचम्य सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरन्यैश्च[1] पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति' इति (बौ० ध० २।४।२) इति। सुरभिमत्या—'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्' (१।५।११।११)। 'आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः' ( तै० ४।१।५।२-४)। (वारुणीभिः) 'यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यवि द्यवि॥ यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत् तव धर्मा युयोपिम। मा नस्तस्मादेनसो देव रीरिषः॥ कितवासो तद्रिरिपुर्नदीवि यद्वा घ सत्यमुत यन्न विद्म। सर्वा ता वि ष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः' (तै० ३।४।११।१८-२०)। ( हिरण्यवर्णाभिः ) ? 'हिरण्यवर्णा शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु॥ यासां राजा वरुणो याति मध्ये सत्यानृते अपश्यञ्जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शं स्योना भवन्तु॥ शिवेन मा चक्षुषा पश्यताऽपः शिवया तनुवोप स्पृशत त्वचं मे। सर्वां अग्नीं रप्सुसदो हुवे वो मयि वर्चो बलमोजो निधत्त' ( तै० ५।६।१।१-४ )। (पावमानीभिः) 'पवमानः सुवर्जनः' ( तै० ब्रा० १।४।८ ) इत्येतमनुवाकम्। व्याहृतीभिरन्यैश्च पवित्रैः—'शन्नो देवी०' ( तै० ब्रा० १।२।१।१ ) इत्येवमादिभिः। पवनाचमनमन्त्रप्रोक्षणानि पत्नीनामृत्विजामपि समानानि। सर्वत्र कर्मान्तेऽवाचमनम्।

ततो यजमानः पत्न्यश्च यथानुपूर्व्यमुत्कराहवनीययोरन्तरेण प्रपद्य, जघनेन

---

१. इ२— व्याहृतिभिरन्यच्च।

गार्हपत्यं प्रागग्रेषु दर्भेषु प्राङ्मुखा उपविशन्ति, उत्तरतः पतिर्दक्षिणतः पत्न्यः। ऋत्विजश्चैवं प्रपद्य गार्हपत्यस्योत्तरतः प्राङ्मुखा उपविशन्ति। अत्रोत्कराहवनीयमध्यमेव तीर्थशब्दवाच्यं चात्वालाभावात्। सति तु चात्वलेऽन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम्[1]। तथा धर्मे '**अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम्। अचात्वाल आहवनीयोत्करौ।**[2] **तत्र कर्त्तारः** [3]**पत्नीयजमानश्च प्रपद्यन्ते**[3]। **संस्थिते** [4]**विसंस्थिते च संचरउत्करदेशात्**' (बौ० ध० १।१५।१५-१९) इति संस्थिते यज्ञसमाप्तौ। '**यथाप्रपन्नं निष्क्रामेत्**' इति चोदितः संचरः। विसंस्थिते [5]यज्ञापरिसमाप्तौ चोदितोऽत्रोदितो[6] वा संचर इत्यर्थः। ततः सर्वैरपि प्राणायामः शुद्ध्यर्थे विधेयः। अस्य चाधिकारिसंस्कारतया कर्मान्तेप्येकाधिकारप्रवृत्तयोरपि दर्शपूर्णमासयोरादौ कर्त्तव्यतावसेया[7]प्रतिकर्मशुद्धेराकाङ्क्षितत्वात्।

अतएव पत्नीनामप्यमन्त्रकः प्राप्तः। मन्त्रश्च धर्मे दर्शितः—'**सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते**' (बौ० ध० ४।१।२८, २५)। ततो यज्ञाधिदैवतं विष्णुं ध्यायेत्। [8]तथा च कर्मान्ते—'**क उ खलु यज्ञ इति। पुरुष**' इति (बौ० श्रौ० २४।२) अत्र यज्ञस्य कर्मरूपत्वेनासन्दिग्धत्वान्न तत्स्वरूपविषयः प्रश्नः, किन्तु यज्ञाधिदैवतविषयः। अतएव पुरुष इत्युत्तरम्। पुरुष इति विष्णुरुच्यते यतः स सर्वात्मा। तथा च परिभाषायाम्—'**पुरुषो वै यज्ञो**[9] **यज्ञो वै विष्णुः पुरुषः। पुरुष एवेदं सर्वम्**' इति च। तदेव विष्णुध्यानं कर्मादा-

---

१-१. भ— 'तथा च, तीर्थम्' नास्ति।

२. भ— तत्र कर्त्ता, इ१— ततः कर्त्ता।

३-३. बौ० ध०— पत्नीयजमानौ च प्रपद्येरन्।

४. इ१ भ— 'विसंस्थिते' नास्ति। बौ० ध०—विसंस्थिते संस्थिते च। इ२— संस्थितविसंस्थिते।

५. ग स — यागसमाप्तौ। इ२—यज्ञासमाप्तौ।

६. भ— '°चोदितो°' नास्ति।

७. इ२ — ताज्ञेया।

८. भ —यथा।

९. ग भ— '°यज्ञो°' नास्ति।

वृत्विग्भिरपि कर्त्तव्यम् । गोपालेनाध्वर्युकर्तृकत्वेनाभिधानस्योपलक्षणार्थत्वात् । यज्ञाधिदैवतं विष्णुं ध्यात्वादौ **'पुरुषो ह्यसौ'** इति ।

ततो यजमानो जपति—**'याः पुरस्तात् प्रस्रवन्त्युपरिष्टात् सर्वतश्च याः । ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे ॥ देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम्'** (तै० ब्रा० ३।७।४।१) । अत्र जपचोदनात्स्वरनियमः । अन्यत्रैकश्रुत्या[1] **'यज्ञकर्मण्यजपन्यूङ्खसामसु'** (पा० अष्टा० १।२।३४) इति स्मरणात् । ततः **'श्रद्ध एहि । सत्येन त्वाह्वयामि'** (बौ० श्रौ० २।१) (इति श्रद्धामाहूय) जपति **'आकूत्यै त्वा कामाय त्वा समृधे त्वा पुरोदधे । अमृतत्वाय जीवसे । आकूतिमस्यावसे काममस्य समृद्ध्यै इन्द्रस्य युज्यते धियः । आकूतिं देवीं मनसः पुरो दधे यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टम्'** (तै० ब्रा० २।८।३) **'स्वर्गकामः पौर्णमासेन हविषा यक्ष्ये'** अमावास्येनेत्यमावास्यां[2]त्रिरुपांशूक्त्वा त्रिरुच्चैर्ब्रूयात् । अस्य मन्त्रत्वाद्घृतानुमन्त्रणवदकामेनापि स्वर्गकामपदं प्रयोक्तव्यमिति वक्ष्यामः ।

'[3]**तन्म ऋध्यतां तन्मे समृध्यतां तन्मे संपद्यतां कामः'** (बौ० श्रौ० २।१) इत्युक्त्वा, ऋत्विग्भिः **'तत्र ऋध्यतां तत्ते समृध्यतां तत्ते संपद्यतां कामः'** (तत्रैव) इत्युक्ते **'ॐ तथा'** इति ब्रूयात् । ततो देवताः संकल्पयेत्[3]* । ततः प्राङ् मुखमासीनमध्वर्युं प्रत्यङ्मुख आसीनो यजमानः **'अस्यामिष्ट्यामध्वर्युं त्वा वृणे'** इति वृणीयात् । एवं ब्रह्माणं[4] होतारमाग्नीध्रं च । एवं वृतोऽध्वर्युः सूत्रमजिनं वोत्तरीयं यज्ञोपवीतं कृत्वा, आचम्य गार्हपत्यस्योत्तरमुपविश्य **'इडा देवहूर्मनुर्यज्ञनीर्बृहस्पति-**

---

१. इ₁ इ₂ ग स— °श्रुत्यम् ।

२. ग— त्रिरूपांशुरुक्त्वा ।

३-३. इ₂— 'तन्म ... ..संकल्पयेत्' नास्ति ।

४. इ₃— 'ब्रह्माणम्' इत्यस्यानन्तरम् 'त्वा' ।

---

*संकल्पयेत्=नामवतीष्विष्टिषु तेन तेन नाम्नोपलक्षणं कर्मणः । आग्रयणीयं हविः । अनामकास्तु सामान्यनाम्नोपलक्षणीयाः । ऐष्टं हविः—इ₁ ।

रुक्था मदानि शंसिषद्विश्वे देवाः सूक्तवाचः पृथिवि मातर्मा मा हिंसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरो नु मदन्तु' ( तै० ३।३।२।३ ) इति जपेत् । तथा [1]चोपानुवाक्ये 'आर्त्विज्यं करिष्यन् शस्त्रं वा प्रतिग-रिष्यन् इडादेवहूरित्येतद्यजुर्जपेत्' (बौ० श्रौ० १४।११) इति । [2]एतद्यजुः सर्वर्त्विजां समानम् । अध्वर्युः 'ॐ तथा' इत्युक्त्वा 'देवागातुविदो गातुं यज्ञाय' इति जपेत् । तथा च कर्मान्ते क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति' ( बौ० श्रौ० २४।२ ) । आरभतेऽनेनाध्वर्युरित्यारम्भः, स क इति प्रश्नः। प्रतिष्ठा समाप्तिहेतुश्च क इति प्रश्नः । उत्तरम् [3]वात एव यज्ञारम्भो वातः प्रतिष्ठा' ( बौ० श्रौ० २४।२ ) इति । अत्र वातशब्देन 'देवा गातुविदः' इति यजुरुपलक्ष्यते' वाताद्यज्ञः प्रयुज्यताम्' इति वातशब्दश्रवणात् । यजमानकर्तृके त्वन्वाधाने यजमान एवैतद्यजुः संजपेत् । उद्धरण-पक्षेऽन्वाहार्यपचनं स्वयोनित उत्पाद्य गार्हपत्यादाहवनीयं प्रणीयाहवनीयात्सभ्याव-सथ्यौ प्रणयेत् ।

**अग्नीनन्वादधाति । त्रीणि काष्ठानि गार्हपत्येऽभ्यादधाति* त्रीण्यन्वाहार्यपचने त्रीण्याहवनीये—इति ।**

अत्र 'अन्वादधाति' इति वचनमन्वाधानसंज्ञाप्रख्यापनाय । तूष्णीमन्वाधान-मुक्तम् । 'अग्नीनामन्वाधान इति सूत्रमौपमन्यवीपुत्रस्य' इति भेदेन पक्षान्तरोप-न्यासादुभयत्रापि [4]मन्त्रावचनाच्च समन्त्रकान्वाधानमुक्तम्[5] । समन्त्रकान्वाधान-

---

१. इ₁— चोपानुं० ।
२. इ₂— तद्याजुषार्त्विज्यम् ।
३. इ₂— वातारम्भ एव ।
४. 'मन्त्रवचनाच्च'—इत्यर्थतः पाठः स्यात् ।
५. इ₁ ग भ स— 'समन्त्रकान्वाधानमुक्तम्' नास्ति ।

---

*अभ्यादधाति = स्वाहाकारं केचित्, स्वाहा करोति, आदधातीति चोदितत्वात् । केचिदुद्देशत्यागमिच्छन्ति— इ₁ ।

विकल्पास्तु द्वैधे दर्शिताः **'अत्रो ह स्माह बौधायनो विहव्याभिरग्नीनन्वादध्यात्ति सृभिस्तिसृभिरेकैकम्** ( बौ० श्रौ० २०।१ ) । विहव्या इति **'ममाग्ने वर्चो विहवेषु'** (तै० ४।७।१४) इत्यनुवाकाम्नाता दशर्चः । तत्र तिसृभिरृग्भिः प्रत्यृचमेकैकस्मिन्नग्नावेकैकं समिधमिति क्रमेण तिस्रः तिस्रः समिध आदध्यात् । **येन नव समामनेयुः'** (बौ० श्रौ० २०।१) इति । ये शाखिनो विहव्या नवैवर्चः समामनन्ति तेषां [1]दशम्या अभावाद्वक्ष्यमाणोपस्थानाभावः । पक्षान्तरमाह **'अथ येऽष्टौ प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुः'** (तत्रैव) इति । ये शाखिनोऽष्टावेव विहव्या [2]आमनन्ति तेषां पक्षे प्रथमामृचं द्विरावर्त्य गार्हपत्यान्वाधाने मन्त्रत्रयं सम्पाद्योत्तमामष्टमीं वा [3]द्विरावर्त्याहवनीयान्वाधाने मन्त्रत्रयं सम्पाद्यमित्यर्थः ।

पक्षान्तरमाह—**'अथ ये दश तिसृभिस्तिसृभिरेकैकमन्वाधायोत्तरेणाहवनीयं तिष्ठन् दशमीं निगदेत्'** (तत्रैव) इति । दशम्यर्चाहवनीयमुपतिष्ठेदित्यर्थः । **'अत्रो ह स्माह शालीकिर्यो नु खलु गार्हपत्यः सकृदन्वाहित एष भवति । ग्रामयोनिरन्वाहार्यपचनः । आहवनीयमेवैकं विहव्ययान्वादध्यात्[4] । [5]अथातिशिष्टा उत्तरेणाहवनीयं तिष्ठन्निगदेदिति'** ( तत्रैव )। य एष गार्हपत्यः सकृदेव प्रथमदर्शपूर्णमासोपक्रम एव वा प्रतिकर्म वा सकृदमन्त्रकमेकया समिधान्वाहितो भवति । अन्वाहार्यपचनोऽपि ग्रामयोनिर्लौकिकाग्न्याहितः । एवं सति एकमेवाहवनीयं विहव्यया प्रथमयर्चान्वादध्यात् । अतिशिष्टा ऋचः शाखाभेदेन सप्ताष्टौ नव वा आहवनीयस्योत्तरतस्तिष्ठन्निगदेदिति ।

**'अत्रो ह स्माहौपमन्यवो विहव्याभिरेवाग्नीनन्वादध्यात्'** ( तत्रैव )। एवकारस्तूष्णीमन्वाधानं मन्त्रान्तरेण चान्वाधानमपाकरोति । अत्र विशेषमाह—**'एकैकमेकैकया'** ( तत्रैव ) इति । एकैकयर्चा एकैकमग्निमन्वादध्यात् । [6]**'अथाति-**

१. भ—दशम्यभावात् ।

२. भ— समामनन्ति । इ₂— इत्यामनन्ति ।

३. ग भ इ₁— च ।

४. इ₁— दधाति ।

५. इ₁— शिष्टाः ।

६. इ₂— अत्राति० ।

शिष्टा उत्तरेणाहवनीयं तिष्ठन्निगदेदिति' ( तत्रैव ) पूर्ववत् । 'अत्रो ह स्माह मौद्गल्य आहवनीयमेवैकमन्वादध्यात्' नेतरौ । मन्त्रतोऽपि विशेषमाह—'अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वो यज्ञाय रमतां देवताभ्यः । वसून् रुद्रानादित्यानिन्द्रेण सह-देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥ इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह तानावहतु पौर्णमासं हविरिदमेषां मयि—इति पौर्णमास्यायाम्, आमावास्यं हविरिदमेषां मयि—इत्यमावास्यायामिति । अत्रो ह स्माह मैत्रेय आहवनीयमेवैकं[1] विहव्ययान्वादध्यात्तूष्णीमितराविति । अथातिशिष्टा[2] उत्तरेणाहवनीयं तिष्ठन्निगदेदिति । व्याहृतीभिरेवाग्नीनन्वादध्यादिति [3]राथीतरः' ( तत्रैव ) इति । अत्र समुदिताभिरेकैकमन्वादध्याद् व्यस्ताभिर्वा । प्रत्येकं समिधां त्रित्वमेकत्वं वेति द्रष्टव्यं सर्वेश्चापि । विशेषः कर्मान्ते दर्शितः—'अग्नीनन्वादध्यादुपस्थं कृत्वा गार्हपत्यमूर्ध्वंज्ञुरन्वाहार्यपचनं प्रह्व आहवनीयं तिष्ठन् दशमीं निगदेदिति' ( बौ० श्रौ० २४।१ ) क्रमः । स्वस्तिकासनस्थ उत्कटिकासनस्थ प्रह्वश्चेत्यर्थः ।

### परिसमूहन्ति ।

अध्वर्युर्यजमानः पत्न्यश्चाग्न्यातनं परिसमूहन्ति ।

### उपवसथस्य रूपं कुर्वन्ति ।

उपवसथशब्दः परिसमूहनादिकर्मसमूहवाचकः । तस्योपवसथस्य रूपं यैः कर्मविशेषैर्भवति तानि कर्माणि कुर्वन्तीत्यर्थः । तथा च गोपालः—'परिसमूहनवारिसमुक्षणे हुतभुजां शकृता परिलेपनम् । कुसुमकाष्ठसमाहरणव्रतं [4]वदति रूपमिहौपवसथकम्' इति । उपवसथान्तर्गतस्यापि परिसमूहनस्य पृथगभिधानं

---

१. ग भ— °नीयमेकम् ।

२. ब श्र— °मितरावथातिशिष्टा० ।

३. इ१ भ— रथीतरः ।

४. इ२— व्रते ।

कर्मान्तरेष्वपि परिस्तरणादिवन्नियतत्वख्यापनार्थं परिसमूहनादिकत्वं [1]चोपवसथस्य स्थापयितुमिति ।

## अथास्य व्रतोपेतस्य—इति ।

अस्य यजमानस्य । व्रतोपेतस्य व्रतनिवृत्ति[2]संकल्पवतः । **'पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । अपां पयसो यत्पयः तेन मामिन्द्रं संसृज'** (तै० १।५।१०।७) इत्यभिमन्त्रिता अप पीत्वा । आचान्तस्य समन्त्रकं पानमाचमनान्तर्गतम् । तदनन्तर्गतमिति केचित् **'अग्ने व्रतपत'** ( तै० १।१०।५।८-११ ) इत्यादिभिश्चतुर्भिर्मन्त्रैः कृतसमिदाधानस्य यजमानस्याध्वर्युः—

## पर्णशाखामागच्छति[3] ।

पर्णशाखाभिमुख्येन गच्छति । मर्यादायां वाऽऽङ् । पर्णशाखापर्यन्तं गच्छतीत्यर्थः । गमने दिङ्नियममाह ।

## प्राग्वोदग्वा ।

वाशब्दद्वयेन प्रागुदग्दिशोः समतुलितत्वं द्योतयति[4] ।

## वाचंयमः ।

इत्यनेन द्वैधोक्तं विशेषमुपलक्षयति—**'आच्छेदन[5] इति । स स्माह बौधायनो वाचंयम एव शाखामाच्छेयात् वाचयम एवाहरेत्** । **एवं** [6]**बर्हिरिति** । **एवं चैव**

---

१. इ₂— सोपव० ।

२. भ— ब्रह्मसङ्कल्पवतः । इ₂— अव्रत्यसंकल्पवतः ।

३. इ₂ ग भ स— आच्छेति । व श्र— आच्छैति ।

४. इ₁—द्योत्यते ।

५. इ₂ ग भ स— आच्छान० । व श्र— आच्छायन० ।

६. व— एवाहरिति ।

खलु कुर्यादिति शालीकिः। ब्राह्मणेन च यथार्थमन्तर्हसन्नेव [1]संभाषीत, नाब्राह्मणेनेति' (बौ० श्रौ० २०।१) अन्तर्हसन् संभाषणं धर्मे स्पष्टीकृतम्—'तत्र मौनयुक्तस्त्रैविद्यवृद्धैराचार्यमुनिभिरन्यैः [2]सर्वाश्रमिभिर्बहुश्रुतैर्दन्तान् संधायान्तर्मुख एव यावदर्थं [3]संभाषेत, न यत्रलोपो भवतीति विज्ञायते' (बौ० ध० २।१८।१९)। यत्रलोपो नियमलोपः।

**यत्र वा वेत्स्यन् मन्यते।**

यस्यां दिशि शाखालाभं निश्चिनुयात्तां दिशं गच्छेदित्यर्थः। अनेनैव वचनेन सिद्धेऽपि 'प्राग्वोदग्वा' इति वचनं दिगन्तरे शाखालाभेऽपि प्रथमं प्रागुदग्वा [4]गमननियमार्थम्।

**सा या प्राची वोदीची वा बहुपर्णा बहुशाखा प्रतिशुष्काग्रा तामाच्छिनत्ति—'इषे त्वोर्ज्जे त्वा' इति।**

वृक्षस्य प्राची प्राग्देशस्था, एवमुदीची। [5]वाशब्दाभ्यां प्रागुदग्देशप्रसृतापि शाखा समुच्चीयते। तथा च ब्राह्मणम्—'प्राचीमुदीचीमाहरति' (तै० ब्रा० ३।२।१।३) इति। शाखान्तरविहित शमीशाखासंग्रहार्थो वा द्वितीयो वाशब्दः। बहुपर्णादिविशेषोपादानं निन्दितापर्णादि निवृत्यर्थम्। तामसिदेनाच्छिनत्ति। अत्र विशेषो द्वैधे—'शाखाया आच्छेदन इति। स ह स्माह बौधायनः—इषे त्वा—इति शाखामाच्छिन्द्यात्, ऊर्ज्जे त्वा— [6]इत्यनुमृज्याद्वान्वीक्षेत वेति। अन्वीक्षेतैवेति शालीकिः' (बौ० श्रौ० २०।(१)।

---

१. च श्र— संभाषेत।

२. बौ० धा०— वाश्रमिभिः।

३. स, बौ० ध०— सम्भाषीत। भ—संभाषेत।

४. ग— गमनं नियमार्थम्।

५. ग भ— शब्दाभ्याम्।

६. ग भ— अनुमृज्यादन्वीक्षेत वा।

**तया वत्सानपाकरोति—'वायवः स्थोपायवः स्थ' इति ।**

तया शाखया वत्सान् मातृसकाशाद् व्यावर्तयति । प्रतिवत्सं मन्त्रावृत्तिः । बहूनां मातृसंगतानामेक[1]प्रयत्नेनापाकरणस्याशक्यत्वात् । मन्त्रगतं [2]बहुवचनं समुदायापेक्षम् । उपखननादिमन्त्रवदेकापकरणेऽपि नोहः । द्वैधे च विशेषः—'वत्सापकरण इति । स स्माह बौधायनो वायवः स्थेति पुंस [3]एवापाकुर्यादुपायवः स्थेति स्त्रियः । अथ यद्यन्यतरे स्युर्नैव मन्त्रं परिजह्यात् । संसृष्टेनैव शालीकिः' (बौ० श्रौ० २०।१ ) मन्त्रभेदपक्षे क्रमात् पुंविषयत्वेन स्त्रीविषयत्वेन च नियतौ । यद्यन्यतर एव [4]पुंसः स्त्रियो वा वत्साः स्युः तदापि मन्त्रद्वयं न जह्यात् । शालीकिस्तु स्त्रीपुंवत्संसृष्ट एव विषये मन्त्रद्वयं विनियोजयेत् । अन्यतरपक्षे त्वेक एव मन्त्र इत्यर्थः ।

**अथैषां मातॄः प्रेरयति ।**

पृथक्करोति ।

**'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माघशंसो रुद्रस्य हेतिः परि वो वृणक्तु' (तै० १।१।१।७) इति यजमानमीक्षते ।**

अत्र यजमानावेक्षणं मनसा स्मरणं प्रेषिते यजमाने चक्षुर्व्यापारस्यासम्भवात् । मन्त्रेण चानेन यजमानस्मरणं नित्यम् । अस्य मन्त्रस्य पूर्वत्रैकवाक्यतापक्षमपि द्योतयितुं कर्मोपदेशात् [5]पूर्वं मन्त्रपाठः । गोपतिशब्दश्च यजमानवचन इत्येकपक्षः । अस्या

---

१. ग— °प्रत्यनेनापाकरस्य ।

२. इ₁ इ₂ ग— बहुत्वम् ।

३. इ₁— 'एवापाकुर्यात्' नास्ति ।

४. 'पुमांसः' इति समीचीनः पाठः स्यात् ।

५. भ— पूर्वे ।

[1]मन्त्रस्य पूर्वमन्त्रैकवाक्यतापक्षे गोपतिशब्दो वृषभवचनः। अमन्त्रकं च[2] यजमानस्य स्मरणमिति विवेकः।

**अथैतां शाखामग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाग्न्यागारस्योद्गूहति 'यजमानस्य पशून् पाहि' (तै० १।१।१।८) इति।**

शाखामुपगूहतीत्येतावतैव सिद्धेऽप्येतामिति वचनं शाखान्तरविहितशमीशाखादेरपि ज्ञापनार्थम्। आहवनीयस्याग्रदेशं परीत्य वेद्युत्करयोर्मध्यादाहृत्य पूर्वया द्वारा प्रपाद्य। जघनेन गार्हपत्यमित्येकस्यैवागारकल्पनापक्षं द्योतयति। सर्वेषामप्यागारकल्पनापक्षे [3]पूर्वया द्वारा प्रपाद्याग्रेणाहवनीयं पर्याहृत्येत्यन्वयः। अग्निष्ठेऽनसि प्रवासादिष्वग्निः तिष्ठत्यस्मिन्नित्यग्निष्ठम्, अनः शकटम्। तस्मिन्नुत्तरार्धे। उद्गूहति ऊर्ध्वं गोपायति, आसंजयति 'अनधः सादयति' (बौ० श्रौ० १।२) इति वचनात्। अग्न्यागारस्योत्तरार्द्धे वेत्यानुकल्पिकः पक्षः। अनसोऽभावेऽयमेव मुख्यः। द्वैधे विशेषः—**'शाखायै संचर इति : [4]अग्रेणाहवनीयं संचारयेदिति[4] बौधायनः जघनेन गार्हपत्यमिति शालीकिः। एष सर्वकल्पे शाखायै संचरः पयसां चान्यत्र प्रावर्गिकादिति। उभयोरेवापरेण प्रावर्गिकं संचारयेदित्यौपमन्यवः'** (बौ० श्रौ० २०।२) शाखायाः संचरेऽपि विषय इत्युक्तेन प्रकारेण पूर्वकल्पे बौधायनो यदवोचत्-अग्रेणाहवनीयम्—इत्यादि स एकः पक्षः। जघनेन गार्हपत्यं संचर इति शालीकिः। औपमन्यवं पक्षमाह एष शाखायै संचरः पयसां [5]सर्वकल्पे च। पयसां सर्वानुष्ठानविनियोगे च। शाखासंचरश्च पश्वादिशाखास्वप्यवगन्तव्यः। अन्यत्र प्रावर्गिकात् पयसः—प्रवर्ग्यार्थे पयसि शाखासंचरानुविधानं नास्ति। उभयोरपि पक्षयोः शाखासंचरणमार्गविषययोर्बौधायनशालीकिपक्षयोरपरेणसंचारयेदित्यौपमन्यवः।

---

१. इ२— मन्त्रैकवाक्यतापक्षतोप्रतिशब्दो०।

२. इ१ इ२ ग स— 'च' नास्ति।

३. इ२— पूर्वद्वाराम्।

४-४. इ२ ग स—'अग्रेणा...दिति' नास्ति।

५. ग— सर्वकं कल्पे।

**[1]नु यदि संनयति, यदि वै न संनयति बर्हिः प्रतिपदेव भवति।**

[1]नु शब्दोऽवधारणे। यदि संनयत्येव तर्हि शाखाच्छेदनादिकः प्रयोगः। यदि [2]नसंनयति तर्हि बर्हिरादिकः प्रयोगक्रमः।

[3]अत्रायं प्रयोगक्रमः—

उक्तक्रमेण [4]पिङ्ख्योपसादनाग्निहोत्रवपनस्तानाभ्यञ्जनपवनमन्त्राचमनप्रोक्षण[5]प्राणायामश्रद्धाह्वानाकूत्यावेदनोपव्यवहरणत्विग्वरणानन्तरमध्वर्युर्यज्ञोपवीत्याचम्य गार्हपत्यस्योत्तरतः प्राङ्मुख उपविश्य[5]प्राणानायम्य 'इडादेवहूः' इति यजुर्जपित्वा 'देवागातुविदः' इति [6]जपेत्। ततो विष्णुं ध्यात्वा विरहणपक्षेऽन्वाहार्यपचनं स्वयोनित उत्पाद्य, गार्हपत्यादाहवनीयं प्रणीय ततः सभ्यावसथ्यौ प्रणयेत्। जघनेन गार्हपत्यं स्वस्तिकासनेनोपविश्य, आसादितानि 'तीर्थप्रपन्नान्यत्यानि [7]काष्ठानि कमण्डलुजलैः प्रोक्ष्य **ममाग्ने०। मम देवाः०। मयि देवाः०** (तै० ४।७।१।१४।१-३) प्रत्यृचमेकैकं काष्ठं [8]गार्हपत्येऽन्वाधायान्वाहार्यस्य (अन्वाहार्यपचनस्य) पश्चादुत्कटिकासनस्थः **'मह्यं०। देवीः०। अग्निर्मन्युं०'** (तै० ४७१४।४-६) प्रत्यृचमेकैकं काष्ठमत्राप्यन्वाधाय [9]यथेतमेत्योत्तरेणाहवनीयं प्रह्वस्तिष्ठन् **'धाता०। उरुव्यचाः०। ये नः सपत्ना'** (तै० ४।७।१४।७-९) प्रत्यृचमेकैकं काष्ठमन्वाधायात्रैव तिष्ठन् **'अर्वाञ्चमिन्द्र०'** (तै० ४।७।१४।१०) इति जपेत्।

---

१-१. स — अनु।
२. इ₂ ग भ— 'न' नास्ति।
३. इ₁— तत्रायम्।
४. इ₁— विहव्यो०।
५-५. भ— 'प्राणायाम०....उपविस्य' नास्ति।
६. ग— 'जपेत्' नास्ति।
७. ग भ— 'काष्ठानि' नास्ति।
८. ग— गार्हपत्येना०।
९. इ₂— यथोत्योत्तरेणा०।

अध्वर्युर्यजमानपत्न्योऽन्यागारं परिसमुह्य पर्युक्ष्य, आयतानि शकृदोपलिप्य पुष्पाक्षतैरलङ्कुर्वन्ति। यजमानोऽग्रेणाहवनीयं परीत्य दक्षिणगत उदङ्मुख उपविश्य पवित्रपाणिः 'पयस्वतीः' (तै० १।५।१०।७) इत्यप आचम्य स्मार्ताचमनं [1]कृत्वा **'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां [2]स्वाहा। वायो व्रतपते० स्वाहा[2]। आदित्य व्रतपते० [2]स्वाहा। व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां [2]स्वाहा'** (तै० ब्रा० ३।७।४।७-८)। एताभिः सस्वाहाकाराभिरस्वाहाकाराभिर्वा प्रत्यृचमेकैकां समिधमादधाति। अमावास्या चेत् संनयतो यजमानस्याध्वर्युरसिदमादाय वेद्युत्करयोरन्तरेणोपनिष्क्रम्य वाचंयमः प्राचीमुदीचीं वा दिशं गत्वा बहुपर्णादिगुणविशिष्टां शाखामाच्छिनत्ति **'इषे त्वोर्ज्जे त्वा'** इति। अप उपस्पृश्य [3]तया षडवमान् वत्सान् मातृभ्यः पृथक् करोति। प्रतिवत्सं मन्त्रावृत्तिः। यजमानो ब्राह्मणं भोजयित्वा सर्पिर्दधिमिश्रं हविष्यमश्नीयात्[4]। उच्छिष्टं च पत्नीभ्यो दद्यात्। अध्वर्युर्गाः प्रस्थापयति—**'देवो वः०'** इति। **'ध्रुवाः'** इति यजमानमीक्षते। प्रोषिते यजमाने एतं मन्त्रमुक्त्वा तं ध्यायेत। अग्रेणाहवनीयं शाखामाहृत्याग्न्यागारस्योत्तरार्द्धे उद्गूहति **'यजमानस्य'**। सांनाय्याभावे पौर्णमास्यां च बर्हिराहरणकाले [5]व्रत्याशनम्।

इति प्रथमे प्रश्ने प्रथमोऽध्यायः

---

१. ङ२— कुर्यात्।

२. ङ१ भ— 'स्वाहा'।

३. भ— तथा।

४. ग भ— °मश्नीत्।

५. ख—प्रत्या०।

## द्वितीयोऽध्यायः

**अथ जघनेन गार्हपत्यं तिष्ठन्नसिदं वाश्वपर्शु[1] वादत्ते 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' (तै० १।३।१।१) इति ।**

अथेति—संनयतः शाखानिधानानन्तर्यार्थः, [2]असंनयतो व्रतानन्तर्यार्थः[2] । असिदः लवनसाधनं दात्रम् । [3]अश्वपर्शुम् अश्वस्य पार्श्वास्थि यद्वङ्क्रिरिति प्रसिद्धम् । इध्माबर्हिषोरुपकल्पनार्थमादत्ते । अत्र कालविकल्पो द्वैधे—'इध्माबर्हिषोरुपकल्पनमिति सूत्रमाचार्ययोः । अपराह्णे पितृभ्यो दत्त्वेध्माबर्हिः संनह्येदित्याञ्जीगविः । श्वोभूते हविष्कृदन्ते इत्यौपमन्यवः' (बौ० श्रौ० २०।२) इति । पूर्वकल्पोक्त एव काल इति बौधायनस्य शालीकेश्च मतम् । पितृभ्यो दत्त्वेति । पिण्डपितृयज्ञानन्तरमित्यर्थः । हविष्कृदिति हविष्कृदेहीति प्रैषमुपलक्षयति । तदनन्तरं चेति ।

**आदायाभिमन्त्रयते 'यज्ञस्य घोषदसि' (१।१।२।१) इति ।**

अभिमन्त्रणमाभिमुख्येनेक्षणम् । स्पृष्ट्वा जप इत्यन्ये । 'गार्हपत्यमभिमन्त्रयते' इत्यादौ कथमग्निस्पर्शनं स्यादिति चिन्त्यम् । अभिमर्शनाभिमन्त्रणयोश्च को विशेषः स्यात् । अभिमर्शनं स्पृष्ट्वा जपः । अनुमन्त्रणं स्मृत्वा जप इति विवेक्तव्यम् ।

---

१. इ$_1$ ग स— °परशुम्* । प्रयोगबाहुल्येन सर्वत्र 'पर्शु:' इत्येवपाठोऽङ्गीकृतः ।

२-२. इ$_2$— 'असंनयतो व्रतानन्तर्यार्थ' नास्ति ।

३. इ$_2$ ग भ स— अश्वपरशुम् ।

---

*परशुम् = पर्शुम्— इ ।

**गार्हपत्ये प्रतितपति 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' (तै० १।१।२।२) इति[1] ।**

अविशेषविधानादुभयोरपि प्रतितापोऽवगन्तव्यः । द्वैधे विशेषः **असिदस्य प्रतितपन इति । स ह स्माह बौधायनः प्रतितपेदेवासिदमेवमश्वपशु[1] रक्षोऽपहननायेति । अत्रो ह स्माह शालीकिर्न तेजसि तेजः प्रतितपेदश्वपर्श्वां[2] खल्वेते मन्त्रा दृष्टा भवन्तीति । सोऽश्वपशु[3]मेव तपेन्नासिदं क्रूरापहननायेति'** (बौ० २०।२) । असिदपक्षेऽपि [4]पशुप्रतिपादकोऽपि मन्त्रो लिंगाविवक्षया योजनीयः । तद्यथा—

**अथाहवनीयमभिप्रैति 'प्रेयमगाद्धिषणा बर्हिरच्छ मनुना स्वधया वितष्टा त आ वहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टम्' (तै० १।१।२।३) इति ।**

धिषणत्वमनुनाकृतत्वादयो ह्यसिदेऽपि समानाः । स्वशाखानाम्नातोऽप्यसिदः तदाम्नातया पर्श्वा समतुल्य उपात्तः । तस्यैतत् प्रयोजनमन्यत्राप्येतच्छाखाऽनाम्नातः शाखान्तरमूलतया सङ्गृहीतः, समतुलित एवेति [5]ज्ञापनार्थम् ।

**'इह बर्हिरासदे' (तै० १।१।२।३) इति वेदिं प्रत्यवेक्षते ।**

आहवनीयसंनिधौ स्थित्वा दक्षिणतः परिवृत्य वेदिमवलोकयेत् ।

**अथ तां दिशमेति यत्र बर्हिर्वेत्स्यन्[6] मन्यते ।**

---

१. ब श्र— 'इति' इत्यस्यानन्तरम् 'त्रिः' ।

२. ड१ ग भ स— °पर्श्वाम् । ड२— परशुम् ।

३. ड२ ग भ स— °परशुमेव ।

४. ड१ ग भ स— परशु० ।

५. ड१ ग भ स— ज्ञापनम् ।

६. ड२— °छेत्स्यन् ।

अत्राथशब्दार्थो द्वैधे स्पष्टीकृतः '**प्रक्रमेष्विति। स ह स्माह बौधायन आहवनीयादेवाग्रे त्रीन् वा चतुरो वा प्राचः प्रक्रमान्**[1]**प्रक्रम्याथ तां दिशम**[2]**भिव्रजे-द्यत्र बर्हिर्वेत्स्यन् मन्येतेति। आहवनीयादेव यथार्थं गच्छेत्तु दक्षिणया द्वारेति शालीकिः**' (बौ० श्रौ० २०।२)। प्रक्रमेषु कृतेषु यस्यां दिशि बर्हिर्लाभोनिश्चितः तां[3]दिशमभिनियमेन गच्छेत्। अनेन दक्षिणया द्वारापि[4]गमनमनुमतं बौधायनस्ये-त्यर्थः। शालीकिपक्षे त्वाहवनीयात्पुरस्तात् प्रक्रमा अपि नाङ्गीकृताः। दक्षिणया द्वारानुगमनमङ्गीकृतमित्यर्थः।

## दर्भस्तम्बं परिगृह्णाति यावन्तमलं प्रस्तराय मन्यते—'देवानां परिषूतमसि' (तै० १।१।२।४) इति।

एकमूलप्रभवो दर्भसमूहः स्तम्बः। तमसिदेन वा हस्तेन वा मनसा वा परिगृह्णाति। प्रस्तरायैतावत्परिमाणं छिनत्तीति[5] यावत् परिमाणस्तम्बः प्रस्तर-पर्याप्त इति मन्यते। ते च परिमाणविकल्पाः [6]कर्मान्ते दर्शिताः—'**संनखमात्रो विशारुको ग्रहीतव्य इत्येकेषाम्। स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषाम्। [7]ध्रुवदण्ड-मात्रो ग्रहीतव्य इत्येकेषाम्[7]। उर्वस्थिमात्रो ग्रहीतव्य इत्येकेषाम्। अंगुष्ठपरुषा-संमितो ग्रहीतव्य इत्येकेषाम्। अपरिमितो ग्रहीतव्य इत्येकेषाम्**' (बौ० श्रौ० २४।२५)। संनखमात्रः संगताङ्गुल्यङ्गुष्ठनखमात्रः। अंगुष्ठाङ्गुलिनखयोः सङ्गत्या यावत्परिमण्डलं भवति तावत्परिमाणो दर्भस्तम्बः [8]संनखमात्रः। विशारुकः [9]विश-

---

१. इ₂— प्रक्रम्याथेतराम्।

२. ग भ स— अभिप्रव्रजेत्।

३. इ₂— दिशि।

४. ग इ— गमनमतम्।

५. इ स— छिनद्मीति। इ₂—छिनद्मीत्याछिनत्ति। ब श्र—छिनत्ति।

६. इ₂— कर्मान्तदर्शिताः।

७-७. ग भ— 'स्रुवदण्ड....केषाम्' नास्ति।

८. ग श्र— 'संनखमात्रः' नास्ति।

९. इ₁ ग— विशरणादेशः।

रणदेशः छेदनप्रदेशो मूलमित्यर्थः। स्रुक्स्रुवदण्डयोः स्थौल्याविशेषेऽपि, आचार्यभेदोदाहरणाय द्वयोरुपादनम्। उरोरस्थि [1]उर्वस्थि। छान्दसो ह्रस्वः। अंगुष्ठस्य परुः पर्व, परुषासंमितः अंगुष्ठपर्वपरिमाण इत्यर्थः। अपरिमितग्रहणपक्षे यावन्तमलं प्रस्तराय मन्यत इत्यनेन समानार्थः। दैर्घ्यपरिमाणं तु स्रुगायामसंमितम्। ततः 'प्रादेशोरत्निर्बाहूनामायामोऽन्यतमः स्रुचाम्' इति वचनात् तदानुगुण्येन तद्दैर्घ्यविकल्पः।

अत्र परिग्रहे द्वैधे विशेषः 'परिषवण इति। स ह स्माह बौधायनः त्रिरेव मन्त्रं ब्रूयात्, त्रिः कर्मावर्त्तयेत् एवं यूपावटस्य परिलेखन एवं सोमक्रयण्यै पद एवमौदुम्बर्या अवट एवमुपरवेष्विति। सकृदेव मन्त्रं ब्रूयात्त्रिः कर्मावर्त्तयेदिति शालीकिः' (बौ० श्रौ० २०।२)। अत्र परिषवणमसिदेन। परिलेखनं मनसा चेत्, परिग्रहमात्रम्। अतएव नात्र मन्त्रकर्मणोरावृत्तिः।

**अथैनमूर्ध्वमुन्मार्ष्टि 'वर्षवृद्धमसि' (तै० १।१।२।४) इति।**

उन्मार्ष्टि—ऊर्ध्वं मार्ष्टि। पुनरूर्ध्वग्रहणान्मूलादारभ्याग्रं[2] मार्जनं द्योतयति। असिदेनेति सामर्थ्यादवगम्यते।

**असिदेनोपयच्छति 'देवबर्हिर्मा त्वान्वङ् मा तिर्यक् पर्व ते राध्यासम्' (तै० १।१।२।५-६) इति।**

पर्वसूपयच्छति अधि [3]निदधाति।

**आच्छिनत्ति 'आच्छेत्ता ते मा रिषम्' (तै० १।१।२।६) इति।**

छित्वाप उपस्पृशेत् धर्मे (बौ० ध० १।१।५।६) तथा प्रतिपादितमित्युदाहृत-

---

१. ग अ— उर्वास्थि।

२. भ— 'अग्रम्' नास्ति।

३. ग— विदधाति।

मस्माभिः। तुषनिरसनादिषूपस्पर्शनविधानादन्यत्र, विकल्प इति केचित्। अन्ये तु धर्मशास्त्रात्सामान्यतः सिद्धे निरसनादिषूपस्पर्शनस्य पुनर्विधानं [1]तद्भ्रेषे वैदिकप्रायश्चित्तविधानार्थमेव, न त्वन्यत्र विकल्पार्थमित्याहुः।

**आच्छेदनान्यभिमृशति 'देवबर्हिश्शतवल्शं वि रोह' (तै० १।१।२।८) इति।**

आच्छिद्यते[2]बर्हिरित्याच्छेदनानि, आच्छिन्ना मूलप्रदेशा इत्यर्थः।

**'सहस्रवल्शा वि वयं रुहेम' (तै० १।१।२।६) इत्यात्मानं प्रत्यभिमृशते।**

[3]अत्रात्मा शरीरमुच्यते। तत्राप्युरः अन्यत्र 'उरः प्रभृत्यात्मानं प्रत्यभिमृशति' इति दर्शनात्। अत्र द्वैधे विशेषः **'आच्छेदनेष्विति' सूत्रं बौधायनस्य। प्रत्यगाशीः खल्वेष मन्त्रो दृष्टो भवति। मन्त्रप्रत्यभिमर्शनमेवैतत्स्यादिति शालीकिः'** (बौ० श्रौ० २०।२)। यत एष[4] मन्त्रः प्रत्यगाशीर्दृष्टः—आत्माशीर्वचन तया दृष्टः। अतः आच्छेदनेषु कृतेष्वात्माभिमर्शने विनियुक्तोऽयं मन्त्र इति [5]बौधायनः। आच्छेदनानामेवानेन मन्त्रेण प्रत्यभिमर्शनमिति शालीकिः।

**सर्वश एवैनं स्तम्बं [6]लुनाति।**

यः परिगृहीतः स्तम्बस्तं निरवशेषं छिनत्ति। तदेतदमन्त्रकं द्वितीयं लवनमुक्तं सकृदाच्छिन्नस्य पित्र्यत्वात् द्वितीयलवनानन्तरमात्माभिर्शनमुदकस्पर्शनमिति केचित्। अन्ये[7] तु तदुदकस्पर्शनं प्रतिनिमित्तमावर्तत इत्याहुः।

---

१-१. भ— तद्भेषे। इ२— तद्भेदाय।
२. स— आच्छिद्यति तम्।
३. इ१— अत्रात्मशरीर०।
४. भ — यस्य।
५. इ२— बौधायनमतम्।
६. इ१— लूनाति।
७. इ— तूदक०।

**कृत्वा प्रस्तरं निदधाति 'पृथिव्याः संपृचः पाहि' (तै० १।१। २।१०) इति ।**

प्रस्तरं कृत्वेति [1]दर्भमुष्ट्यन्तरवैलक्षण्येन कृत्वेत्यर्थः ।

**तूष्णीमत ऊर्ध्वमयुजो मुष्टीन्[2] लुनोति ।**

ओकारश्छान्दसः ।

**त्रीन् वा पंच वा सप्त वा नव एकादश वा यावतोऽलं मन्यते ।**

तूष्णीमिति मन्त्रोच्चारणमात्रं[3] निवर्तयति, न तु परिग्रहादिक्रियाविशेषम् । अत ऊर्ध्व प्रस्तरादनन्तरम् । अयुजः अयुग्मान्, एतस्योपव्याख्यानं [4]त्रीन्वेति । अत्रायुक्संख्याविकल्पा वेदिविस्तारापेक्षया व्यवस्थिताः । [5]'अनतिदृश्नं स्तृणाति' (बौ० श्रौ० १।१३) इति दर्शनात् । यत्र त्वेकविधं त्रिविधं पंचविध*मित्यादयो वाचनिकः संख्यानियमस्तत्र 'अनतिदृश्नं स्तृणाति' इतीत्येतद्पोदितं द्रष्टव्यम् । अन्ये त्वत्र [6]'तूष्णीम्' ग्रहणान्मन्त्रनिवृत्तिवत्परिग्रहादिक्रियानिवृत्तिमपीच्छन्ति । तदनुपपन्नम्' आधाने[6] तूष्णीमग्निहोत्रेऽपि क्रियानिवृत्तिप्रसंगात् । द्वैधे तु विशेषः

---

१. इ₂ ग— मुष्ट्यन्तर० ।

२. भ— मुष्टिम् ।

३. ग— °मन्त्रम् ।

४. इ₂ भ— त्रीन्वेत्यादीति ।

५. ग भ— अनतिदृश्यम् ।

६-६. भ— 'तूष्णी........आधाने' नास्ति ।

---

* एकविधं त्रिविधं = बहुष्वेषु निधनेषु त्रिधातु पंचधातु वेति नियमः । निधनानि संसृज्य त्रिधातुः पंचधातुः स्तरणम् । अतः पशुसोमादौ महत्यां वेद्यामपि त्रिभिः पंचभिर्वा धातुभिरपरेणाहवनीयं स्तरितुं शक्यते— इ₁ ।

**'प्रस्तरस्य संनहन इति । स ह स्माह बौधायनोऽभ्यर्धाच्चैनं[1] संनह्य दन्यत्र च । एतस्मादयुग्मायुग्मं निधनानि कुर्यादिति । अत्रो ह स्माह शालीकिः प्रस्तरस्य खलु मन्त्रप्रतिलाभात् सर्वं बर्हिर्मन्त्रं लभते, न चैनमभ्यर्धात्संनह्य दे- तच्चैवायुग्मतमं स्यादिति'** (बौ० श्रौ० २०।२) [2]प्रस्तरस्य संनहनविषये एवं बौधायन आह स्म—एनं प्रस्तरमभ्यर्द्धाच्च अर्द्धादुपरि च संनह्य दद्ध्वं संनह्योपर्यर्द्धमपि संनह्येत् । तदेतद्युग्मायुग्मं भवतीत्याशयः[3] । एतद्वैलक्षण्यं मुष्ट्यन्तरेषु दर्शयति । अन्यत्र चैतस्मादयुग्मादयुग्मं [4]निधनानि कुर्यादिति । एतस्मात् प्रस्तरादन्यत्र [5]मुष्टिषु युग्मायुग्मं न भवति । अयुग्मायुग्मं निधनानि कृत्वा प्रस्तरवैलक्षण्येनैकैकं प्रतिमुष्ट्याबध्य तानि [6]निधनानि कुर्यात् । शालकिस्त्वेवमाह प्रस्तरवत्सर्वमुष्टिष्वपि मन्त्रावृत्तिः । नैनं प्रस्तरं चार्द्धादुपरि संनह्येत् । तत्र हेतुमाह एतच्चैव युग्मतमं स्यादिति । अयं च पक्षो ब्राह्मणेऽप्यनुमतः—**'अयुङ्गायुङ्गान् मुष्टीन् लुनोति'** ( तै० ब्रा० ३।२।२।६) इति ।

**अत्र त्रिरन्वाहितं शुल्वं कृत्वापसलैरावेष्टयति 'अदित्यै राश्नासि' (तै० १।१।२।१२) इति ।**

त्रिसन्धिभिः सन्धितमेकसरं प्रदक्षिणं[7] शुल्वं कृत्वा [8]द्विगुणं कृत्वा [8]प्रदक्षिण- मावेष्टयति । अत्र सन्धित्रयाभिधानात्सन्धिमतां चतुष्टयं त्रयाणां वा सन्ध्यभिधानात् सन्धिमतां त्रित्वमिति । तथा च द्वैधे—**शुल्वस्य करण इति । अधिकरणं चतुर्थं स्यादिति बौधायनः । अधिकरणमेव तृतीयमिति शालीकिः'** (बौ० श्रौ० २०।२)

---

१. इ१ भ— अभ्यर्धात् ।

२. भ— प्रसारस्य ।

३. इ२— °शये ।

४. भ— निदधानि ।

५. इ२— मुष्टिभिः ।

६. भ— निदधनानि ।

७. इ२ भ— 'प्रदक्षिणम्' इत्यस्यानन्तरम् 'एकसरम्' ।

८-८. इ१ ग भ— 'द्विगुणं कृत्वा' ।

इति । अत्र 'अदित्यै रास्नासि' इत्ययं मन्त्रः शुल्बनिधानेनोत्तरवाक्येन वान्वेति । एवं चावेष्टनस्यास्तरणस्य वा तूष्णीं क्रिया । तदेतत्पक्षद्वयमप्याचार्यस्यानुमतम् । तथा च कर्मान्ते **'स्थानाद्वा स्थानं [1]प्रति ह्वासीत'** (बौ० श्रौ० २४।६) । अस्य विवरणम् **'स्थानात्स्थानमिति यद्वोचाम योऽनन्तरो मन्त्र आम्नातः स्यात् तेनैनं संकल्पयेत्पूर्वकालेन वोत्तरकालेन वा'** ( बौ० श्रौ० २४।६ ) इति । [2]स्वयमाम्नातस्थानात्तस्य विनियोगस्थानं प्रत्यासत्या प्रहातुमिच्छेत् । प्रत्यासत्तिः संनिकर्षः कर्ममन्त्रयोः । स चैकस्यैकेन चेन्न सन्देहः । यदि त्वाचार्येण कर्मद्वयमध्ये मन्त्र एक आम्नातस्तस्य पूर्वोत्तरकर्मभ्यां वैकल्पिकः सम्बन्धः । [3]तत्रान्यतरत्कर्मामन्त्रकं भवतीत्यर्थः । तत्प्रत्यासन्नमन्त्रान्तराभावादित्याशयः ।

**[4]तदुदीचीनाग्रं निधाय ।**

तत् समन्त्रकममन्त्रकं वा शुल्बमुदीचीनाग्रं निधाय ।

**तस्मिन् प्रस्तरमभिसंभरति 'सुसंभृता त्वा संभरामि' (तै० १।२।२।११) इति ।**

तस्मिन्निति शुल्बस्य प्रस्तराधिकरणत्वं द्योतयति । तेन च पूर्वं प्रस्तरं संभृत्य पश्चात् मुष्ट्यन्तरसंभरणमिति गम्यते । अयं चार्थो द्वैधे विकल्पितः **बर्हिषः संभरण इति । स ह स्माह बौधायनो यान्यन्यानि याजुषाभिधनानि तानि पूर्वाणि मन्त्रेण संभृत्याथोपरिष्टाद्याजुषं मन्त्रेणैव संभरेदिति । अत्रो ह स्माह [5]शालीकियान्यन्यानि याजुषाभिधनानि तानि पूर्वाणि तूष्णीं संभृत्याथोपरिष्टाद्याजुषं मन्त्रेणैव संभरेदिति । अत्रो ह स्माहौ[5]पमन्यवो य एवादिर्लवने स[6] संभरणे सयाजुष-**

---

१. ब श्र— प्रजिह्रासीत । अत्रार्थतः 'प्रजिहासीत' इति पाठः समीचीनः प्रतीयते ।

२. इ₂ ग भ— स्वयमाम्नातः स्थानात् ।

३. ग भ— तत्रान्यतरम् ।

४. ग— तदुदीचाग्रम् । भ— तदुदीञ्चीनाग्रम् । इ₂— तददीचीनाग्रम् ।

५-५. ग— 'शालीकि० स्माह' नास्ति ।

६. इ₁ ग भ— 'सः' नास्ति ।

मेवाग्रे मन्त्रेण संभृत्य तूष्णीमितराणि संभृत्य [1]'विपरिकृष्य ग्रन्थिं कुर्यादिति' ( बौ० श्रौ० २०।२ )। बर्हिषः संभरणमेवं प्रकारं स बौधायन आह स्म, याजुषात् यजुषा लूनात्प्रस्तरादन्यानि निधनानि अमन्त्रलूना मुष्टयः, तानि प्रथमं मन्त्रेण, प्रस्तरस्य पश्चात् संभरणम्। शालीकिमते तु प्रस्तरादन्येषां मुष्टीनां प्रथमं तूष्णीं संभरणम्, प्रस्तरस्यैव समन्त्रकमिति। औपमन्यवस्तु समन्त्रकं लूनस्य प्रस्तरस्यैव प्राक् समन्त्रकं संभरणं पश्चात्तूष्णीमितरेषामिति।

**संनह्यति—'इन्द्राण्यै संनहनम्' (तै० १।१।२।१३) इति।**

संनह्यति आवेष्टयति।

**ग्रन्थिं करोति 'पूषा ते ग्रन्थिं ग्रथ्नातु' ( तै० १।१।२।१४ ) इति।**

द्वैधे विशेष उक्तः ग्रन्थिकरण' इति। सूत्रं बौधायनस्य समायच्छन्नेवैतं मन्त्रं जपेदिति शालीकिः' ( बौ० श्रौ० २०।३ ) इति। ग्रन्थिकरणे मन्त्रं जपेदिति बौधायनः। शालीकिस्तु ग्रन्थ्यर्थं रज्वन्तौ समायच्छन्नेव मन्त्रं जपेदित्याह।

**'स ते मा स्थात्' (तै० १।१।२।१५) इति पश्चात् प्राञ्चमुपगूहति।**

तदधः पश्चाद्भागेन प्राञ्चं ग्रन्थिं गमयति। द्वैधे विकल्पः 'पश्चात् प्राञ्चमुपगूहतीति सूत्रं बौधायनस्य। पुरस्तात् प्रत्यञ्चमिति शालीकिः' (बौ० श्रौ० २०।३) इति। ग्रन्थ्युपगूहने पक्षद्वयमिति।

**अथैनदुद्यच्छते[2] 'इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे' ( तै० १।१।२।१६) इति।**

---

१. ग भ— विपरीकृष्य। इ१— विपरीकृष्य ग्रन्थीकुर्यात्।

२. भ— उपयच्छते।

एनत्संभूय ग्रथितं 'बाहुभ्यामुद्यच्छे' इति मन्त्रलिङ्गादवगम्यते ।

**[1]'शीर्षन्नधिनिधत्ते 'बृहस्पतेर्मूर्ध्ना हरामि' (तै० १।१।२।१७) इति ।**

शीर्षन् शिरसि । एतावतैव पर्याप्ते यदधिग्रहणं करोति तेनावगम्यते[1] तृणवस्त्रादि यत् किञ्चिद् व्यवधायेति ।

**एति 'उर्वन्तरिक्षमन्विहि' (तै० १।१।२।१८) इति ।**

एति आगच्छति ।

**एत्योत्तरेण गार्हपत्यमनधः सादयति 'देवं गममसि' (तै० १।१।२।१६) इति । [2]तदुपरीव निदधाति यत्र गुप्तं मन्यते ।**

एत्य तीर्थेन प्रपद्य । अनधः स्फ्यं वा शकलं वान्तर्धाय मन्त्रेणासाद्य तत उपरि गुप्तस्थाने मन्त्रकं निदध्यात् । उपरि स्थापनं समन्त्रकमनधः सादनं वाप्यमन्त्रकं कर्मद्वयमध्ये मन्त्राम्नानात् । तथा च द्वैधे—**'बर्हिषो निधाय इति । स ह स्माह बौधायनः । स्फ्यं वा [3]शकलं वान्तर्वेदि निधाय तस्मिन् मन्त्रेण [4]संस्थाप्य ततो [5]यथा सुष्ठु निदध्यादिति । यत्रैव निधास्यन् स्यात् [6]तन्मन्त्रेणैव निदध्यादिति शालीकिः'** (बौ० श्रौ० २०।३) ।

**तूष्णीं परिभोजनीयानि लुनोति ।**

---

१-१. भ— 'शीर्षन्नधि .......गम्यते' नास्ति । इ१ भ—'गम्यते' । इत्यस्यानन्तरम् 'अन्तर्धाय' ।

२. इ१ ग—उपरीव । इ२—उपरिव ।

३. इ२— शकटम् ।

४. ब श्र— प्रतिष्ठाप्य ।

५. इ— 'यथा' नास्ति ।

६. भ— 'तत्' नास्ति ।

परिभोजनीयानि सर्वत्रोपभोगार्हाणि [1]परिस्तरणवेदपृष्ठयास्तरणर्त्विगासनानां तत्संपाद्यत्वात् । केचित्तु वेदार्थं पृथगाच्छेदनमिच्छन्ति ।

**सकृदाच्छिन्नं पितृभ्य आच्छिनत्ति ।**

पितृभ्य इति पिण्डपितृयज्ञमुपलक्षयति । यद्यप्येतल्लवनं प्रस्तरादिलवनकाल एव कार्यं तथाप्यत्राभिधानात् [2]परिग्रहादिक्रियानिवृत्तिमपि द्योतयति । परिभोजनीयानीति नपुंसकलिङ्गनिर्देशेन तृणमात्रं यज्ञियमकान्तं भवति । अयज्ञियतृणानि तु प्रायश्चित्तकाण्डे दर्शितानि—'[3]शुकशुम्ब*नलबल्वजकृष्णतूलतृणवर्जम्' ( बौ० श्रौ० २८।१३) कुशादीनि याज्ञिकप्रसिद्धानि ग्राह्याणीति दर्शयिष्यते ।

**अथ तथैव त्रिरन्वाहितं शुल्बं कृत्वैकविंशतिदारुमिध्मं संनह्यति 'यत्कृष्णो रूपं कृत्वा प्रविशस्त्वं वनस्पतीन् । ततस्त्वामेकविंशतिधा संभरामि सुसंभृता' (तै० ब्रा० ३।७।४।८) इति ।**

अथ बर्हिर्निधानानन्तरम् । तथैव बर्हिः संभरणार्थं शुल्बवदेव । अनेन मन्त्रस्यापि प्रसक्तत्वात् त्रिरन्वाहितमिति विशेषाभ्यनुज्ञानस्य शेषनिषेधविषयत्वान्मन्त्रनिवृत्तिः । अत्रेध्मशब्दः समित्समुदायवाचकः । दारुशब्दोऽपि सामर्थ्यात् समित्परः । एकविंशति [4]दारवो यस्मिन् इध्मे स एकविंशतिदारुरिध्मः । तमनेन मन्त्रेण संनह्यति । अत्र 'एकविंशतिधा' इति मन्त्रलिङ्गादेव संख्याविशेषे सिद्धे तत्संख्यानिर्देशस्यैतत् प्रयोजनत् । [5]यत्रैकविंशतिदारुरिध्मस्तत्रायं मन्त्रो यथाम्नातः प्रकृतौ ।

---

१. भ— परिस्तरणे वेद० ।

२. ग भ— परिभोगादि० । अ— परिभागादि० ।

३. ब श्र— शुष्कशुष्ठिनल० । ङ१— शुकशुम्बनलद । ङ३— शुकनलद स— शुष्कशुम्ब० ।

४. ग स— दारूणि ।

५. भ— अत्रैक० ।

---

*शुम्ब = शण— ङ१ ।

अपरिमितादिदारुपक्षे तु [1]मन्त्रलोपः संख्यावाचकपदलोपो वा। विकृतिषु तु यथार्थमूहो यथा स्यादिति। तथा च सूत्रम्—'न प्रकृतावूहो विद्यते। [2]विकृतिषु तु यथार्थमूहः' (आप० प० ३।४८-४९) इति।

अत्राविशेषेण दारुशब्दोपादोपादानात् सर्वेषां समितपरिधीनामेकदारुसंभवत्वं द्योतयति। तथा च वक्ष्यति—'पालाशः खादिरो वेध्मः' (बौ० श्रौ० २८।१३) इत्यादि। अत्र द्वैधे विशेषः 'परिधीनां करण इति। स ह स्माह बौधायन उरःसंमितो मध्यमः स्यादप्येतरौ बाहुमात्रौ स्यातामिति सर्व एव बाहुमात्राः स्युरिति शालीकिः। इध्मस्य करण इति। अनु सामिधेनीध्मं कुर्यादिति बौधायनः। अपरिमितमिति शालीकिः' (बौ० श्रौ० २०।३)। उरः बाह्वोर्मध्यम्। [3]अनुसामिधेति सामिधेनीसंख्यानुगुण्येन समित्संख्यानियमः। शालीकिपक्षे तु समिधां संख्यानियमो नास्ति। काष्ठान्तरमनपेक्ष्य हविर्यावतीभिर्हुतं भवति तावतीः समिधः परिधिभिः संनह्यादित्यर्थः। समिदायामप्रमाणं तु कर्मान्ते-'इयतीर्भवन्तीति समिधां वदति, प्रादेशमात्रीरेवैताः उक्ता भवन्ति। [4]अनेन संमिता कार्या इत्याहुः' (बौ० श्रौ० २४।२५)। इयतीर्भवन्तीति सामान्यशब्दत्वे। प्रादेशमात्रीः परिमाणविशेषानुपादानेन समिधां विनियोगं दर्शयति। तत्र प्रादेशमात्रा एवोक्ता भवन्ति। यत्र त्वाचार्याः—अनेन संमिता कार्याः—इत्याहुः यथा-उरः समिता बाहुसंमिता[5] इत्यादि, तत्र तत्परिमाण ग्राह्या इत्यर्थः। अत्र केचित्प्रयोक्तारः 'द्विः प्रादेशसंमिता अपि समिधो ग्राह्याः' इत्याहुस्तेषां किं मूलमिति चिन्त्यम्। भरद्वाजोदाहृतं तु पक्षान्तरम् 'द्विः प्रदेशो वैलङ्किरिध्म'। [6]वैलङ्किराचार्यः तत्कर्मान्ततच्छेषविरुद्धम्। तच्छेषे च विशेषो दर्शितः 'अरत्निमात्रा परिधयः शुष्काः आर्द्रा वा सत्वक्काः। प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्ति' (बौ० गृ० शे० १।१।४।५) इति।

---

१. इ₂ ग— मन्त्रलोपसंख्या०।
२. आप० प०— विकृतौ यथा°।
३. इ₁ भ— 'अनुसामिधेनि' नास्ति।
४. इ₂— 'अनेन....एवोक्ता भवन्ति' नास्ति।
५. इ₁— 'बाहुसंमिता' इत्यस्यानन्तरम् 'कार्याः'।
६. इ₁ इ₂— वैलकिराचार्यः।

[1]कर्मान्ते पलाशविषये विशेषः '[2]अथेध्मानि त्रीणि पलाशजातानि भवन्ति[3]। श्लक्ष्णको लोमशको व्रततीरिति। लोमशकस्यैषा छेत्तव्या भवति। यावन्मात्रं गौर्निकषते[4] न तत ऊर्ध्वं छिन्द्यात्। [5]अपशव्यात ऊर्ध्वं स्यात्' (बौ० श्रौ० २४।२३)। पलाशजातित्रैविध्यादिध्मत्रैविध्यम्। तत्रापि लोमशको मुख्यः। एषा समिद्गोसंमितादृशादूर्ध्वं न छिन्द्यादित्यर्थः। श्लक्ष्णकः अलोमशत्वात् स्निग्धतरः। वल्लीरूपपलाशो व्रततिः। उपलक्षणं चैतत्। प्रायश्चित्तकाण्डे यज्ञियवृक्षमात्राभ्यनुज्ञा[6]नात्—'पलाशः खादिरो वेध्मः। तयोरलाभे [7]याज्ञिकवृक्षाणामरुकपित्थकरञ्जकोविदारशाल्मलिश्लेष्मान्तक[6] [7]नीपनिम्बतिलकबाधकबैभीतक[8] पलाण्डुवर्जम्। सर्ववनस्पतीनामिध्मो भवतीत्येके' (बौ० श्रौ० २८।१३) अत्र समिधः [8]परिधयश्च सत्वक्का [9]असुषिरा अक्रिमिदष्टा [10]अवह्निदूषिता आर्द्रशुष्कमिश्रणरहिता ग्राह्याः। अत्रेध्मव्रश्चनानां संग्रहणं बर्हिषामिव निधानान्तं[11] कर्मेति याज्ञिकोपदेशः।

**वेदं करोति वत्सज्ञुं पशुकामस्य* मूतकार्यमनाद्यकामस्य त्रिवृत्तं तेजस्कामस्योर्ध्वाग्रं स्वर्गकामस्य।**

---

१. इ१ ग भ— 'कर्मान्ते' नास्ति।
२. ब श्र—अथेमानि।
३. इ२— 'भवन्ति' इत्यस्यानन्तरम् 'एक०'।
४. ग— निकर्षते' ब श्र— निकर्षेत।
५. ग— अपशत० इ२— अपरात०।
६. इ२— 'नात्...मान्तक' नास्ति।
७-७. ब श्र— याज्ञिकानां वा वृक्षाणामन्यतमस्तेषामलाभेऽररुकपित्थकोविदारशाल्मलिश्लेष्मान्तकनीपनिम्बतिलकबाधकविभीतकराजवृक्षकरञ्ज०।
८-८ भ— 'परिधयः' नास्ति।
९. ग— सुषिरा०।
१०. इ२ ग— अवह्निरूषिता०।
११. ग— कर्मान्ते।

---

*वत्सज्ञुं पशुकामस्य = कामाभावेप्येता आकृतयः, काम्यपक्षे यजमानः—वत्सज्ञुं करिष्ये पशुमान् भूयासम्—इति।

शयितवत्सजानुसदृशो वेदः [1]वत्सज्ञुः। धान्यनिधानार्थः तृणपुंजसंनिवेशविशेषो मूतः, तद्वत्कार्यो मूतकार्यः। त्रिवृत्तं त्रिगुणशिरसं वा, 'त्रिवृत् त्रिशाखो गदितस्तु वेदः' इति वचनात्। ऊर्ध्वाग्रः मूले बद्ध्वाच्छिन्नः। 'वेदस्य करण इति। वत्सज्ञुं कुर्यादिति बौधायनः। मूतकार्यमिति शालीकिः। त्रिवृत्तमित्यौपमन्यवः। ऊर्ध्वाग्रमित्यौपमन्यवीपुत्रः' (बौ० श्रौ० २०।३) इति। अनाद्यम्, अन्नादिकं भोजनशक्तिर्वा। सर्वत्र कामनाश्रवणेऽप्यकामनापक्षाश्रवणात्प्रकारचतुष्टयस्यापि नित्यत्वम्। द्वैधेऽकामनाश्रवणाच्च। सर्वत्र[2]बन्धनशुल्बादुपरि प्रादेशमात्रमवशिष्य[3] छिन्द्यात्। छिन्नानि चाग्राणि वेदपरिवासनानि भवन्ति।

## वेदिं करोति प्रागुत्तरात्परिग्रहात् [4]कृत्वा[5]।

अत्र वेदिं करोतीति सामान्यशब्देन सर्वमपि वेदिकरणं प्राप्तं तस्यावयुत्या**-नुवादः—प्रागुत्तरात्परिग्रहात्[5] कृत्वेति। उत्तरत्राप्येतत्समन्त्रकं पुनराम्नायते। एवं सति दर्शपूर्णमासयोरौपवसथ्ययजनीयाहृद्वयेऽप्यस्यावृत्तिरिति प्रतीयते। यदि मन्येत कृतस्य करणभाव इति स्यात्। अप्येनं पौर्णमास्यामप्यौपवसथीयेऽहनिप्रागुत्तरात्परिग्रहात् कर्त्तव्यं स्यादविशेषविधानादितीमामाशंकामपाकुर्वन्नेवाह-प्रागुत्तरात्परिग्राहात्कृत्वा।

## अथापराह्णे पिण्डपितृयज्ञेन चरन्ति—इति।

अत्र कृत्वा-श्रुत्येवानन्तर्ये सिद्धेऽपि नियतानन्तर्यद्योतनाय पुनरथशब्दः प्रयुक्त इति। तदयमर्थः—यत्रौपवसथीयेऽहनि प्रागुत्तरात् परिग्राहात्करोति, तदव्यवहित-

---

१. इ₂— चकामस्य।

२. भ— बन्धनं शुल्बादुपरि।

३. त— °मवछिद्य शिष्टम्।

४. व श्र— 'कृत्वा' नास्ति।

५. ग— 'कृत्वा....परिग्रहात्' नास्ति।

---

*तदुक्तम्—यज्ञाङ्गादौ यज्ञाङ्गकाममिति—इ₁।

**अवयुत्य = पृथक्कृत्य — इ₁।

एवापराह्णे पिण्डपितृयज्ञ इति, न पौर्णमास्यां तत्प्रसंगः। अभियुक्तास्तु **'आमावास्येन पौर्णमासेन वा'** ( बौ० श्रौ० १।१ ) इति पाठक्रमानुरोधेन पूर्वोक्तरोपदिष्टयोर्वेदिकरणयोर्व्यवस्थितोऽन्वय इत्याहुः। एतेनैतदपि प्रत्युक्तं मन्ये।

**'अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुते'** (आप० श्रौ० १।७।१) इत्यस्य सूत्रस्य चन्द्रादर्शनमुपलक्षितमेवाह। पिण्डपितृयज्ञस्य नियतः कालः। ननु दृष्टचन्द्रा सिनीवालीत्यर्थं मन्यमानैः **'चतुर्दशीमिश्रत्वेन पूर्वे[1]द्युश्चन्द्रदर्शने सत्युत्तरेद्युः पूर्वाह्णे पर्वसन्धौ तदपराह्णे एव प्रयोगः'** (आप० श्रौ० १।७।१, रामाग्निचिद्वृत्तिः) इति। एवं च सौत्र[2]ममावास्यग्रहणमतन्त्रं स्यात्। दिनद्वये चन्द्रादर्शने प्रतिपदपराह्णनिवृत्तिपरमिति चेत्, **'अमावास्यायामपराह्णे पिण्डपितृयज्ञः'** इति सूत्रश्रुतिव्याकोपः। दिनद्वयेऽपि चन्द्रादर्शने **'तस्मात् पितृभ्यः पूर्वेद्युः क्रियते'** (तै० २।५।३।१२ तै० ब्रा० १।३।१०) इत्यादिभिरेव प्रतिपदपराह्णनिवृत्तौ सौत्रममावास्याग्रहणमनर्थकमेव स्यादिति। तस्मात्प्रतिपदपराह्णानिवृत्यर्थमेवामावास्याग्रहणमिति युक्तम्।

**अत्रायं प्रयोगक्रमः—**

संनयतः शाखासादनानन्तरमसंनयतस्तत्र [3]व्रत्याशनानन्तरमध्वर्युर्गार्हपत्यस्य पश्चात्तिष्ठन् तदुत्तरतो निहितं लवनसाधनं दात्रमादत्ते **'देवस्य त्वा०'** इति। तमभिमन्त्रयते **'यज्ञस्य घोषदसि'** इति। गार्हपत्ये प्रतितपति **'प्रत्युष्टं रक्षः०'** इति। आहवनीयाभिमुख्येन गच्छति **'प्रेयमगाद्धिषणा'** इति। आहवनीयसन्निधौ स्थित्वा दक्षिणतः परिवृत्य वेदिमवलोकयेत् **'इह बर्हिरासदे'** इति। आहवनीयस्य पुरस्तात् त्रीन् वा चतुरो वा [4]प्राचः प्रक्रमान् प्रक्रम्य यस्यां दिशि बर्हिर्लाभो निश्चितस्तां दिशमनियमेन गच्छेत्। प्रस्तराय पर्याप्तं दर्भस्तम्बमसिदेन परिगृह्णाति **'देवानां परिषूतमसि'** इति। **'असिदेनोर्ध्वमुन्मार्ष्टि वर्षवृद्धमसि'** इति। असिदेन

१. आप० श्रौ० (रामाग्निचिद्वृत्तौ)—**'पूर्वेद्युः'** इत्यस्यानन्तरम् **'पुरस्तात्'**।

२. ग भ—अमावास्ये ग्रहण०।

३. ग—प्राशनानन्तर०।

४. ग—पञ्च।

पर्वसूपयच्छति **'देवबर्हिर्मा०'** इति। आच्छिनत्ति **'आच्छेत्ता ते मारिषम्'** इति। अप उपस्पृश्य छिन्नावशिष्टमूलप्रदेशानभिमृशति **'देवबर्हिश्शत०'** इति। आत्मानमभिमृशति **'सहस्रवल्शाः०'** इति। अप उपस्पृश्य निरवशेषं स्तम्बं छित्वा, [1]अप स्पृश्य तूष्णीं सन्नखमात्रं प्रस्तरमध[2] संनह्योपर्यर्धमपि संनह्य भूमौ निदधाति **'पृथिव्याः संपृचः पाहि'** इति। मन्त्रवर्जं प्रस्तरस्यावृत युजो मुष्टीन् लुनोति त्रीन् वा पंच वा सप्त वेत्यादीन्[3]। त्रिसंधिना संधिमतामेकसरं शुल्बं कृत्वा द्विगुणीकृत्य सव्येनापसव्यमावेष्टयति **'अदित्यै रास्नासि'** इति। तदुदीचीनाग्रं निधाय तस्मिन् प्रस्तरप्रमाणानयुजो मुष्टीन् निधाय तेषूपरि प्रस्तरं निदधाति **'सुसंभृता त्वा संभरामि'** इति। शुल्बेन संनह्यति **'इन्द्राण्यै संनहनम्'** इति। ग्रन्थिं करोति **'पूषा ते ग्रन्थिं ग्रथ्नातु'** इति। पश्चात् प्राञ्चमुपगूहति **'स ते मा स्थात'** इति। एतस्मिन् काले [4]परिभोजनीयार्थं पित्र्यं च सकृदाच्छिन्नं मुष्टिमावृत्य तूष्णीं लुनोति। बर्हिरुद्यच्छते **'इन्द्रस्य त्वा०'** इति। शिरसि तृणं निधाय बर्हिर्निदधाति **'बृहस्पते०'** इति। गच्छति **'उर्वन्तरिक्षमन्विहि'** इति। उत्तरेण गार्हपत्यमन्तर्वेदि स्फ्यं काष्ठं वा निधाय, उपरि बर्हिर्निदधाति **'देवं गममसि'** इति। तत उद्धृत्य यत्र गुप्तं मन्यते तत्र तूष्णीं निदधाति। अमन्त्रकं पूर्ववच्छुल्बं कृत्वोदग्रं निधाय तेनोक्तलक्षणमेकविंशतिदारुमिध्मं संनह्यति **'यत्कृष्णो रूपं कृत्वा०'** इति। इध्मप्रव्रश्चनान्यपि संभृत्य बर्हिषामिव निधानान्तं कर्म तूष्णीं करोति। पूर्वमेवाहृतेषु बर्हिरिध्मेषु यजुष्करणमात्रं वा। **'आहृतं वा यजुषा करोति'** इत्युक्तत्वात्। लौगाक्षिरपि—
**'छिन्ने पिष्टे तथा लूने सांनाय्ये मार्तिके तथा। [5]पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः'** इति[6]। शयानस्य वत्सस्य जानुसदृशं वेदं करोति। **'शुल्बात्**

---

१. **'अप उपस्पृश्य'** इति पाठः स्यात्।

२. ग— °मधः।

३. ग भ— वेत्यादयः।

४. भ— परीभोजनीयार्थम्।

५. भ— प्रपश्चान्०।

६. भ— 'इति' इत्यस्यानन्तरम् 'खद्रवल्लीये वेज० च बर्हिराहरणेऽनुग्रहमाह बौधा०—आहृतं वा यजुषाकरोति—इति। कात्यायन श्चाह—निरवातलूनछिन्नावहृतवत्सदुग्धेषु यजुष्क्रियासंभवात्—इति। अत्रैव पेषणावसरेऽप्यग्रं विचारोऽस्ति।'

**प्रादेशे परिवास्य वेदपरिवासनानि निदधाति'** (आप० श्रौ० १।६।६)। वेदिकरण-प्रयोगं तूत्तरत्र वक्ष्यामः यद्यपि पिण्डपितृयज्ञप्रयोगमुत्तरत्र प्रवक्ष्यति तथाप्यनुष्ठान-क्रमानुरोधेनात्रैव तत्प्रयोगो निरूप्यते।

## ( पिण्डपितृयज्ञप्रयोगः )

**'अमावास्यायामपराह्णे पिण्डपितृयज्ञं करिष्ये'** इति सङ्कल्प्यानन्वाहितेऽपि क्रियमाणेऽन्वाहार्यपचनं स्वयोनित उत्पाद्य [1]परिसमूह्य पर्युक्ष्य दक्षिणाग्रैः प्रागग्रैश्च परिभोजनीयदर्भैरन्वाहार्यपचनं परिस्तीर्य, उत्तरेणाग्निं वेद्यां प्रागग्रान् दर्भान् संस्तीर्य तेषु—एरकोपबर्हणे चाञ्जनाभ्यञ्जने तथा स्फ्यं दशामुदकुम्भं च चरुस्थालीं समेक्षणमाज्यस्थालीं [2]स्रुवं चर्म शूर्पोलूखलमेव च मुसलं प्रोक्षणीपात्रम्—एतान्येकैकशो न्यसेत्। [3]प्राचीनावीती पवित्रं कृत्वा, अन्वाहार्यस्य ( अन्वाहार्यपचनस्य ) पश्चादुपविश्य पवित्रवत्यामग्निहोत्रहवण्यां चरुस्थाल्यां व्रीहीन् निर्वपति **'पितृभ्यो वो जुष्टं निर्वपामि'** ( बौ० श्रौ० ३।१० ) इति वा, तूष्णीं वा। उपर्यर्द्धां स्थालीं कृत्वा **'प्रोक्षण्या'** तूष्णीं संस्कृताभिरद्भिः **'पितृभ्यो वो जुष्टं प्रोक्षामि'** इति वा तूष्णीं वा व्रीहीन् सकृत् प्रोक्ष्य पात्राण्युत्तानानि कृत्वावशिष्टाभिः सकृदेव प्रोक्षाति। जघनेनान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिने उलूखलमुसले निधाय व्रीहीनोप्य, सकृदेव [4]दक्षिणाभिमुखोऽवहत्य, शूर्पेण वितुषीकृत्य पवित्रवत्यां चरुस्थाल्यामप आनीय, अधिश्रित्य तस्मिंस्तिरः पवित्रं तण्डुलानोप्य, आज्यं निरूप्याधिश्रित्य स्मार्तवत्संस्कृत्य, उभयं पर्यग्नि कृत्वोदगुद्वास्य, उत्पूय मेक्षणं स्रुवं सम्मृज्य चरुं श्रपयित्वा, अभिधार्योदञ्च[5]मुद्वास्य यज्ञोपवीतं कृत्वा मेक्षणेनोपहत्य तिस्र आहुतीर्जुहोति **'सोमाय पितृपीताय स्वधा नमः स्वाहा। सोमाय पितृपीतायेदम्, न मम। यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा। यमायाङ्गिरस्वते पितृमत इदम्,**

---

१. भ— परिमुह्यति।

२. इ१— स्रुचम्।

३. ग— प्राचीनावीतीम्।

४. ग— दक्षिणामुखो०।

५. इ१— °दिञ्चमु०।

न मम ॥ अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृत इदम्, न मम ।' मेक्षणमग्नौ प्रहृत्य प्राचीनावीतं कृत्वा दक्षिणेनान्वाहार्यपचनं [1]स्फ्येन सकृदेव दक्षिणापवर्गमुद्धन्ति 'अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः' ( बौ० गृ० प० १।८।१८ ) ।

उद्धृतदेशमद्भिरवोक्षति 'उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु' (तै० २।६।१२।९) इति । तस्मिन् देशे दक्षिणाग्रं सकृदाच्छिन्नं बर्हिः स्तृणाति 'सकृदाच्छिन्नं बर्हिरूर्णा मृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन् सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सह' ( तै० ब्रा० ३।७।४।१० ) इति । दक्षिणामुखः स्थित्वा पितॄन् आवाहयति 'उदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैः सह । असुं गमाः सत्ययुजो वृकास आ नो हवं पितरोऽद्यागमन्तु एह गच्छन्तु पितरो हविषे अत्तवे । अस्मिन् यज्ञे बर्हिष्यानिषद्य मा वीरः प्रमायुनक्' ( बौ० पू०; पृ० २८५ ) । सकृदाच्छिन्नस्य दक्षिणतः पुरस्ताद्वातेभ्य एरकोपबर्हणे निवेदयते 'आसनं शयनं चेमे तयोः सोम्यास आगताः । प्रिया जनाय नो भूत्वा शिवा भवत शंकराः' ( बौ० पू०, २८६ ) इति । उदकुम्भेन सकृदाच्छिन्नस्य दक्षिणापवर्गं त्रिषु स्थानेषु मार्जयति 'मार्जयन्तां पितरः, मार्जयन्तां पितामहाः मार्जयन्तां प्रपितामहाः' (बौ० श्रौ० ३।१०) इति ।

चरुशेषेण त्रीन् पिण्डान् कृत्वा यजमानः प्रतिपिण्डं स्वहस्त उपस्तीर्याभिघार्य मार्जनप्रदेशेषु [2]पिण्डान् ददाति[2] 'एतत्ते तत विष्णुशर्मन् ये च त्वामनु । एतत्ते पितामह नारायणशर्मन् ये च त्वामनु । एतत्ते प्रपितामह यज्ञशर्मन् ये च त्वामनु' । पिण्डानां पित्रादयो देवताः । यस्य पिता जीवति स येभ्यः पिता ददाति तेभ्यो दद्यात् । 'अत्र पितरो यथाभागं मन्दध्वम्' ( तै० १।८।२।५ ) इत्युक्त्वोदक् पर्या-

---

१. ग— स्फ्यं च ।
२-२. भ— 'पिण्डान् ददाति' नास्ति ।

वृत्यास्ते यावदौष्मसमाप्तेः। [1]परिकर्मिणा '**व्यावृत ऊष्मा**' इत्युक्ते पुनः पर्यावृत्य स्थाल्या चरुशेषं किञ्चिद दायाचजिघ्रति '**ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यमो यज्ञो देवेषु कल्पताम्। ये सजाताः समनसः जीवा जीवेषु मामकाः। तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः**' (तै० ।६।३।४-५) इति द्वाभ्याम्।

यज्ञोपवीत्याचम्य पुनः प्राचीनावीतं कृत्वा मार्जयति पिण्डसमीपे '**मार्जयन्ताम्**' इत्यादिभिः। आञ्जनं ददाति '**आञ्जतां पितरः, आञ्जन्तां पितामहाः, आञ्जन्तां प्रपितामहाः**' ( बौ० श्रौ० ३।१० ) इति। अभ्यञ्जनं ददाति '**अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः**' (तत्रैव)। वाससो दशां छित्वा पिण्डेषु निदधाति '**एतानि वः पितरो वासांसि, एतानि वः पितामहा वासांसि, एतानि वः प्रपितामहा वासांसि**' (तत्रैव) इति। षट्षष्ठिभ्यश्च वर्षेभ्य अष्टाभ्यश्च मासेभ्य ऊर्ध्वं-स्वहस्तलोम छित्वा, एतैरेवमन्त्रैः पिण्डेषु निदधाति। दक्षिणामुखः प्रह्वः कृताञ्जलिरुपतिष्ठते '**नमो वः पितरः०**' ( तै० ३।२।५।१९ )—रसाय, शुष्माय, जीवाय, स्वधायै, मन्यवे, घोराय—इति षड्भिः पर्यायैः '**पितरो नमो वः**' इति सर्वत्रानुषज्यते।

अथ वीरं [2]याचते '**वीरं मे पितरो दत्त, वीरं मे पितामहा दत्त, वीरं मे प्रपितामहाः दत्त, पितृमानहं युष्माभिर्भूयासं सुप्रजसो मया यूयं भूयास्त**' (बौ० श्रौ० ३।११)। '**[पितृमानहम्०]' भूयास्त**' इति सर्वत्रानुषज्यते। मनसा पितॄन् उत्थापयति '**उत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुयाता पुराणम्। धत्ता-दस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद् भागधां देवतासु**' (बौ० श्रौ० ३।११) इति। मनसानुगम्य पितॄन् स्वास्थानं नयति '**यन्तु पितरो यथालोकं मनसा जवेन। परेत पितरः सोम्याः गम्भीरैः पथिभिः पूर्व्यैः। अथा पितॄन् सुविदत्रान् अपीत ये सधमादं मदन्ति**' (तत्रैव ; बौ० पू० पृ० २८७) इति। अनुगतं मन आह्वयति '**मनो-**

---

१. ग— परिकर्मिण्यावृत०।

२. भ— याचयते।

ऽन्वाहुवामहे नाराशंसेन स्तोमेन पितॄणां च मन्मभिः ॥ आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ पुनर्न पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि' (तै० १।८।५।१०-१२) इति तिसृभिः । पिण्डान् सह बर्हिषाग्नावनुप्रहरति । स्फ्यादीनि [1]पितृयज्ञानन्तरं द्वन्द्वश[1] उदाहरन्ति, उद्वासयन्ति ।

अथ यज्ञोपवीती गार्हपत्यमुपतिष्ठते 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्' ( तै० १।८।१४।१२ ) इति । अत्र द्वितीयां जपति 'यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्' (तै० १।८।५।१३) इति ।

( इति द्वितीयोऽध्यायः )

---

१-१. ग— पितृपक्षानन्तरं द्वन्द्वः ।

## तृतीयोऽध्यायः

**अथैतस्यै शाखायै पर्णानि प्रच्छिद्य[1]ाग्रेण गार्हपत्यं निवपति[1]।**

अथाध्वर्युरेतस्याः शाखायाः पर्णानि सत्सरुकाणि प्रच्छिद्य। अत्र शाखाया मूलप्रदेशे छेद्यानां पर्णानां संख्यापेक्षया त्रित्वं विवक्षितम्। तथा च द्वैधे—'पर्णत्सरुकाणां निवपन इति सूत्रं शालीकेः। अत्रो ह स्माह बौधायनस्तृतीयमग्न्यगारमुद्वपेत्, तृतीयमन्तर्वेदि निर्वपेत्, तृतीयेन वत्सानां [2]धूननं कुर्यात्। एवं हि पशूनां नेदीयान् भवतीति' (बौ० श्रौ० २०।३)। नेदीयान् संनिहितः, अवियुक्त इति यावत्।

**अथैनामधस्तात् परिवास्य जघनेन गार्हपत्यं स्थविमदुपवेषाय निदधाति।**

एनां शाखां मूलप्रदेशे छित्वा स्थविमत्स्थूलमुपवेषाय अग्निप्रेरणकाष्ठत्वाय। अत्र 'एनाम्' इत्यनेन शाखायाः प्राधान्यं द्योतयति। तेन च शाखायाः प्रयोजकत्वं गम्यते। एतदुक्तं भवति 'शाखामूलप्रदेशे सत्युपवेषच्छेदनपर्याप्ते तत्परिवासनं कार्यमन्यथान्यत्काष्ठं सम्पादनीयम्। न ह्यप्रयोजकं प्रयुङ्क्ते' इति। अतएवासंनयतश्च पौर्णमास्यां चोपवेषार्थं न शाखाहरणम्। अतएव पौर्णमास्यामुपवेषो द्वैधे विकल्पितः 'पौर्णमास्यामुवेषकरण इति। कुर्यादिति बौधायनः। न कुर्यादिति शालीकिः'[3] (बौ० श्रौ० २०।३)।

---

१-१. ग भ स— 'अग्रेण...वपति' नास्ति।

२. ग भ— धूमम्।

३. भ— प्रच्छिद्य।

**अथास्याः प्रादेशमात्रं [२]प्रमाय दर्भनाडीः प्रवेष्ट्य तत्त्रिवृच्छाखापवित्रं करोति 'त्रिवृत्पलाशे दर्भ इयान् प्रादेशसंमितः। यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे' (तै० ब्रा० ३।७।४।११) इति।**

अस्याः शाखाया मूले प्रादेशमात्रं मीत्वा तत्र दर्भनाडीभिः सहाधस्तादाबध्य ताश्च दर्भनाडीः द्वेधा कृत्वा शाखाया सह त्रिगुणीकृत्य [१]त्रिवृत्पवित्रं करोति[१]। [२]दर्भबहुत्वं शाब्दमेव तादृशीनामपि समसंख्यत्वमार्थम् **'द्वेधा विभज्य'** इति वचनादि[२]ति[३]। अत्र द्वैधे विशेषः **'दोहनपवित्रस्यकरण इति। सह स्माह बौधायनो मूले मूलानि बद्ध्वा द्विगुणां रज्जुं संप्रसार्याग्रे निग्रथ्नीयात्। एवमस्याग्रमग्रैरभिसंपन्नं भवतीति।** [४]**अत्रो ह स्माह शालीकिर्मूले मूलानि बद्ध्वा द्विगुणां रज्जुं संप्रसार्य मूले परिहृत्य त्रिगुणां रज्जुं संप्रसार्याग्रे निग्रथ्नीयात्। एवमस्याग्रमग्रैरभिसंपन्नं भवतीति'**[४] (बौ० श्रौ० २०।३)। संप्रसार्य सम्यक् श्लिष्टं कृत्वा। मूले परिहृत्य परितो हृत्वा, आवेष्ट्येत्यर्थः।

**अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयं संसादयति-दोहनं पवित्रं संनाय्यतपन्यौ स्थाल्यौ- इति।**

अत्र 'सायं हुतेऽग्निहोत्रे' इति हवनप्रतीक्षणादग्निहोत्रस्यान्यकर्तृकत्वं प्रतीयते। स चान्यो यजमान एव **'स्वयं पर्वणि जुहुयात्'** इति वचनात्। चतुष्टयग्रहणं नियमार्थम्। रज्वादीनामपि प्रोक्षणपक्षे प्रदर्शनार्थं वा पाठक्रमादासादनक्रमः। **'तान्येवमेव द्वन्द्वम्'** (बौ० श्रौ० १।४) इति [५]परिभाषयात्रापि लब्धप्रसरत्वात्[५]।

---

१-१. ग— त्रिवृत्पवित्रकेण।
२-२. ग ख— 'दर्भ ····वचनात्' नास्ति। भ— पुस्तके 'ताश्च दर्भ०' इत्यस्यानन्तरमयं पाठोऽस्ति।
३. भ— 'इति' नास्ति।
४-४. पाठोऽयं भाष्यानुरोधेन बौधायनश्रौतसूत्रपाठमनुसृत्य संयोज्यते।
५-५. ग— परिभाषाया अत्रापि लक्ष्यप्रसरत्वात्।

**[1]अथैतान्यद्भिः प्रोक्षति 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति त्रिः ।**

अत्र त्रिरावृत्तिः प्रोक्षणस्यैव, न मन्त्रस्य । [2]प्रोक्षणं च तूष्णीं संस्कृताभिर्वा कमण्डलुगताभिरद्भिर्वा । अत्र द्वैधे विशेषः 'सांनाय्यपात्राणां प्रोक्षण इति[3] । तूष्णीं संस्कृताभिरद्भिः प्रोक्षयेदिति बौधायनः । कमण्डलुगताभिरिति शालीकिः' (बौ० श्रौ० २०।४) ।

**अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारा*न्निरूहति 'मातरिश्वनो घर्मोऽसि' (तै० १।१।३।२) इति ।**

अत्र कर्मविसाने - प्रत्यूह्याङ्गारान् - इत्यनभिधानाद्गार्हपत्यादबहिर्भागेऽङ्गाराणामिति गम्यते । एवं सर्वत्रावगन्तव्यम् ।

**तेषु सांनाय्यतपनीमधिश्रयति 'द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृँहस्व मा ह्वाः' (तै० १।१।३।२) इति ।**

सांनाय्यस्य एतत्कमर्थं दुग्धस्य पयस्तपनी तपनसाधनभूता स्थाली । द्वैधे विशेषः । 'अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहतीति । सूत्रं शालीकेः । अत्रो ह स्माह बौधायनस्तूष्णीमङ्गारान्निरूहेत् । सर्व एवैषोऽधिश्रयणमन्त्रः स्यादिति' (बौ० श्रौ० २०।३) ।

**तस्यां प्राचीनाग्रं शाखापवित्रं निदधाति 'वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्' (तै० १।१।३।३)—इति ।**

---

१. ब श्र— अथैतान्यद्भिः ।

२-३. भ— 'प्रोक्षण च....प्रोक्षण इति' नास्ति ।

---

*उदीचोऽङ्गारान् = गार्हपत्यस्यायतनाद्बहिरङ्गारनिरूहणम्—इ० ।

द्वैधे विशेषः 'दोहनपवित्रस्याभ्याधान[1] इति । मन्त्रेण कृत्वा मन्त्रेण स्थाल्यामादध्यादिति बौधायनः । तूष्णीं [2]कृत्वा मन्त्रेण स्थाल्यामादध्यादिति शालीकिः । अर्धेन कृत्वार्धेन स्थाल्यामा[3]दध्यादित्यौपमन्यवः' ( बौ० श्रौ० २०।३ )। मन्त्रेण 'वसूनां पवित्रमसि०'—इत्यादिना शाखापवित्रं[2] कृत्वा, [4]अनेनैव मन्त्रेण[2] स्थाल्यां निदधातीत्येकः पक्षः। तूष्णीं कृत्वा मन्त्रेण निदधातीत्यन्यः। अर्धेन 'वसूनां पवित्रमसि' इत्येतावता मन्त्रार्धेन शाखापवित्रं कृत्वा 'शतधारं वसूनां पवित्रमसि सहस्रधारम्' इत्येतावता मन्त्रार्धेन स्थाल्यां निदधातीत्यपरः पक्ष इति ।

**तदन्वारभ्य वाचंयम आस्ते ।**

तच्छाखापवित्रं दक्षिणेन हस्तेनान्वारभ्य, वाचंयम, कर्मोपयुक्तमन्त्रातिरिक्त-वाङ्निवृत्तिसंकल्पवान् आस्ते यावद्वाग्विसर्गविधानमित्यर्थः ।

**अथ गा आयतीः प्रतीक्षते 'एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गावः' ( तै० ब्रा० ३।७।४।१४ )। 'महेन्द्रो[5]रमयतु गावः'[5] इति वा यदि महेन्द्रयाजी भवति—इति ।**

न चात्रेन्द्रस्य गोरमणं प्रति पारार्थ्यादनूहाशंका, तस्य संप्रदानत्वे प्राधान्यात्। अपारार्थ्यादूहो युक्त इत्याशयः। यदीत्यनेन गतश्रियोऽपि संवत्सर-मिन्द्रयागं सूचयति । वाशब्दोऽन्यस्यापि संवत्सरादूर्ध्वं महेन्द्रयागविकल्पं द्योतयति ।

**अथाह 'उपसृष्टां मे प्रब्रूतात्' इति ।**

अध्वर्युर्दोग्धारमाह । उपगतवत्सा तां मे प्रब्रूतात् ।

---

१. ब श्र— °पवित्रस्याधान० ।

२-२. भ— 'कृत्वा....पवित्रम्' नास्ति । २-२. स— 'स्थाल्यां-मन्त्रेण' नास्ति ।

३. अत्र 'आदध्यात्' इति पाठो बौधायनश्रौतसूत्रपाठमनुसृत्याङ्गीकृतः ।

४. भ— तेनैव ।

५-५. ब श्र— 'रमयतु गावः' नास्ति ।

**उपसृष्टां प्राहुः ।**

परिकर्मिणो दोग्धा वा । प्राहुरिति बहुवचनमविवक्षितम् । उपसृष्टेति-प्रतिवचनम् ।

**दोह्यमानामनुमन्त्रयते 'हुतः स्तोको हुतौ द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्' (तै० १।१।३।४) इति ।**

दोह्यमाना गौः । दोह्यमानामित्यनेन द्रप्सान् लक्षयति । प्रकृतिविकारयोरभेद-विवक्षया ब्राह्मणान्तरानुसाराद्वेति । तथा च द्वैधे—'**धेनूनामनुमन्त्रण इति । स ह स्माह बौधायन एकैकामेवासामनुमन्त्रयेत, अथासामेकैकां दोहयेदिति । अत्रो ह स्माह शालीकिः सकृदेवैनाः सर्वा अनुमन्त्रयेता[1]थासामेकैकां दोहयेदिति । अत्रो ह स्माहौपमन्यवः सकृदेवैनाः सर्वा अनुमन्त्रयेत[1] सकृच्चैना दोहयेदत्र चैव हि स्तोकान् परिनिस्तिष्ठेदित्यौपमन्यवः । एकैकामेवासां सर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः ॥ स्तोकानामनुमन्त्रण इति । सूत्रं शालीकेः । आख्यातमौपमन्यवस्य । अत्रो ह स्माह बौधायन [2]आतच्यैव स्तोकाननुमन्त्रयेत । अत्रैव हि [3]स्तोकानामनुमन्त्रो भवतीति**' (बौ० श्रौ० २०।४) ।

अयं मन्त्रो धेनूनामनुमन्त्रणे विनियुक्त इति बौधायनः । अत्राप्यासां गवां मध्ये एकैकामनुमन्त्रयेत, अनुमन्त्रितामेकैकां दोहयेदिति । प्रतिधेनु [4]दोहमन्त्रा-वृत्तिरित्यर्थः । शालीकिमते सर्वासां गवामैकध्येनानुमन्त्रणं ततः क्रमेण दोह इति । औपमन्यवस्तु सर्वासां सकृदेवानुमन्त्रणं दोहश्च सकृदेवेत्याह । स च बहुकर्तृकः । एतदेवाभिसन्धायोक्तम् '**उपसृष्टां प्राहुः**' इति । एवमस्य दोह्यमानानुमन्त्रणे मतभेदाः ।

---

१-१. ग भ— 'अथासामे....मन्त्रयेत' नास्ति ।

२. इ१ भ— आतश्चैव ।

३. व श्र— स्तोकानामन्तो० ।

४. इ१— दोहं मन्त्रावृत्तिः ।

द्रप्सानुमन्त्रणविषये मतभेदानाह—अत्र चैव स्तोकान्-इत्यादिना । अत्र चैव स्तोकान् अभिमन्त्रणीयान् निश्चिनुयादिति । आसां गवां मध्य एकैकामेव सर्वेण सर्वेण कर्मणा वत्सप्रेरणादिना परिनिस्तिष्ठेत् दुग्धां दुग्धां निश्चिनुयादित्यौपमन्यवीपुत्रस्य मतम् । शालीकेस्तु मते स्तोकानुमन्त्रण एवायं विनियुक्तो मन्त्रः । सर्वमन्यत्समानम् । एतदेवौपमन्यवस्यापि समानम् । बौधायनमते त्वातञ्चनानन्तरमनेन मन्त्रेण स्तोकानु-मन्त्रणमन्यथात्रैव हि स्तोकानुमन्त्रो[1]भवतीति । हि यस्मात् कारणाद्दोहनकाल एव ये [2]स्तोकास्तानेवानु, तेषामेवानुमन्त्रणार्थमयं मन्त्रो भवति । न त्वातञ्चनस्तोकानु मन्त्रणे । तत्र चेत्, सर्वस्तोकानुमन्त्रणं[2]भवतीत्यर्थः ।

**अथ पुरस्तात् प्रत्यगानयन्तं पृच्छति 'कामधुक्षः' (तै० ब्रा० ३।७।४।१६) इति । ( '[3]अमूम्' इतीतरः प्रत्याह[3] । )**

पुरस्तात् प्रत्यङ्मुखः सन् यो [4]दुग्धमानयति कुम्भ्यामासिञ्चति । तमानयन्तं पृच्छति । अत्रानयनमासेचनं न प्रापणम् । **'आहराप आनय'** ( बौ० श्रौ० १।९ ), **'अप्रमत्तः सन्ततमानय'** (बौ० श्रौ० ७।६, १०।५४), **'दोहलेऽप आनीय संक्षालनमानयति'** (बौ० श्रौ० १।३) इत्यादिषु चानयनस्यासेचनवाचित्वदर्शनात् । **'कामधुक्षः'** इत्येतावान् एव मन्त्र इति केचित्, प्रश्नार्थस्यैतावतैव समाप्तत्वात् । क्वचिदप्याच्छिद्रकाणां मन्त्राणां प्रतीकग्रहणदर्शनात्, प्रतीकग्रहणपाठं[5] विना महेन्द्रायेत्यूहानुपपत्तेः, एवम् **'अमुम्'** इति प्रतिवचनेऽपि **'अमुमिति नाम गृह्णाति'** ( तै० ब्रा० ३।२।७ ) इति ब्राह्मणे नामग्रहणमात्रविधानादन्ये प्रतीकग्रहणमित्याहुः । [6]आचार्यस्योपदेश-वैचित्र्यान्नात्र समस्तमन्त्रपाठः । अन्यत्र इन्द्रपदस्थाने महेन्द्रपदप्रयोगवशादत्राप्यूह[7]-

---

१. स— °मन्त्रणो० ।

२-२. ग— 'स्तोकास्ता....मन्त्रणम्' नास्ति ।

३-३. पाठोऽयं भाष्यानुरोधेन बौधायनश्रौतसूत्रमनुसृत्य गृह्यते ।

४. ग भ— दुग्धा ।

५. इ— ग्रहणे पाठम् ।

६. भ— आचार्य उपदेशवैचित्र्यान्नात्र ।

७. इ— दत्र तु ऊह० भ— °दत्रानुप्यूह० ।

इत्युपदेशवैचित्र्यद्योतनायैवेति । एवं पक्षद्वये समानेऽपि प्रतीकपक्ष एव ज्यायान् । '[1]भद्रमेवासां कर्माविष्करोति' ( तै० ब्रा० ३।२।३।७ ) इति[2] ब्राह्मणात् । न हि नाममात्रवचने भवत्यासां भद्रं कर्माविष्कृतमिति । 'नामगृह्णाति' इति विधानं तु 'अमूम्' इति यथाश्रुतपदपर्युदासायेति [3]युक्तमुत्पश्यामः । अतः 'कामधुक्षः' । 'महेन्द्रायेति तद्याजिनः' । ततो दोग्धा प्रतिवक्ति 'गंगा यस्यां देवानां मनुष्याणां पयो हितम्' इति ।

**तामनुमन्त्रयते 'सा विश्वायुः' (तै० १।१।३।५) इति ।**

एवमुत्तरत्रापि ।

**द्वितीयमानयन्तं पृच्छति 'कामधुक्षः' इति 'अमूमेव'[4] इतरः प्रत्याह । तामनुमन्त्रयते 'सा विश्वव्यचा' (तै० १।१।३।६) इति । तृतीयमानयन्तं पृच्छति 'कामधुक्षः' इति । 'अमूमेव'[4] इतरः प्रत्याह । तामनुमन्त्रयते 'सा विश्वकर्मा' (तै० १।१।३।७ इति ।**

द्वितीयायास्तृतीयायाश्च 'उपसृष्टां मे प्रब्रूतात्' इति समानमभ्युपगम्य प्रश्नं प्रतिवचनानुमन्त्रणयोर्विशेषो दर्शितः । यदि नाम 'अमुमेव' इति, 'अमुमेव' इति प्रतिवचनं गवां नामसंकीर्तने विशेषो न स्यात् । प्रैषावृत्त्यवचनवत्प्रश्नाद्यावृत्तिमपि नाकरिष्यत् । अतस्तत्करणं तद्विशेषविवक्षयेत्यवगच्छामः । न हि विशेषकांक्षाभावे प्रश्नावृत्तिरपि । प्रैषाद्यवृत्तिमपि किमर्थं न कृतवान् इति चेत्, आपद्येकगोर्दोहे तन्निवृत्त्यर्थमिति ब्रूमः । अस्तु वा तत्रापि [5]प्रैषावृत्तिरिति केचित् प्रैषप्रश्नावृत्त्य-

---

१. ग— सभद्रमेवासाम् । भ— सममेवासाम् ।

२. भ— 'इति' इत्यस्यानन्तरम 'विधानं ह' ।

३. ग— युक्तयुत् ।

४. ब श्र— इत्येवेतरः ।

५. ग— प्रैषप्रवृति० ।

करणस्य च प्रयोजनं गोरेकत्वपक्षं प्रस्नानावृत्त्यर्थमित्यपरे। तदेतत्सर्वं कर्मान्ते स्पष्टीकृतम् 'अथेमाः साक्षायदुह्याः [1]षड्वराः समाम्नाता भवन्ति। ताश्चेत्तिस्र एव स्युः प्रथमां [2]वोत्तमां वा चतुर्विगृह्णीयात्। अथ चेद् द्वे एव स्यातामितरेतरयोस्त्रिस्त्रिर्विगृह्णीयात्। अथ चेदेकैव स्यात्तामेव षड्कृत्वो विगृह्णीयात्' (बौ० श्रौ० २४।२३) [3]षड्वराः षट्संख्याया अनूनाः, उपर्यनियमाः। आपदि तु ता गावस्तिस्र एव यदि स्युः प्रथमां वोत्तमां वा चतुर्वारं विगृह्य विगृह्य गृह्णीयात्। त्रिर्मन्त्रेण त्रिस्तूष्णीमिति। एतत् सर्वत्र समानम्। प्रथमायाश्चतुर्विग्रहणे प्राथमिकं त्रितयं समन्त्रकं, प्रथमायाश्चतुर्थविग्रहणे सहेतरयोर्द्वे विग्रहणे चेति त्रितयममन्त्रकम्। एवमुत्तमायाश्चतुर्विग्रहणे प्राथमिकयोर्द्वे [4]उत्तमायाश्च प्राथमिकं विग्रहणमिति त्रितयं समन्त्रकम्। एवं द्वित्वपक्षेऽपि प्रथमाया विग्रहत्रयं समन्त्रकं द्वितीयायास्त्वमन्त्रकमिति। एकमेकत्वेऽपि। उपलक्षणं चैतत्। यदि पञ्चैव स्युः वोत्तमां वा द्विर्द्विगृह्णीयात्। चतुष्टये तु प्रथमां वोत्तमां वा त्रिगृह्णीयादिति योज्यम्।

**तिसृषु दुग्धासु वाचं विसृजते 'बहुदुग्धीन्द्राय देवेभ्यः। हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः। पुनर्दोहाय कल्पताम्' (तै० ३।७।४।१६-१७) इति। महेन्द्रायेति वा यदि महेन्द्रयाजी भवति।**

'समन्त्रकदोहत्रयानन्तरं वा वाचं विसृजते' इति पाठे नियमं जहाति। तत्रायं मन्त्रः 'बहुदुग्धी०' इत्यादिकः। स तु सकृदेव वक्तव्यः। ब्राह्मणोक्तस्य 'त्रिराह' (तै० ब्रा० ३।२।३।८) इति [5]त्रिर्वचनस्य दोह्यमानानुमन्त्रणविषयत्वात्। ब्राह्मणस्यैतन्मन्त्रविषयत्वपक्षे त्रिर्वा भवतु। अनुक्रान्तानां गवां मन्त्रेण [6]प्रत्येकमभिसम्बन्धात्।

---

१. भ— षड्वराः। ब श्र— षडवमाः।

२. इ१— चोत्तमाम्।

३. भ— षड्वराः।

४. ग भ स— मध्यमायाश्च।

५. इ१— तन्निर्वचनस्य।

६. इ१ ग— प्रत्येकाभि०।

अतएव प्रत्येकं गोविषयं बहुदुग्धीत्येकवचनमुपपन्नं [1]भवति । अतएव **'तिसृषु दुग्धासु'** इत्युक्तम् । इतरथा **'वाचं विसृजते'** इत्येतावदेवावक्ष्यत्, न तु **'तिसृषु दुग्धासु'** इति । अतस्त्रिर्वा सकृद्वेति वैकल्पिकत्वेऽप्याचार्येण तथानभिधानं प्रत्यक्षानुमितश्रुत्योः समतुलितत्वाभावद्योतनाय । कथं तर्हि विकल्पः स्यादिति चेत्, **'त्रिराह'** इत्यस्य विषयानियमात् । तथापि **'बहुदुग्धी०'** इति प्रैषस्य गोविषयस्यासंभावितात्, त्रिरित्याचार्येणावचनाच्च सकृदेव **'बहुदुग्धी०'** इति वाग्विसर्ग इति युक्तम् । प्रकृतानुष्ठानानुपयुक्तत्वाच्चास्य मन्त्रस्य वा वाग्विसर्जनरूपता । अतएवायं मन्त्रो विकृतौ न प्रवर्तते, [2]अनुष्ठानायोगात् । न हि विकृतौ दुग्धाया गोः पुनर्व्याप्यायनं प्रसक्तम् । प्रकृतिवत् पुनः पुनरनुष्ठानादिति । अस्य मन्त्रस्य वाग्विसर्गरूपतामेव [3]दर्शयन्नाह—

## विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयित्वा-इति ।

**'बहुदुग्धी०'** इति विसृष्टवाक् शाखापवित्रमनन्वारभ्य । तूष्णीमित्यनेन वाङ्नियमाभाव इति[4] कर्मणि[5] यथेष्टमभिभाषणं निवर्तयति । मन्त्रस्त्वाम्नानादेव निवृत्तः । अत्र द्वैधे विशेषः **'उत्तरासां दोहन इति । विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयेदिति बौधायनः । [6]आनीयमान आनीयमान एवानुचारभेत[6] वाचं च यच्छेदिति कात्यः'** (बौ० श्रौ० २०।४) । अन्वारभेत च वाचं च यच्छेच्चेत्यन्वयः । आनीयमाने आसिच्यमाने । कुम्भ्यामासेचनकाल एव पवित्रान्वारम्भणं वाङ्नियमनं चेति कात्यस्य मतमित्यर्थः । आवृत्प्रसंगोऽन्वारम्भणायत्तः । [7]उत्तरा इति त्रित्वे पर्यवसानं षट्कृत्वो विग्रहणनियमनात् । षडवरा इत्यनेन उत्तरास्वनियमपक्षोऽपि

१. ग— °मुभयत्र ।

२. ग भ स— अनुपयोगात् ।

३. ग भ— द्रढयन्नाह । स—दृढयन्नाह ।

४. इ₁— °भावेऽपि ।

५. ग— यथेच्छ० ।

६-६. भ— आसिच्यमाने कुम्भ्या एवानन्वारभेत । ब— आनीयमान एवानुचारभेत । श्र— आनीयमाना एवानुचारभेत । स— अनीयमान आनीयमान एवावारभेत् ।

७. ग— उत्तराम् ।

सूचितः। तथा च कर्मान्ते—'विसृष्टवागनन्वारभ्योत्तरा दोहयेदित्यपरिमिताना-मेवैतदुक्तं भवति' (बौ० श्रौ० २४।२३) एवमपरिमितपक्षाश्रयणेन गोसंख्यानियम-निवृत्तावापदि गोरलाभे याचनादिलब्धपयसो यजमानस्याप्यनुष्ठानसिद्धिरवगन्तव्या। तथा च द्वैधे 'दुग्धं लभमानस्य वत्सापकरणप्रभृतिमन्त्रान् लाधयेदिति बौधा-यनः। आसेचनप्रभृतीनिति शालीकिः' (बौ० श्रौ० २०।४)। दुग्धमेव लभमानः, न तु दोहनक्रियाम्। गोरलाभादित्यर्थः। आसेचनप्रभृतीन् 'कामधुक्षः' इत्यादिकान्। एतस्मिन् पक्षे शाखाच्छेदनमात्रं समन्त्रकमन्यत् क्रियाजातममन्त्रकमिति।

**दोहनेऽप आनीय संक्षालनमानयति 'संपृच्यध्वमृतावरी-रूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये' (तै० १।१।३।६) इति।**

संक्षाल्यतेऽनेन दोहनमिति संक्षालनं तत्कुम्भ्यामासिञ्चति।

**अथैनत्तप्तोदगुद्वास्य शीतीकृत्वा तिरः पवित्रं दध्यात-नक्ति 'सोमेन त्वातनच्मीन्द्राय दधि' (तै० १।१।३।६) इति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति। यावता मूर्छयिष्यन् मन्यते तावदानयति।**

मूर्छयिष्यन् दधिभावमापत्स्यत [1]इति निश्चिनोति तावद् दध्यानयति। यदातञ्चनार्थमुपकल्पितम्। [2]अत्र दध्यासेचनसाधनम्। दधिपरिमाणं चानियतमित्य-वगम्यते। द्वैधे तु नियम उक्तः **आतञ्चन इति। चतुर्थे स्रुव आनयेद्यावता मूर्छ-यिष्यन् मन्यत इति बौधायनः। तृतीये स्रुव आनयेद्यावता मूर्छयिष्यन् मन्यत इति शालीकिः'** (बौ० श्रौ० २०।४) इति। अत्र स्रुवेण चतुर्वारमातञ्चनं तत् [3]त्रिवारं वा। चतुर्थे तृतीये वा स्रुवेणातञ्चने सति यावता मूर्छयिष्यन् मन्यते तावदानये-दित्यर्थः। स्रुवेणातञ्चनपक्षे तस्यासादनप्रोक्षणेऽपीति केचित्। अत्र दध्नोऽभावे पूति-काद्यातञ्चनद्रव्याणां विकल्पः।

---

१. भ— °मायस्यत°।
२. इ१— तत्र।
३. ग भ— त्रिहरं वा।

**अग्निहोत्रोच्छेषणमभ्यातनक्ति 'यज्ञस्य सन्ततिरसि। यज्ञस्य त्वा सन्ततिमनु सन्तनोमि' (तै० ब्रा० ३।७।४।१७) इति।**

अत्र पयोव्यतिरिक्तद्रव्येणाग्निहोत्रे प्रक्रान्ते संनयनपयसैवाग्निहोत्रमस्यां रात्री हुत्वा [1]तच्छेषमभ्यातनक्तीत्येकः पक्षः। येन द्रव्येण जुहुयात् तच्छेषेणातञ्च्या-दित्यन्यः। पक्षद्वयेऽप्यग्निहोत्रोच्छेषणप्रमादे पुनरग्निहोत्रं हुत्वा[1] तच्छेषं सम्पादये-देव। शेषप्रतिपत्तिमात्रत्वानभ्युपगमा[2]दन्यथा न प्रतिपत्तिः। प्रतिपाद्यं प्रयुङ्क्ते इति न्यायविरोधः स्यात्[3]। [4]**अग्निहोत्रोच्छेषणमभ्यातनक्ति**[4] **यज्ञसन्तत्यै** (२।५।३।११) इति फलश्रवणाच्च। तदेतद् द्वैधकर्मान्तयोः स्पष्टीकृतम्। **अग्निहोत्रोच्छेषणस्य करण इति। स ह स्माह बौधायनो यद्यस्याज्येन वौषधेन वा प्रक्रान्तं स्यात् पयसैव तां रात्रिं जुहुयात्, पयस एवाग्निहोत्रोच्छेषणं कुर्यादिति। अत्रो ह स्माह शालीकि र्नासमाप्ते काम आवर्त्तयेद्यद्यस्याज्येन वौषधेन वा प्रक्रान्तं स्यात्तस्य हुत्वा तस्यैवाग्निहोत्रोच्छेषं कुर्यादिति'** (बौ० श्रौ० २०।४)। कामेऽ-समाप्ते **'आज्येन जुहुयात्तेजस्कामस्य'** (तै०ब्रा० २।१।५।५) इत्यादिकेऽपूर्णे। नावर्त्तयेत् द्रव्यव्यतिरिक्तं कुर्यात्। तथा कर्मान्ते च **'स यद्यु ह्यग्निहोत्रोच्छेषणात्[5] प्रमाद्ये-त्तत् पुनरेवाग्निहोत्रं जुहुयात्'** (बौ० श्रौ० २४।३)। दध्यग्निहोत्रोच्छेषणयो[6]र्हवि-विरातञ्चनपूर्वापर्य[7]विकल्पो द्वैधे दर्शितः **'अग्निहोत्रोच्छेषणमभ्यातनक्तीति सूत्रं शालीकेः। अत्रो ह स्माह बौधायनोऽग्निहोत्रोच्छेषणमानीय हविरातञ्चनमानये-**

---

१-१. ङ₁ भ—'तच्छेष....हुत्वा' नास्ति।

२. अत्रार्थतः 'मात्रत्वाभ्युपगमात्' इत्येव समीचीनः पाठः प्रतीयते।

३. ङ₁— 'स्यात्' इत्यस्यानन्तरम् 'अग्निहोत्रोच्छेषणमभ्यातनक्ति–इत्येकः पक्षः। येन द्रव्येण जुहुयात् तच्छेषेणातञ्च्यात् इत्यपरः। पक्षद्वयेऽप्यग्निहोत्रोच्छेषणप्रमादे पुन-रग्निहोत्रं हुत्वाभ्यतनक्ति।

४-४. ङ₂— 'अग्निहोत्रो....तनक्ति' नास्ति।

५. ग— °छेषात्।

६. ग— °छेषयो०।

७. 'पौर्वापर्य०' इति पाठः स्यात्।

देवमस्योभयमभ्यातनक्तं भवतीति' ( बौ० श्रौ० २०।४ )। उभयं सान्नायमग्निहोत्रोच्छेषणं चातनक्तम्। कृतातञ्चनः।

**अथैनदुदन्वता कंसेन वा चमसेन वापिदधाति 'अदस्तमसि विष्णवे त्वा। यज्ञायापिदधाम्यहम्। अद्भिररिक्तेन पात्रेण। याः पूताः परिशेरते' (तै० ब्रा० ३।७।४।१७) इति।**

उदन्वतेति। अनेन प्रोक्षणीशेषोदकपूर्णत्वं[1] विवक्षितम्। **'तिरः पवित्रमतिनीता आपो धार्य'** (तै० ब्रा० ३।७।४।१४) इति लिङ्गात्। धारणस्य प्रयोजनान्तराभावात्। अपिधाने पूरणे विनियोगः इति केचित्। तदनुपपन्नमत्र मन्त्रसंस्कृतप्रोक्षण्यसंभवात्। असंभवश्चैतत्प्रकरणे मन्त्रानाम्नानात्। आचार्येणावचनाच्च[2]। अतएव **'शुन्धध्वम्'** (तै० १।१४।५) इत्यत्र **'कण्डलुगताभिस्तूर्ष्णीं संस्कृताभि र्वा'** ( बौ० ध० २०।३ ) इत्युक्तम्। यत्र तु मन्त्रसंस्कृतप्रोक्षणीधारणं विनियोगश्चास्ति तत्र वचनमाचार्यस्यैव जागरूकं यथा—**'अतिशिष्टाः प्रोक्षणीर्निधाय'** (बौ० श्रौ० १।६) इति, **'आहरन्त्येताः प्रोक्षणीरभिपूर्य'** (बौ० श्रौ० १।९) इति च। अतस्तत्रोपपन्नम्, न त्वत्र वचनाभावादिति। तस्माद् उदन्वता-इत्यत्रोदकमात्रग्रहणमुपपन्नम्। अत्र केचिदपिधान्यामुदगग्रं शाखापवित्रं निधाय कमण्डलूदकं पूरयेदित्याहुः। अत्र द्वैधे विशेषः **'उदन्वतापिदधातीति। उदन्वतापिधाय सर्वां रात्रिं परिशाययेदिति बौधायनः। उदन्वतापिधाय सिक्त्वैता [3]आपोऽपिदध्यादिति शालीकिः'** (बौ० श्रौ० २०।४)। एता [4]आपः सिक्त्वा रेचयित्वा पुनरपिदध्यादिति।

**तदुपरीव निदधाति यत्र गुप्तं मन्यते 'विष्णो हव्यं रक्षस्व' (तै० १।१।३।१०) इति।**

उपरीव-उपर्येव, **'अनधः सादयति'** (तै० ब्रा० ३।२।३।१२) इति लिङ्गात्, यत्र शिक्यादौ गुप्तं मन्यते।

---

१. '°शेषोदकपूर्णत्वम्' इति पाठः स्यात्।
२. भ — '°च्च' नास्ति।
३. ब श्र — अपः।
४. अत्रार्थतः 'अपः' इति पाठो भवेत्।

**एतस्मिन् काले दर्भैः प्रातर्दोहाय वत्सानपाकरोति तूष्णीम् ।**

अत्र शाखायाः कर्मान्तरे विनियुक्तत्वात् 'त्रिवृत्पलाश' (तै० ब्रा० ३।७.४।११) [1]मन्त्रसंस्कारशाखापवित्राणामप्राप्त्या च शाखान्तराहरणस्य चाचोदितत्वान्न[1] तया वत्सापकरणमिदानीमनुष्ठेयमित्यभिसन्धायोक्तम्-दर्भैरिति । परिस्तरणस्यायमपि कालः । वक्ष्यति हि नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति' (बौ० श्रौ० १।४) एतत्प्रकाराश्रयणेन[2] विशेषो द्वैधे दर्शितः 'अग्नीनां परिस्तरण इति । सूत्रमाचार्ययोः । अत्रो ह स्माहौपमन्यव उपवसथ एवाग्नीन् यथोत्पन्नं परिस्तृणीयात् । एवं हि ब्राह्मणं भवति-उपास्मिं छ्वो यक्ष्यमाणे[3] देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति इति' (बौ० श्रौ० २०।४) यथोत्पन्नम् उत्पत्तिक्रममनतिक्रम्य, गार्हपत्यमारभ्येत्यर्थः । अत्र रात्रावशनानशनविषये तूक्तम् ।

**अत्राथं पिण्डपितृयज्ञानन्तरं प्रयोगक्रमः—**

अध्वर्युः शाखामूलप्रदेशपर्णानि त्सरुणा सह प्रच्छिद्याप उपस्पृश्य गार्हपत्यस्य पुरस्तान्निधाय शाखामूलप्रदेशं छित्वापः [4]स्पृश्य गार्हपत्यस्य पश्चादुपवेषाय निदधाति । शाखामग्रतः प्रादेशमात्रं मीत्वा दर्भनाड्या सहाधस्तादाबध्य दर्भनाडीर्द्वेधा[5] विभज्य शाखया सह त्रिगुणीकृत्य तत्त्रिवृच्छाखापवित्रं 'त्रिवृत्पलाशे०' इति । एतावदहरेव कुर्यात् । सायमग्निहोत्रं यजमानः स्वयमेव हुत्वाग्निहोत्रोच्छेषणं कुर्यात् ।

ततोऽध्वर्युरुत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयं द्वन्द्वं न्यञ्चि सादयति-दोहनं शाखापवित्रं सांनाय्यतपन्यौ । तान्युत्तानानि कृत्वा लौकिकाभि-

---

१-१. ग भ स— मन्त्रसंस्कारात् शाखापवित्रनामप्राप्तावशाखान्तराहरणस्य चोदितत्वान्नात्र ।

२. ग भ स— प्रकाराश्रयेणेन ।

३ इ₂— यक्ष्यमाण० ।

४. 'उपस्पृश्य' इति पाठः स्यात् ।

५. ग भ च— °नाडीं द्वेधा ।

रद्भिः सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्षति **'शुन्धध्वम्'०** इति। गार्हपत्यस्य पश्चादुपविश्योपवेषेणोदीचोऽङ्गारान् निरूहति **'मातरिश्वनो०'** इति। तेषु सांनाय्यकुम्भीमधिश्रयति **'द्यौरसि०'** इति। तस्यां उपरिशाखापवित्रं प्रागग्रं निदधाति **'वसूनाम्०'** इति। पवित्रमन्वारभ्य वाचंयम आस्ते। अथ गा आयतीः प्रतीक्षते **'एता आचरन्ति०'** इति, **'महेन्द्रो रमयतु'** इति महेन्द्रयाजिनः। अध्वर्युर्दोग्धारं प्रत्याह **'उपसृष्टां मे प्रब्रूतात्'** इति। दोग्धा वत्सं विमुञ्च्य **'उपसृष्टा'** इति प्रत्याह। अध्वर्युर्दोह्यमानां गामनुमन्त्रयते **'हुतः स्तोको०'** इति। पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सपवित्रायां कुम्भ्यां पय आनीयमानं दोग्धारं पृच्छत्यध्वर्युः **'कामधुक्ष इन्द्रियम्'**[1] इति, **'महेन्द्राय'** इति महेन्द्रयाजिनः। दोग्धा **'गंगाम्'** इति गोर्नाम गृहीत्वा **'यस्यां देवानां'** इति ब्रूयात्। अध्वर्युस्तामनुमन्त्रयते **'स विश्वायुः'** इति। द्वितीयादोहेऽपि **'उपसृष्टां'** इत्यादि, **यमुनां यस्यां०'** इति प्रतिवचनम्, **'सा विश्वव्यचा'** इत्यनुमन्त्रणम्। तृतीयादोहेऽपि **'उपसृष्टां०'** इत्यादि, **'सरस्वती यस्यां०'** इति प्रतिवचनम्, **'सा विश्वकर्मा'** इत्यनुमन्त्रणम्। अध्वर्युस्तिसृषु दुग्धासु वाचं विसृजते **'बहुदुग्धी'** इति, **'महेन्द्राय देवेभ्यः'** इति महेन्द्रयाजिनः।

एकस्यां विकृतौ च **'बहुदुग्धी'** इत्यस्य लोपः। अगोमतो यजमानस्य याचितपयस्कस्य क्रीतपयस्कस्य शाखापवित्रनिधानान्तं कृत्वा **'एता आचरन्ति०'** इत्यादि सर्वं दोहमन्त्रं जपति। विसृष्टवाक् शाखापवित्रमन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहनेऽप आनीय संक्षालनमानयति **'सं पृच्यध्व०'** इति। अन्यत्र पवित्रं निधाय तप्त्वा, उदगुद्वास्य शीतीकृत्वा, उदगग्रं पवित्रं निधायकाहादिसंस्कृतेन दध्नातनक्ति **'सोमेन त्वा०'** इति, **महेन्द्राय'** इति तद्याजिनः। उक्तदध्यभावे लौकिकेन दध्ना, तदभावे [2]तक्रेण पूतिकादिना वा। एतेनैव मन्त्रेणातञ्च्याद् यावदलं भवति। अग्निहोत्रोच्छेषणमभ्यातनक्ति **'यज्ञस्य'** इति। अथैनदुदन्वता कंसेन चमसेन वापिदधाति **'अदस्तमसि'** इति। तदादायोपरि शिक्यादौ निदधाति **'विष्णो'०** इति। एतस्मिन् काले गोष्ठं गत्वा दर्भैं प्रातर्दोहाय तूष्णीं वत्सानपाकरोति। परिभोजनीयदर्भैः वक्ष्यमाणप्रकारेण गार्हपत्यमारभ्याग्नीन् [3]परिस्तृणाति।

---

१. **'इन्द्राय'** इति पाठः स्यात्।

२. **ग भ** — क्रमेण।

३. **भ**— विस्तृणाति।

अत्र 'इषे त्वा०' ( तै० १।१।१।१-३ ) इत्यनुवाकत्रयाम्नातानां मन्त्राणां विनियोगसंग्रह :—

शाखां छिन्द्यादिषे त्वेति, वायवःस्थेति वत्सकान् ।
अपाकृत्याथ गाः प्रेर्य देवो व इति गोपतिम् ॥
ध्रुवास्मिन्निनितीक्षेत, [1]यज्ञशाखानिगूहनम् ।
पूर्वकल्पानुसारेण पञ्च मन्त्रा इहोदिताः ॥
यज्ञस्येत्यभिमन्त्र्याग्नौ प्रत्युष्टं प्रतितापयेत् ।
असिदं परशुं वा [2]प्राग्व्रजेत् प्रेयमगादिति ॥
इहेति वेदिमीक्षेत देवानां स्तम्बसंग्रहः ।
वर्षेत्युन्मार्ष्टि देवेति दात्रं संयोज्य दाति तत् ॥
आच्छेतेत्यालवस्पर्शो[3] देवेत्यात्माभिमर्शनम् ।
सहस्रेति, पृथिव्याः स्यात् प्रस्तरासादनं च तम्[4] ॥
सुसंभृतेति संभृत्यादित्यै स्याद्रशनाकृतिः ।
इन्द्राण्या इति संनह्य, ग्रन्थिं पूषेति गूहनम् ॥
सा ते मा स्थात् समुद्यच्छेदिन्द्रस्येति शिरोधृतिः ।
बृहस्पतेरागतिः स्यादुर्वित्यूर्ध्वं निधाय [5]तत् ॥
देवंगममसीत्यत्र मन्त्रा विंशतिरीरिताः ।
शुन्धध्वमिति सांनाय्यपात्राणि प्रोक्ष्य मातरि ॥
उपवेषेण पोह्याग्नावुदगङ्गारनोदनम् ।
द्यौरित्यधिश्रित्य कुम्भीं वसूनामिति निक्षिपेत् ॥

---

१. 'यजः' इति पाठः स्यात् । इ१ स— यज्ञ० । ग भ— यजुः ।

२. ग— प्राव्रजेत् । स— प्राग्वद्धजेत् ।

३. ग भ स— °स्पर्शो ।

४. भ— ताम् ।

५. ग भ— तम् ।

तस्यां पवित्रं प्रागग्रं हुतस्तोकेति गाः क्रमात् ।
[1]दोह्यकालेऽनुमन्त्र्याथ सेत्यादित्रितयेन ताः ॥
दुग्धा पृथक् मन्त्रयित्वा सम्पृच्यध्वं च सेचयेत् ।
दोहनीक्षालनं कुम्भ्यां सोमेनेत्यातनक्ति तत् ॥
विष्णो इत्यनधो रक्षेन्मन्त्रा एकादशोदिताः ॥

इति प्रथमप्रश्ने तृतीयोऽध्यायः

---

१. ग भ— दोहनकाले ।

## चतुर्थोऽध्यायः

**अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते 'कर्मणे वां देवेभ्यः शकेयम्' (तै० १।१।४१) इति ।**

अग्निहोत्रे हुते प्रातर्हस्तौ सम्मृशते इत्यन्वयः। अनेन प्रागुदयादमावास्यास्तन्त्रोपक्रमपक्षः प्रत्युक्तः। हस्तौ सम्मृशत इति पाण्योरन्योऽन्यसम्मर्शनाद् द्विवचनोपपत्तिः। स्वरितेतत्वाद्वा व्यत्ययेन वात्मनेपदम्। अस्याङ्गस्पर्शरूपत्वादुदकोपस्पर्शनं कर्त्तव्यम्। अत्र देशानुक्तावपि सामान्याद्विहारादुत्तरो देशः प्राप्तः। तथा च धर्मे **'उत्तरत उपचारो विहारः। तथापवर्गः। विपरीतं पित्र्येषु'** (बौ० ध० १।१५।१-३) इति। विहारः अग्नीनामायतनदेशः। उपचारः क्रिया, ऋत्विगादिसञ्चाररूपा क्रियानुष्ठानरूपा च। उत्तरत उपचारो यस्य विहारस्य स तथोक्तः। ऋत्विगादयो विहारादुत्तरतः सञ्चरेयुरनुतिष्ठेयु[१]श्चेति यावत्। तथापवर्गः [२]अत्रापि बहुव्रीहिः, उत्तरतोऽपवर्गो विहार इत्यर्थः। अपवर्गः पर्यवसानं निर्गम इति यावत्। पित्र्येषु कर्मस्विति शेषः। विपरीतमिति क्रियाविशेषणम्। उपचारापवर्गविपरीतं यथा भवति तथानुष्ठेयमित्यर्थः। वैपरीत्यं च दिक्कृतम्। सा चोत्तरा या दक्षिणैव तत्सम्बन्धात्। एवं सामान्यतः [२]प्राप्ते विशेषो द्वैधे दर्शितः **'पाणिसंमर्शन इति। उत्तरेणाहवनीयं तिष्ठन् पाणी संमृशेदिति बौधायनः। उत्तरेण गार्हपत्यमिति शालीकिः'** (बौ० श्रौ० २०।५)।

अत्रेदं विचार्यते-किं मन्त्रात्पूर्वं कर्मानुष्ठेयमुत समकालम्, आहोस्विन् [३]मन्त्रान्तकर्माद्योः सन्निपातः, किंवा [४]किंचिद्विलम्बेनापीति। अत्र यद्यपि मीमांस-

---

१. ग भ— °रनुष्ठेयुः। २ स— आत्रापि।

२. ग— प्राप्तम्। स— प्राप्तोः।

३. ग भ स— कर्मादिमन्त्रान्तयोः।

४. ग भ— किंस्विद्०।

कैरनियतपक्षं पूर्वपक्षीकृत्य मन्त्रान्तैः कर्मादीन् सन्निपातयेदिति सिद्धान्तितं तथाप्येतेषां पक्षाणां नियतविषयत्वमेव न्याय्यम्, न त्वेकतरपक्षपरिशेषः। तथाहि क्वचिन्मन्त्रात्पूर्वभावि कर्मोपलभ्यते, यथा हवनमनुमन्त्रणात्। क्वचित्समकालं यथाधारादिकम्। क्वचिन्मन्त्रान्तकर्मादिसन्निपातः, यथा स्वाहाकारवषट्कारादिषु प्रैषमन्त्रेषु। क्वचित् [1]क्वचिद्विलम्बेनापि, यथा - प्रोक्षणीरासादयेत्यादिषु प्रैषमन्त्रेषु। तत्र पक्षत्रयेऽपि मन्त्रोच्चारणकालात् कर्मानुष्ठानकालस्य ह्रासे वृद्धौ वा न विरोधः। समकालीने तु विशेषशंका कर्मान्ते निवारिता—'**नाप्रक्रान्तं [2]प्रक्रमयेन्न प्रक्रान्तं कर्म तूष्णीं कर्मणाभिपूरयिषेदिति। नाप्रक्रान्तमिति यदवोचाम बर्हिर्लवनः खल्वयं [3]ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु ह[4] कर्म। न कर्मणो हेतोर्मन्त्रोऽभि-[5]निवर्तते*। अथायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु ह[6] कर्म। न कर्मणो हेतोर्मन्त्रोऽ[7]भिनिवर्तते। अथास्यां स्वयं मातृष्णायां दीर्घो मन्त्र आम्नातो भवति। ह्रस्वमु [8]खलु कर्म। न कर्मणो हेतोर्मन्त्रो [9]विरमेत्**' (बौ० श्रौ० २४।७) इति। अप्रक्रान्तम् [10]अपर्याप्तं मन्त्रमल्पकालोच्चारणीयमित्यर्थः, न प्रक्रमयेत् नावर्तयेत्। प्रकान्तं पर्याप्तं कर्म। तूष्णीं कर्मणा तूष्णीं क्रियया नाभिपूरयितुमिच्छेत्। अयमर्थः-यत्र मन्त्रस्याल्पता दैर्घ्यं कर्मणः तत्र तूष्णींभावेन कर्म पूरयितुं नेच्छेत्, यावत्कर्मकालम्। मन्त्रमुच्चार्य ततः परं तूष्णीं न तिष्ठेदित्यर्थः। तत्रैतत्पक्षद्वयस्य

१. इ₁— 'क्वचित्' नास्ति।
२. इ₁ भ— प्रक्रामयेत्।
३. ग— 'ह्रस्वो' नास्ति।
४. ब श्र— 'ह' नास्ति।
५. ब श्र— वर्तेत।
६. ब श्र— 'ह' नास्ति।
७. ब श्र— वर्तेत।
८. ब श्र— 'खलु' नास्ति।
९. ब श्र— विरम्येत्।
१०. ग— अपर्याप्तमन्त्रम्।

*अभिनिवर्तते = नावर्तते— इ₁।

क्रमाद् विवरणम् नापक्रान्तमिति यदवोचामेत्यादि। एवं च सति पक्षद्वयेऽपि [1]कर्मादावेव मन्त्रोपक्रम इति गम्यते।

**नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति। यद्यु वा अपरिस्तीर्णा भवन्त्याहवनीयमेवाग्रे पुरस्तात् परिस्तृणात्यथ दक्षिणतोऽथपश्चादथोत्तरतः। एवमेवान्वाहार्यपचनं परिस्तृणाति। एवं गार्हपत्यम्।**

[2]'**अत्र नक्तं परिस्तीर्णा एव**' इत्येवकारेण नक्तं परिस्तरणे पुनः परिस्तरणं निवारयति। '**उपस्तीर्यः पूर्वश्च**' (तै० १।६।७।८) इत्यादिब्राह्मणगत—'**आहुः**' इति पदस्य प्रातः परिस्तरणद्योतकस्य परिस्तरणसमुच्चयार्थत्वस्याप्यविरोधात्। अभियुक्तास्तूभयत्राप्ययमेव क्रमः—'**पूर्वश्चाग्निरपरश्च**' (तत्रैव) इति वचनात्, आहवनीयमेवेत्यवधारणाच्चेति [3]व्याचक्षते। तत् '**उपवसथ एवाग्नीन् यथोत्पन्नं परिस्तृणीयात्**' (बौ० श्रौ० २०।४) [4]इत्युदाहृततदद्वैधवाक्यविरुद्धम्। अतएवाचार्येण '**यद्यु वा अपरिस्तीर्णा भवन्ति**' इति पक्षान्तरविषयतयाहवनीयस्यैवाग्रे परिस्तरणं नियमितम्। ब्राह्मणप्रतीकस्य प्रातः परिस्तरणं विषयत्वेन वा चशब्द[5]द्वयमनियतद्योतनेन वाप्यविरोधः प्रतिपाद्यः। पुरस्तात् पूर्वस्यां दिशि। '**अथ दक्षिण०**' इत्यादिना प्रादक्षिण्येन परिस्तरणक्रम उक्तः। अत्रापि गृह्योक्तः परिस्तरणविधिरनुसन्धेयः। द्वैधे विशेषः '**अग्नीनां परिस्तरण इति सूत्रं शालीकेः। आख्यातमौपमन्यवस्य। अत्रो ह स्माह बौधायनो गार्हपत्यमेवाग्रे पुरस्तात् परिस्तृणीयादथ दक्षिणतोऽथ पश्चादथोत्तरतः। एवमेवान्वाहार्यपचनं परिस्तृणीयादेवमाहवनीयमिति**' (बौ० श्रौ० २०।५)। अनेन प्राथमिकं क्रमं निर्दिशति। आहवनीयादिक[6] एव क्रम इति

---

१. ग— 'अपि' नास्ति।

२. ग— अथ।

३. इ१— समाचक्षते।

४. इ१ भ— इत्युदाहृतं तद्द्वैध वाक्य०।

५. अत्र '°द्वयस्यानियत०' इति पाठः स्यात्।

६. भ— देक०।

शालीकेः सूत्रमौपमन्यवस्यापीदमेवाख्यातम् । भावप्रधानो निर्देशः । आख्यानमेवाख्यातम् । अन्यद्बौधायनस्य मतमित्यर्थः ।

**अथाग्रेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्वं न्यंचि यज्ञायुधानि संसादयति ।**

तृणानीति एतत्परिभोजनीयदर्भोपलक्षणम् । न्यंचि अधोमुखानि । द्वैधे विशेषः 'पात्राणां सादन इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायन उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु पात्राणि संसादयेदिति । उत्तरतो[1]ऽन्यगारस्य पात्राणि सादयेत् । तेषां यथार्थमाददीतेति राथीतरः' ( बौ० श्रौ० २०।५ ) इति । यथार्थं यथाप्रयोजनम् । द्वन्द्वनियमनाय पात्राणां क्रमं नियमयति ।

**स्फ्यं च कपालानि चाग्निहोत्रहवणीं च शूर्पं* च, कृष्णाजिनं च शम्यां चोलूखलं च मुसलं च दृषदं चोपलां च जुहूं चोपभृतं च स्रुवं च ध्रुवां च प्राशित्रहरणं चेडापात्रं च मेक्षणं च पिष्टोद्वपनीं च प्रणीताप्रणयनं चाज्यस्थालीं च वेदं च दारुपात्रीं च योक्त्रं च वेदपरिवासनं च धृष्टिं चेध्मप्रव्रश्चनं चान्वाहार्यस्थालीं च मदन्तीं च । यानि चान्यानि पात्राणि तान्येव द्वन्द्वं संस्थाप्य ।**

योक्त्रादीनां कल्पपाठाभावपक्षेतु 'अन्यानि' इत्यनेनोपसंग्रहः । तत्सद्भावे उपांशुचरुपक्षे चरुस्थाली तदंग मेक्षणं[2] वृषारवश्चेत्यादीनि संगृह्यन्ते । पुनर्द्वन्द्वग्रहणादस्य परिभाषात्वं द्योतयति । तेन च सर्वत्र सर्वदैव च द्वन्द्वासादनं लभ्यते । कदाचित् पात्रस्यायुग्मत्वे दर्भेण युग्मीकरणं[3]च द्योत्यते । एतस्मिन् काले ब्रह्मादीना-

१. ग— आगारस्य ।
२. भ— वृषारविः ।
३. ग भ स— °कारणम् ।

*शूर्पम् = इषीकमयं शूर्पं तद्भावेऽन्येन कृत्वा सर्वप्रायश्चित्तम्— इ०१ ।

मायतनेषु धर्मोक्तेषु तत्तदासनानि परिकल्पयेत् । तत्तदागमनकालेषु वा । तथा चोक्तम् 'दक्षिणेनाहवनीयं ब्रह्मायतनं [1]तदपरेण यजमानस्य[1] । उत्तरेणाहवनीयं प्रणीतायाः[1] । उत्तरां श्रोणिमुत्तरेण होतुः । उत्कर आग्नीध्रस्य । जघनेन गार्हपत्यं पत्न्याः । तेषु काले काल एव दर्भान्[2]संस्तीर्य । एकैकस्योदकमण्डलुरुपात्तः स्यादाचमनार्थः' ( बौ० ध० १।१।१५।२३-२८ ) इति ।

**ब्रह्माणं दक्षिणत उपवेश्य ।**

आहवनीयादित्युक्तम् । ब्रह्मणो नियमविशेषान् तत्प्रकरणे वक्ष्यति । तदागमनमार्गस्तु धर्मे विकल्पितः 'अग्रेणाहवनीयं ब्रह्मायजमानौ प्रतिपद्येते । जघनेनाहवनीयमित्येक इति' ( बौ० ध० १।१५।२१-२२ ) । अयमेवार्थो द्वैधे दर्शितः 'ब्रह्मण उपवेशन इति । व्यवेत्य दक्षिणेनाहवनीयमुपविशेदिति बौधायनः । अव्यवेत्यैव दक्षिणत उपविशेदिति शालीकिः' ( बौ० श्रौ० २०।५ ) । व्यवेत्य [3]व्यवायं कृत्वा । जघनेनाहवनीयमागमनेऽव्यवाय इत्यर्थः ।

**पृष्ठ्यां स्तृणाति सन्ततां गार्हपत्यादाहवनीयात् 'यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै स्तृणानि सन्तत्यै त्वा यज्ञस्य ( तै० ब्रा० ३।२।४।१ ) स्तृणामि' इति ।**

पृष्ठ्येति । वेदिकरणे तन्मध्यप्रसारित[4]रज्जुनामैतदाश्रयते या वेदिमध्यमेव[4] पृष्ठ्येत्युपचर्यते । वेदिमध्ये तृणास्तरणमेव पृष्ठ्येति केचित् । तत्र स्तृणातीति विधानं कथमुपपद्यत इति चिन्त्यम् । अतएव द्वैधे पृष्ठ्याव्रति सोम एव स्तरणपक्षोऽङ्गीकृतः । तथाहि 'पृष्ठ्यायै स्तरण इति सूत्रं बौधायनस्य । सोम एव पृष्ठ्यां स्तृणीयादिति शालीकिः' ( बौ० श्रौ० २०।५)

---

१-१. बौ० ध०— अपरेण यजमानस्य ।

२. बौ० ध०— संस्तृणाति ।

३. भ— नवेत्यव्यवायम् ।

४-४. इ₂— °रज्जुनामतदाश्रयतया वेदिमध्य एव । ख— रज्जूनामतदाश्रयते या वेदिमध्यमे । १ ग— °रज्जूतामतदाश्रयते ।

**[1]अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे प्रतिच्छिन्नाग्रे 'इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः। आप्यायन्तौ संचरतां हव्यशोधने' पवित्रे ( तै० ब्रा० ३।७।४।११ )।**

बर्हिषः परिभोजनीयात् [2]पृष्ठ्यायां स्तीर्णाद्वादाय पवित्रे कुरुते। तयोर्विशेषणानि प्रादेशमात्रे-इत्यादीनि समे इति परिणाहापेक्षया, दैर्घ्यमानस्य [3]प्रादेशमात्र इत्यनेनैवोक्तत्वात् 'विज्ञस्य पवित्रे' इत्युक्तत्वाद् ग्रन्थिकरणमिति केचित्। अत्रानुक्तत्वात्तदकरणमित्यन्ये। तथा [4]च द्वैधे 'पवित्रयोः करण इति सूत्रं बौधायनस्य। [5]पृष्ठ्यायास्तृणानामित्यौपमन्यवः। येऽन्येऽनुपयुक्ता कुशाः स्युस्तेषामिति शालीकिः' ( बौ० श्रौ० २०।५ )। कर्मान्ते विशेषः 'किं दैवत्ये उ खलु पवित्रे ? किं पूते भवत इति। वैष्णवी वायुपूत इत्येव ब्रूयात् अनखच्छिन्ने स्याताम्' ( बौ० श्रौ० २४।२५ ) इति।

**अथैनेऽद्भिरनुमार्ष्टि 'पवित्रे स्थो वैष्णवी स्थो यज्ञिये स्थो वायुपूते विष्णोर्मनसा पूते स्थो यज्ञस्य पवने स्थः' इति।**

अनुमार्ष्टि मूलादारभ्याग्रावसानं मार्जनं करोति। तच्चाङ्गुष्ठकनिष्ठिकाभ्यां कार्यम्। तथा चाश्वलायनः 'गृहीत्वाङ्गुष्ठकनिष्ठिकाभ्याम्' ( आ० गृ० १।३।३ ) इति।

**अथोत्तरेण गार्हपत्यमुपविश्य कंसं चमसं वा प्रणीताप्रणयनं याचति।**

---

१. ग भ स— 'अथ' नास्ति।

२. ग भ— पृष्ठ्याम्। स— पृष्ठ्यायाः।

३. ग भ स— °साम्यस्य।

४. भ— 'च' नास्ति।

५. इ१— पृष्ठ्यास्तृणाना०। ग भ स— पृष्ठ्यातृणा०।

परिकर्मिणमिति शेषः। वाशब्दाद् गोदोहनादीनां कामनानुबन्धानामप्युपसंग्रहः। अप्रोक्षितानां पात्राणां कर्मानर्हतयेदानीमपि तूष्णीं संस्कृताभिरद्भिः प्रोक्षणमिति केचित्। असंस्कृताभिरित्यन्ये। अप्रोक्षितैरेवेत्यपरे।

**तस्मिंस्तिरः पवित्रमप आनयन्नाह 'ब्रह्मन्नपः प्रणेष्यामि, यजमान वाचं यच्छ' इति।**

उपलक्षणमेवैतत्। अध्वर्युब्रह्मणोरपि वाङ् नियमनं द्रष्टव्यम्। तथाहि **'हविष्कृता वाचं विसृज्य'** (बौ० श्रौ० ३।१२) इत्याग्रयणादिषु दर्शनात्। तन्न्यायेनात्रापि वाङ्नियमनमुन्नेयम्। ब्रह्मत्वप्रकरणे **'स वाचंयमो भवति। प्रणीतासु प्रणीयमानास्वा हविष्कृतः'** (बौ० श्रौ० ३।२४) इति। यथा द्वैधेऽपि **'स वाचंयमो भवति। प्रणीतासु प्रणीयमानास्वा हविष्कृतः। अन्तर्हसन्नेतेषु सम्पातेषु संभाषेतेति**[1] **बौधायनः। विसृष्टवागिति शालीकिः'** (बौ० श्रौ० २०।५)। सोऽध्वर्युः आ हविष्कृतः आह्वानादिति शेषः। **'हविष्कृदेहि'** प्रैषवचनपर्यन्तमिति यावत्। एतेषु सम्पातेष्वन्तर्हसन् संभाषेत। अनेन [2]धर्मोक्तत्रैविद्यवृद्धबहुश्रुतादिसन्निधिं परामृशति। अत्र प्रणीतोदकस्योदगग्रेण पवित्रेणोत्पवनं[3] केचिदिच्छन्ति।

**प्रसूतः समं प्राणैर्धारयमाणो विषिञ्चन् हृत्वोत्तरेणाहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य।**

प्रसूतः अनुज्ञातः। ब्रह्मणेति शेषः। ब्रह्मापि **'देवसवितः प्रणय प्रणय यज्ञं देवता वर्धयैता नाकस्य पृष्ठे सुवर्गे लोके यजमानो स्तु। सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ओम्प्रणय'** (बौ० श्रौ० ३।२४) इत्यनुजानाति। समं प्राणैः प्राणसंचरणदेश[4]संमितं धारयमाणः नियतप्राण इत्यर्थः। अविषिञ्चन् इत्यनेन

१. इ१— संभाषीतेति। भ— संभाषितेति।

२. ग भ— 'धर्मोक्त०' नास्ति।

३. ग— °पवम्।

४. ग भ स— °प्रदेश०।

पूर्णतां द्योतयति । यत्र पूर्णतानियमाभावः तत्राविषिञ्चन्निति न ब्रवीति, यथा '**वत्र्म कुर्वन्नुदङ्ङुद्रास्य**' (बौ० श्रौ० ३।४) इत्यादौ । अत्रैतत्पूर्णपात्रं याचति इति सिद्धवदुवादाच्च। दर्भेषु आसनकाले वा इदानीं वा स्तीर्णेषु । सादयित्वेति । अत्र कर्मान्ते विशेषः '**प्रणीताः प्रणयन् अनयाऽऽपः प्रणयामि-इति पृथिवीं मनसा ध्यायेत् । समान्येतानि कुर्यात् प्रणीता आहवनीयं ब्रह्माणमिध्मावर्हिरिति [1]यज्ञशिर इत्येतदाचक्षते**' (बौ० श्रौ० २४।२५) । प्रणयन् प्रापयन् । अनयेति करणभूतां पृथिवीं मनसा ध्यायेत् । मन्त्रोच्चारणकाल एवेति गम्यते । समानि एकपङ्क्त्यापन्नानि । एतत्समुदितं यज्ञशिर इत्याचक्षत इति समीकरणश्रुतिः ।

## [2]पवित्रमादाय[2] प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य ।

सर्वत्राप्ययं नियमः । प्रत्यङ्मुखो गच्छन् प्रदक्षिणमावर्तेतेति । तथा च धर्मे '[3]**प्राग्गच्छन् दक्षिणमंसमभिपर्यावर्तयेत्**[3] । **प्रत्यङ्मुखः सव्यम्**' (बौ० ध० १।१५।१३-१४) इति । दक्षिणांशस्याभितः पर्यावर्तनादप्रदक्षिणमावृत्तिः, वामांशस्याभितः पर्यावर्तनात् प्रदक्षिणमावृत्तिरिति । तदेतदावृत्तिद्वयं क्रमात् प्रत्यङ्मुखस्य प्रागाद्रवणे, प्राङ्मुखस्य प्रत्यगाद्रवणे नियतम् । उभयत्राप्यावर्तने विहाराभिमुखो भवेदित्यर्थः ।

## आदत्ते दक्षिणेनाग्निहोत्रहवणीं सव्येन शूर्पं 'वेषाय त्वा' (तै० १।१।४।२) इति ।

अयं मन्त्रः शूर्पादाने '**वेषाय त्वेत्याह**' (तै० ब्रा० ३।२।४।३) इति लिङ्गादिति । केचित्तु '**देवस्य त्वा**' (तै० १।१।४।९) इत्यादिना स्रुगादानमिच्छन्ति । तस्य च फलं नानाबीजत्वे स्रुगादानस्य तन्त्रत्वमिति । तदपरे न क्षमन्ते । अमन्त्रत्वे समन्त्रत्वे वा स्रुगादानस्य तन्त्रत्वे विशेषाभावादिति । केचित्तु सावित्रस्यात्रा-

---

१. ब श्र— यज्ञस्यशिरः ।

२-२. ग भ स— 'पवित्रमादाय' नास्ति । ब श्र— पुस्तकयोरयं पाठः कोष्ठके वर्तते ।

३-३. बौ० ध०— प्राङ्मुखश्चेद्दक्षिणमंसमभिपर्यावर्तेत ।

नाम्नानात् 'वेषाय त्वा' इत्येतदेवोभयार्थमिच्छन्ति[1]। आग्रयणे बीजद्वयं देवसुवां हविःषु बहुबीजानि, तत्र तत्र बीजसंख्यानुगुण्येन शूर्पद्वित्वे वा बहुत्वे वा तदानुगुण्येन 'वेषाय वाम्' 'वेषाय वः' इत्यूहस्य शूर्पप्राधान्येनैव दर्शनात् तद्विषय एवायं मन्त्र इत्यवगच्छामः।

**गार्हपत्ये प्रतितपति 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' (तै० १।१।४।३) इति[2]।**

स्पष्टम्।

**अथ जघनेन गार्हपत्यमग्निष्ठमनो भवति। तस्योत्तरां धुरमभिमृशति 'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः' (तै० १।१।४।४) इति।**

अग्निष्ठम् अग्निसमीपे स्थितम्। अनः शकटं[3] तत् प्राप्य तस्योत्तरां धुरमभिमृशति। धुरम् अनडुद्वहनप्रदेशम् युगान्ताग्रम्।

**अनोऽभिमन्त्रयते 'त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानम्। दृँहस्व मा ह्वाः' (तै० १।१।४।५-६) इति।**

स्पष्टम्।

**अथ 'विष्णोः क्रमोऽसि' (तै० १।६।५।१२) इति दक्षिणमक्षपालिं क्रमित्वाभ्यारुह्य।**

---

१. भ— "॰मिच्छन्ति' इत्यस्यानन्तरम् तम् 'वेषाय ह्येनवादत्ते-इति ब्राह्मणेन नपुंसक लिंगश्रवणात् शूर्पादान एव मन्त्रा इति सुबो०। एनदित्यस्योभयमित्यर्थ इति। उभयार्थो मन्त्र इति भावः'।

२. ब श्र— 'इति' इत्यस्यानन्तरम् 'त्रिः'।

३. ग भ स— तम्।

अक्षपालिम् अक्षाग्रम् । क्रमित्वा पदावष्टभ्य, शकटमपसव्यं क्रमयित्वेति गम्यते ।

**प्रउगे शूर्पं निदधाति ।**

[1]प्रउगे शकटस्य पूर्वभागे, कूवर इत्यर्थः ।

**शूर्पे स्रुचं स्रुचि पवित्रे निदधाति ।**

निदधातीत्यनुषज्यते ।

**अथ पुरोडाशीयान् प्रेक्षते 'मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिँसिषम्' (तै० १।१।४।७) इति ।**

पुरोडाशीयाः पुरोडाशार्था व्रीहयो यवा वा । तथा च कर्मान्ते 'अनादिष्टं हविः । आदेशादेवान्यद् व्रीहियवेभ्यो जानीयात्' (बौ० श्रौ० २४।९) व्रीहियवेभ्योऽन्यद्धविरादेशात् [2]निर्देशादेव जानीयात् । अनादेशे तु व्रीहयो यवा वेत्यर्थः ।

**'उरु वाताय' (तै० १।१।४।८) इति तृणं किंशारु वा निरस्यति ।**

किंशारु व्रीहिशूकम्[3] ।

**अथाप उपस्पृश्य ।**

निरसनेऽपि पुनः 'अप उपस्पृश्य' इति विधानं [4]तदभावेऽप्यश्रौतप्रायश्चित्तविधानार्थमित्युक्तम् ।

**दशहोतारं व्याख्याय ।**

---

१. ग भ— ताः प्रउगे । स— ताः प्र प्रउगे ।

२. ग भ— 'निर्देशादेव' नास्ति ।

३. ग भ स— °शूकः ।

४. ग भ — तदभावे तदभावे श्रौत० । स— तदभावे श्रौत० ।

अत्र [1]सग्रहः सस्वाहाकारः, अग्रहोऽस्वाहाकारो वा। दशहोतेति 'चित्तिः स्रुक्०' (तै० आ० ३।१) इत्यनुवाकः। [2]अत्रापि 'वाचस्पते विधे नामन्' (तत्रैव) इत्यादिको ग्रहस्तेन सहितः सग्रहः, तद्रहितोऽग्रहः। तत्र होमार्थे सस्वाहाकारः सग्रहश्च। अहोमार्थे ग्रहस्वाहाकारयोर्विकल्पः। तथा च द्वैधे 'होतॄणां व्याख्यान इति। सग्रहानुते स्वाहाकारानित्येकम्। ऋते ग्रहानन्तस्वाहा[3]कारानित्येकम्। सर्वानित्येकम्। पूर्वः कल्पो बौधायनस्य। उत्तरावुभौ शालीकेरिति:' (बौ० श्रौ० २०।५)। अयं विकल्पः सर्वहोतृसाधारणः। अस्य जपकालो द्वैधे विकल्पितः [4]दशहोतुर्व्याख्यान इति। प्रणीताः ([5]प्रणीय) प्रत्यङ्ङाद्रवन् दशहोतारं व्याचक्षीतेत्याचार्ययोः, मुष्टिमेव ग्रहीष्यन्नित्यौपमन्यवः' (बौ० श्रौ० २०।५)। आचार्ययोः बौधायनशालीक्योः।

## 'हविर्निर्वप्स्यामि' इति यजमानमामन्त्र्य पवित्रवत्यग्निहोत्रहवण्या निर्वपति।

अत्र 'यजमान[6]हविर्निर्वप्स्यामि' इति [7]केचिदिच्छन्ति। ब्रह्मणो व्यावृत्त्यर्थमिति केचित्। अन्ये तु यजमानस्य प्राधान्यादेवाग्निहोत्रवत् तत्प्राप्तेर्यजमानग्रहणं नेच्छन्ति। द्वैधे विशेषः 'निर्वपण इति सूत्रं शालीकेः। अत्रो ह स्माह बौधायनः शकटादेव निर्वपेत्। धुरौ व्यभिमृश्याक्षपालिं क्रामेत् विष्णुस्त्वा क्रमताम् (मा० स० १।९) इति। पुरोडाशीयान् [8]प्रेक्ष्याभिमृशेत्—'यच्छन्तां पञ्च (तत्रैव) इति। त्रिर्यजुषा सकृत्तूष्णीं चतुरवत्तिनाम्। त्रिर्यजुषा द्विस्तूष्णीं पञ्चावत्तिनाम्।

---

१. स— संग्रहः।

२. ग भ स— 'अत्रापि' नास्ति।

३. ब— °नन्तः स्वाहा०। श्र— °नन्ते स्वाहा०।

४. इ१ ग स— दशहोतृ०।

५. पाठोऽयं बौधायनश्रौतसूत्रमनुसृत्य संयोज्यते।

६. इ१ ग स— 'हविः' नास्ति।

७. ग भ स— 'केचिदिच्छन्ति' नास्ति।

८. ग स— प्रोक्ष्या०।

सर्वानेव यजुषेति कात्यः। पंचावत्तस्य [1]प्रक्रमण इति। निर्वपणात् पंचावत्तं [2]प्रक्रमेदिति बौधायनः। अवदानत इति शालीकिः। प्रदानत इत्यौपमन्यवः। चातुष्प्राश्यादित्यौपमन्यवीपुत्रः' (बौ० श्रौ० २०।५-६)। निर्वपणविषय इत्येतत् पूर्वसूत्रं शालीकेर्मतम्। बौधायनस्त्वेवमाह—'यदि शकटादेव निर्वपेत्तत्तु, धुरौ व्यभिमृश्य उत्तरां दक्षिणां च धुरं विविच्य मन्त्रावृत्त्याभिमृश्य, अक्षाग्रम् 'विष्णुस्त्वा क्रमताम्' इति मन्त्रेण क्रमेत्। पूर्ववत् मन्त्रेण पुरोडाशीयान् प्रेक्ष्य 'यच्छन्तां पञ्च' इत्यभिमृशेत्। केचिन्मुष्टिग्रहणेऽप्येतदावर्तयन्ति। त्रिर्यजुषा सावित्रेण। पंचावत्तिनामिति वत्सविदार्ष्टिषेणगणपरिपठितानाम्। द्विस्तूष्णीमिति पञ्चावदानसम्पत्तिः। कात्यस्तु पक्षद्वयेऽपि सर्वानेव मुष्टीन् यजुषैव निर्वपेत्। निर्वापमारभ्य पञ्चावदानधर्म इति बौधायनः अवदानमारभ्येति शालीकिः। आज्यभागमारभ्येत्यौपमन्यवः, इडाया आरभ्येत्यौपमन्यवीपुत्रः'।

**यद्यु वै नाऽनो भवति जघनेन गार्हपत्यं स्फ्यं निदधाति [3]स्फ्योपरि पात्रीम्। पात्र्यां पुरोडाशीयानावपति। अथ पूर्वार्धं पात्र्या अभिमृशति 'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानम्। दृँहस्व मा ह्वाः' (तै० १।१।४।४-६) इति। अथ पुरोडाशीयान् प्रेक्षते 'मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्था मा त्वा हिँसिषम्' (तै० १।१।४।७) इति। 'उरु वाताय' (तै० १।१।४।८) तृणं वा किंशारु वा निरस्यति। अथाप उपस्पृश्य दशहोतारं व्याख्याय 'हविर्निर्वप्स्यामि' इति यजमानमामन्त्र्य पवित्रवत्याग्निहोत्रहवण्या**

---

१. ग स— क्रमण०।

२. ब भ्र— प्रक्रामे०।

३. ग— 'स्फ्योपरि' नास्ति।

**निर्वपति । 'ओं निर्वप' इति यजमानोऽनुजानाति । अथ निर्वपति ।**

अनसोऽभावपक्षे विकल्पः । यद्यपि शकटाभावपक्षे तन्मन्त्रस्य लोपो युक्तस्तथाप्याचार्यवचनप्रामाण्यात् 'धूरसि'—इत्यादिना पात्र्यां विनियोगः । यावदाम्नातस्यैव विनियोगो यथा स्यादिति पुनराम्नातम् । **'निर्वप–इति यजमानोऽनुजानाति'** इति सन्निहित इति शेषः । असंनिहितश्चेद् यजमानस्तत्र विशेषो द्वैधे दर्शितः **'प्रवसतो याजमान इति । स ह स्माह बौधायनः सहयाजमानः खल्वयं यजमानः प्रवसति । स यत्र स्यात्तदेनं [1]ध्यायेत् । स [2]यद्यसंस्थित आगच्छेत् कृतमनुमन्त्र्य कर्मान्तेन प्रकामेदिति । अत्रो ह स्माह शालीकिर्यद्यस्य पुत्रोऽन्तेवासी वालंकर्मणि[3] स्यात्तं तत्र [4]प्रेक्षयेत् । स यदि [5]विसंस्थित आगच्छेत् कृताद्वा प्रकामेन्नैवाद्रियेत । उभौ त्वेव यजमानभागं प्राश्नीयातामिति'** ( बौ० श्रौ० २०।२) । याजमानमन्त्राः प्रवसतो यजमानस्यैव जपार्हाः । तत्र हेतुमाह सहयाजमान इत्यादि । याजमानैः सह वर्तत इति [6]सहयाजमानः । प्रवसति स यजमानो यत्र देशे स्यात्तदा याजमानकाले, [7]एनं यजमानं ध्यायेत्* । अध्वर्युरिति शेषः । स यजमानो यद्यपरिसमाप्ते कर्मणि आगच्छेदागमनात्पूर्वं कृतं कर्मानुमन्त्र्य [8]कर्मशेषेण प्रक्रामेत्,[8] कर्मशेषमनुतिष्ठेदित्यर्थः । शालीकिमते स्वस्य यजमानस्य पुत्रोऽन्तेवासी कर्मणि यदि समर्थः स्यात्तत्र यजमानस्थाने तं प्रेक्षयेत् । स एव यजमानवदनुमन्त्रणादि कुर्यादिति

---

१. ब श्र— 'तदेनम्' इत्यस्यानन्तरम् 'मनसा' । स— तदेवम् ।

२. ब श्र— यदि विसंस्थित० ।

३. ब श्र— कर्मणः ।

४. ब श्र— प्रेष्येत् ।

५. ग— संस्थित० ।

६. ग स— 'सह' नास्ति ।

७. इ१— एतम् । स—एवम् ।

८-८. ग भ— 'कर्मशेषेण प्रक्रामेत्' नास्ति ।

---

*एनं यजमानं ध्यायेत् = अग्ने हविर्निर्वप्स्यामीति उपांशुस्वरेण— इ१ ।

गम्यते। एवं पुत्रेऽन्तेवासिनि वा यजमानस्थाने नियुक्ते सति तस्य तत्कर्माणि। विसंस्थिते अपरिसमाप्ते यदि यजमान आगच्छेत्। [ अत्र पुटमात्रं त्रुटितमस्ति। ]

[1]कृताद्वा प्रक्रामेत्। कृतं कर्म कृतमेव कर्मशेषमनुतिष्ठेद्यजमानः स्वयमेव, पुत्रादिकं नैवाद्रियेत। यजमानभागं तु उभौ यजमानस्तत्पुत्रादिश्च भक्षयतः। उभाभ्यां याजमानकरणादिति।

**अथ निर्वपति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' ( तै० १।१।४।६ ) इति त्रिरेतेन यजुषा। सकृत्तूष्णीम्।**

दक्षिणहस्तेनादाय स्रुग्बिले निधाय दक्षिणेनैव शूर्पे निर्वपति। अत्र '**इति त्रिः सकृत् तूष्णीम्**' इत्येव सिद्धे, '**एतेन यजुषाम्**' इति। एतादृशेन यजुषेत्यर्थकम्। तेन यथा कर्मणस्त्रिरावृत्तिरेवं मन्त्रस्यापीति, वीप्साभावे मन्त्रकर्मणोरुभयोस्त्रिरावृत्तिः सिध्यति।

**एतामेव प्रतिपदं कृत्वा 'अग्नीषोमाभ्याम्' इति पौर्णमास्याम् 'इन्द्राय वैमृधाय' इति च।**

प्रतिपत्स्यन्ते धर्मा अनयेति प्रतिपत् धर्मप्रापक उपदेशः। '**देवस्य त्वा**' इत्येतमेवभागमुपक्रम्य '**जुष्टं निर्वपामि**' इत्युपसंहारं कृत्वा तयो र्मध्ये '**अग्नीषोमाभ्याम्**' इति प्रयोक्तव्यम्। एवम् '**इन्द्राय वैमृधाय**' इति। अत्र '**इन्द्राय वैमृधाय इति च**' इत्यनेन पौर्णमासवैमृधयोः समानतन्त्रत्वं द्योत्यते। भिन्नतन्त्रत्वे ज्ञापकं तूत्तरत्र वक्ष्यामः। अत्र द्वैधम् '**वैमृधस्यानुनिर्वपण इति सूत्रं बौधायनस्य। नानिष्ट्वा प्रथमं सोमेनानुनिर्वपेदिति शालीकिः**' ( बौ० श्रौ० २३।१६ ) इति। सोमयाजिनो सोमयाजिनश्च वैमृध इति बौधायनस्य मतम्। न सोमयाजिन इति शालिकेरित्यर्थः।

---

१. ग भ— कृताद्वा''''''स संवत्सरमिन्द्रम्' [ पृ० १२९ पं० ७ ] नास्ति। इ पुस्तकेऽयं भागः केनापि संयोजित इति प्रतीयते। पृथक्संयोजिते चतुस्त्रिंशत्तमे पुट इत्थं लिखितमस्ति—'हे शोधपत्र पृष्ठमात्र त्रुटित जेथे ते थिल्ले' इति।

**'इन्द्राग्निभ्याम्' इत्यमावास्यायामसन्नयतः । 'इन्द्राय' इति सन्नयतः । 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति ।**

एतामेव प्रतिपदं कृत्वेत्यनुवर्तते । अमावस्यायामयं विशेषः **'अग्नीषोमाभ्याम्'** इत्यस्य स्थाने **'इन्द्राग्निभ्याम्'** इति । स्पष्टमन्यत् । अत्र महेन्द्रयाजित्वाधिकारिविषये कश्चिद्विशेषः कल्पेऽभिहितः **'अथ वै भवति नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति । स योऽन्य एतेभ्यो महेन्द्रं**[1]**यजेत**[2]**स संवत्सरमिन्द्रमिष्ट्वा, अग्नये व्रतपतये* पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । अथ यामावास्यागच्छति तस्यां महेन्द्रं यजते । सोऽत ऊर्ध्वं महेन्द्रयाज्येव भवति । अथ वै भवति संवत्सरमिन्द्रं यजेत**[3] **। वसीयान् भवति ( तै० २।५।४।९-) इति ब्राह्मणम् । अथ वै भवति-संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् । ततोऽधिकामं यजेत (तै० २।५।४।१०-११) इति ब्राह्मणम् । अथ वै भवति । नासोमयाजी सन्नयेत्**[4] **। यदसोमयाजी सन्नयेत्परिमोष**[5] **आत्मन् धत्ते' इति ब्राह्मणम्'** ( बौ० श्रौ० १७।४९-५० )।

---

१. ब— इयक्षेत ।

२. गभपुस्तकयोः 'अत्र पुटमात्रं त्रुटितम्' इत्यस्यानन्तरम् 'स संवत्सरमिन्द्रमिष्ट्वा' इत्यनेन पुनः पाठः प्रारभ्यते । सपुस्तके 'अत्रपुटमात्रंत्रुटितम् अस्ति' इत्यस्यानन्तरम् 'तत् संवत्सरमिन्द्रमिष्ट्वा' इत्यनेन पुनः पाठः प्रारभ्यते । पाठोऽयं लिपिकारेण समयोज्यतेति प्रतीयते ।

३. ब— 'यजेत' इत्स्यानन्तरम् 'संवत्सरं हि व्रतं नाति । स्वैवेनं देवतेज्यमाना भूत्या इन्द्धे' ।

४. ब— 'संनयेत्' इत्यस्यानन्तरम् 'अनागतं वा एतस्य पयो योऽसोमयाजी' ।

५. ब— 'परिमोष' इत्यस्यानन्तरम् 'एव सोऽनृतं करोति । अथो परैव सिच्यते । सोमयाज्येव संनयेत् । पयो वै सोमः पयः सांनाय्यम् । पयसैव पय' ।

---

*अग्नये व्रतपये = यः संवत्सरमिन्द्रं यजति तस्य संवत्सरान्ते व्रातपतीलोपे सति सांनाय्ययागे कृते पुनश्चागामिन्यां पौर्णमास्यां सर्वप्रायश्चितं कृत्वा व्रातपतीं कुर्यात्— इ० ।

द्वैधे च 'नागतश्रीर्महेन्द्रं यजेत। त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः। तेषां महेन्द्रो देवतेति। स योऽन्य एतेभ्यो महेन्द्रं [1]यजेत। स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभतेति बौधायनः[2]। यस्याममावास्यामादित इन्द्रं यष्टुं प्रक्रामेत् संवत्सरे [3]पर्यवसिते तस्यां महेन्द्रं यजेत। सोऽत ऊर्ध्वं महेन्द्रयाज्येव* स्यात्[2]। अत्रोह स्माहौपमन्यवोऽभ्यारूढः खल्वस्य संवत्सरो भवति यस्याममावास्यामादित इन्द्रं यष्टुं प्रक्रामेत् संवत्सरे [4]पर्यवसिते या ततः पूर्वामावास्या स्यात्तस्यां महेन्द्रं यजेत। सोऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति' (बौ० श्रौ० २३।१७)।

अत्र, 'यदि महेन्द्रयाजी भवति' इति यदि शब्दग्रहणादेव महेन्द्रयागविषयेषु विकल्पेषु सूचितेषु पुनः वा शब्दग्रहणस्यैतत्प्रयोजनम्—'इन्द्राय वो जुष्टं प्रोक्षामि' इत्यादि शाखान्तराम्नातमन्त्रबल[5]सूचितैन्द्रपुरोडाशस्य समानन्यायतामाह इन्द्रस्य च पुरोडाशस्य विकल्पो यथा स्यादिति। स्वशाखायां च, 'अग्निवद्वै दारुपात्रम्' (तै० ब्रा० ३।२।३।८) इत्यादिना दारुपात्रदोहनस्य यातयामत्वापादनेन [6]तद्दोहनमपोह्य [7]पुरोडाशसहितत्वेनायातयामत्वापादनेन[6] पुरोडाशं विधाय 'काममेव दारुपात्रेण दुह्यात्' (तै० ब्रा० ३।२।३।९) इति पुरोडाशयोगापादितायातयामत्वमङ्गीकृत्य दारुपात्रदोहोऽभ्यनुज्ञातः।

---

१. ब श्र— इयक्षेत।

२. ब श्र— 'बौधायनः' इत्यस्यानन्तरम् 'अत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभेतेति शालीकिः। संवत्सरमिन्द्रं यजेत। संवत्सरं हि व्रतं नातीति। सूत्रं शालीकेः। अत्रो ह स्माह बौधायनो०'।

३. ब श्र— पर्यवेते।

४. ब श्र— 'स्यात्' इत्यस्यानन्तरम् 'इति'।

५. ग— मन्त्रवस्त्रि०। स— मन्त्रवलि०।

६. भ— तद्दोहन....पादनेन' नास्ति।

७. ग भ— पुरोडाशहितत्वेन।

---

*महेन्द्रयाजी—और्वादीनां सोमयागादूर्ध्वं महेन्द्र एव। अर्वागिन्द्र एव। और्वो गौतमो भारद्वाज एव—इ०।

कथमेवं सिद्धस्य पुरोडाशस्य वैकल्पिकत्वमिति चेत्, वाशब्दप्रयोगसामर्थ्यादित्यवेहि। न हि प्रमाणभूत आचार्यो सति विकल्पे वृथा वाशब्दं प्रयुङ्क्ते। **'पुरोडाशमुखानि वै हवींषि'** ( तै० ब्रा० ३।२।३।८ ) इत्येतत्पुरोडाशाभावे[1] कथमुपपद्यत इति चेत् न, आग्नेयपुरोडाशद्वारापि उपपत्तेः। न[2] चाप्ययं नियमः पुरोडाशमुखान्येव हवींषि-इति, आमिक्षायां[3] तददर्शनात्। तत्सिद्धमेतत् निर्वापे वाशब्दप्रयोगसामर्थ्यादैन्द्रः पुरोडाशो [4]माहेन्द्रो वा[5] विकल्पित इति। तदेतदनुपपन्नम्। न तावन्महेन्द्रशब्दसन्निधौ प्रयुक्तो वाशब्दः शक्नोत्यैन्द्रमपि पुरोडाशं विकल्पयितुम्, नापि माहेन्द्रम्। तथात्वे **'महेन्द्र इति वा यदि महेन्द्रयाजी भवति'** इति सांनाय्यप्रयुक्तो वाशब्दस्तदपि विकल्पयेत् तच्चायुक्तम्। अवदानकाले[6]हवनकाले च पुरोडाशसहित एव सान्नाय्ये सत्यवत्ते हूयमाने कालद्वयेऽपि प्रयुक्तौ वाशब्दौ कथं सान्नाय्यमपहाय पुरोडाशमेव विकल्पयतः। किं च **'जामि वा एतद्यज्ञस्य क्रियते'** इत्युपक्रम्य **'यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति'** ( तै० २।६।६।९ ) इति विधानाद् द्वितीयपुरोडाशस्य पाक्षिकत्वे सत्युपांशुयाजस्यापि पाक्षिकत्वं स्यात्। न च क्वचिदुपांशुयाजस्य पाक्षिकत्वमाचार्येण द्योतितमिति वृथैव निपातसमुदायप्रयोगशीलस्याचार्यस्य वाशब्दप्रयोजनविचारप्रयास इति। एतदेवोक्तमन्यैरपि—**'पुरोडाशविकल्पार्थो वा शब्दो न भवेदिह। नैन्द्रः शाखान्तरेऽप्येष[7] पुरोडाशो विकल्पितः'** इति।

अत्रोपांशुयाजस्याज्यद्रव्यकत्वे यथोक्त एव निर्वापक्रमः। चरुद्रव्यकत्वे त्वाग्नेयनिर्वापानन्तरम् **'एतामेव प्रतिपदं कृत्वा'** इत्यनेन न्यायेन यथोपदेशम् **'अग्नीषोमाभ्याम्'** इत्याद्युक्त्वा **'जुष्टं निर्वपामि'** (तै० १।१।४।९) इति यजुषोपांशु [8]त्रिर्निर्वपेत् सकृत्तूष्णीम्। द्रव्यकालभेदेन देवताभेदा द्वैधे दर्शिताः—**'उपांशुयाजस्य करण इति**

---

१. ग स— °डाशभावे। भ— °डाशभावः।

२. भ— 'न' नास्ति।

३. ग भ स— तद्दर्शनात्।

४. ग स— °दैन्द्रो वा पुरोडाशो०।

५. स— °विकल्पकः।

६. ग भ— अवहननकाले।

७. ग भ— पुरोडाशविकल्पितः।

८. ग भ— निर्वपेत्।

सूत्रं मौद्गल्यस्य । अत्रो ह स्माह बौधायन औषधस्योपांशुयाजं कुर्यादग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामिति । अत्रो ह स्माह शालीकिराज्यस्योपांशुयाजं [1]कुर्यात् पौर्णमास्यां वैष्णवममावास्यायामिति । अत्रो ह स्माहौ[1]पमन्यव औषधस्योपांशुयाजं कुर्यात् सरस्वतः पौर्णमास्यां सरस्वत्या अमावास्यायामिति[2] । उभयत्रैवाज्यस्य वैष्णव इति राथीतरः । अत्रौ ह स्माह कौणपतन्त्रिश्चरुश्च[3] स्याद्वैष्णवश्च स्यात्, स्वयं चैव यजमानः आश्नीयादिति' (बौ० श्रौ० २०।१३) ।

आज्यनिर्वापमप्यौषधनिर्वापान्तरमेव सह प्रोक्षणार्थं केचिदिच्छन्ति । तथा च द्वैधे 'आज्यस्य [4]निर्वपण इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायन औषधस्यान्तं [5]कृत्वाज्यं निर्वपेत् । एवमस्य '[6]हविर्भिः प्रोक्षणं लभत इति' ( बौ० श्रौ० २०।७ ) । औषधस्यान्तं कृत्वेति निर्वापमिति शेषः । आपर्यवसानमौषधस्य निर्वापं कृत्वेत्यर्थः । अयमेवार्थः कल्पसारेऽभिहितः 'प्रोक्षन्त्यवग्राहश एव निर्वपन्त्येद-दंदिहौषधस्यान्ते' ।

**अथ निरुप्तानभिमृशति 'इदं देवानाम्' ( तै० १।१।४।११ ) इति ।**

निरुप्तान् कृतनिर्वापान् शूर्पगतान् ।

**'इदमु नः सह' इति येऽतिशिष्टा भवन्ति ।**

तान् अभिमृशतीति शेषः । पात्रीगतानित्यर्थः । अनोगतान् वा ।

**'स्फात्यै त्वा नारात्यै' (तै० १।१।४।१३) इति ।**

---

१. भ— 'कुर्यात्....स्माहौ' नास्ति ।

२. इ१ ग— 'इति' नास्ति ।

३. इ१— चरुश्चेत् । ग — वरुणश्च । स— वरुश्च ।

४. व श्र— निर्वापण० ।

५. व श्र— गत्वाज्यम् ।

६. व श्र— सहहविर्भिः ।

अस्य मन्त्रस्य विनियोगोऽत्रानुक्तोऽप्यावपनार्थे द्वैधोक्ते कर्मणि नष्टाश्वदग्धरथन्यायेन विनियोग इति गम्यते। तच्चावपनं शूर्पे वा व्रीहिकोष्ठे वा भवतीति। तथा च द्वैधे **'अतिशिष्टानामावपन इति। तान् कोष्ठे वा पल्वे वा वपेदिति बौधायनः। अत्रैवैनानावपेयुरिति शालीकिरिति'** (बौ० श्रौ० २०।६)।

कोष्ठो व्रीह्याश्रयः शकटः। पल्वं निरुप्तहविसश्रयं शूर्पम्। शालीकिमते त्वेनान् व्रीहीनत्रावपेयुः। काष्ठे संग्रहकाले तत्रैवातिशिष्टान् अनेन मन्त्रेणावपेत्, न तु शूर्प इति।

**अथाहवनीयमीक्षते 'सुवरभि विख्येषम्। वैश्वानरं ज्योतिः (तै० १।१।४।१४-१५)। अथ गृहानन्वीक्षते 'दृँहन्तां दुर्या द्यावापृथिव्योः' (तै० १।१।४।१६)।**

गृहान्[1] अग्न्यगारम्।

**अथैनानादायोपोत्तिष्ठति[2]। एति 'उर्वन्तरिक्षमन्विहि' (तै० १।१।४।१७) इति।**

एति गच्छति।

**एत्योत्तरेण गार्हपत्यमनधः[3] सादयति 'अदित्यास्त्वोपस्थे सादयामि' (तै० १।१।४।१८) इति।**

एत्य आगत्य।

---

१. भ— अग्न्यागारम्।

२. ग— °मधः।

३. ब श्र— एति।

**गार्हपत्यमभिमन्त्रयते 'अग्ने हव्यꣳ रक्षस्व' ( तै० १।१।४।१६ ) इति ।**

अत्र द्वैधे विशेषो दर्शितः 'परिदान इति । यथानिरुप्तं परिददीतेति बौधायनः । **अत्रो ह स्माह शालीकिः—अग्ने हव्यं रक्षस्व-इत्येव ब्रूयात्, विष्णो हव्यं रक्षस्व'** (तै० १।१।३।१०) इति पयः । **'विष्णु र्हि पयसां गोप्ता भवत्यग्निरौषधस्येति'** ( बौ० श्रौ० २०।६ ) । पूर्वकल्पे गार्हपत्याभिमन्त्रणे [1]विनियुक्तोऽपि **'अग्ने हव्यं रक्षस्व'** इति मन्त्रः परिदानेऽपि विनियुज्यते । परिदानं नाम निरुप्तस्य रक्षणार्थं देवतासाक्षात्करणम् । तथा च दामोदरः **'परिदानमपि तन्त्रं भवतीत्युपपन्नमन्यभिमन्त्रणवचनात् अभिमन्त्रणमाभिमुख्येनेक्षणमेव'** इति । यथानिरुप्तं परिददीत निर्वापानुगुण्येन तत्तद्देवतायै परिददीत । एवं च **'अग्ने हव्यं रक्षस्व । अग्नीषोमौ हव्यं रक्षेथाम्'** इत्यादिपरिदानमन्त्रोहः **'प्रकृतावपि'** ( आप० प० ) वचनादिह[2] युक्तः । निर्वपणादौ तथाम्नानात् । शालीकिमते त्वन्यदैवतस्याप्यौषधस्याग्निरेव गोप्ता, यथा-इन्द्रदैवतस्य सान्नाय्यस्य विष्णुः । ततोऽत्रापि **'अग्ने हव्यं रक्षस्व'** इत्येव ब्रूयादिति ?

## अत्र विनियोग संग्रहः

**कर्मणे हस्तसम्मर्शो[3] वेषा शूर्पग्रहः स्रुचा ।**
**सह शूर्पस्य संतापः प्रत्युष्टेत्यनसो धुरम्[4] ॥**
**उत्तरां वा स्पृशेत् पात्र्याः पूर्वार्धं वापि धूरिति ।**
**त्वं देवानामनः पक्षे भिन्नो मन्त्रोऽस्य मन्त्रणे ॥**
**मित्रस्येक्षेत तद्वान्यं निरस्येत्तृणमुर्विति ।**
**देवेति निर्वपेदग्नीषोमौ सावित्रयोगतः ॥**

---

१. ग— प्रयुक्तोऽपि । स— प्रयुक्तेऽपि ।

२. ग भ स— °दूहः ।

३. ग— °संमर्शो ।

४. ग भ— धुराम् ।

इदं द्वयेन संस्पर्शौ निरुप्तेतरयोः क्रमात् ।
स्फात्यै निरुप्ततच्छेषयोजनं स्रुवरीक्षते[1] ॥
पूर्वाग्निं गेहमोक्षेत द्रंहतामित्यथ व्रजेत् ।
उर्वित्यदित्या संसाद्य, अग्न इत्यभिमन्त्रणम् ॥
अपराग्नेः सप्तदशमन्त्राः पात्र्यां तु षोडश ॥

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने चतुर्थोध्यायः ।

---

१. ग भ— °निरीक्षते ।

## पञ्चमोऽध्यायः

**अथैतस्यामेव स्रुचि तिरः पवित्रमप आनीयोदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' (तै० १।१।५।१) इति पच्छः।**

एतस्यामेवेति। निर्वापकरणभूतायां सशूकायामेव, न तु शोधितायामित्येवकारार्थ इति केचित्। अन्ये तु कर्मान्ते **'स्थालीभिश्चैव चरुं निर्वपेदिति बौधायनः'** (बौ० श्रौ० २५।८) इति दर्शनात् स्थाल्याः प्रोक्षणनिवृत्त्यर्थमेवकार इत्याहुः। त्रिरुत्पुनाति **'अंगुष्ठोपकनिष्ठकाभ्यां गृहीत्वे'** ति शेषः। यथोक्तम् **'अंगुष्ठोपकनिष्ठिकाभ्यां पवित्रे ते असंहते। गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूयेत'** इति। पच्छः[1] प्रतिपादमुत्पवनात् त्रित्वम्। अथवा प्रतिपादमुत्पवनस्य त्रित्वमिति। पच्छ इत्यनेनैव प्रतिपादमुत्पवनसिद्धेः पुनः त्रिर्ग्रहणानर्थक्यप्रसंगादिति प्रतिपादं त्रित्वमुत्पवनस्य। द्वैधे तु विशेषः **'प्रोक्षणीनामुत्पवन इति सूत्रं बौधायनस्य निगदन्नेवैतामृचं त्रिरुत्पुनुयादिति शालीकिः'** ( बौ० श्रौ० २०।६ )। एतामृचमेव जपन्नतु पच्छो विगृह्येत्यर्थः।

**अथैना उन्महयन्नुपोत्तिष्ठति 'आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये' (तै० १।१।५।२) इति।**

एना[2]इति अपां कर्मत्वं प्रतीयते। उन्महयन्निति ऊर्ध्वं पूजयन्निति। अत्र

---

१. भ— पष्टः, 'पष्टः' इत्यस्यानन्तम् 'प्रतिपादमुत्पवगात्रित्वम्'।

२. भ— 'एना' नास्ति।

केवलानामपामुत्क्षेपणानुपपत्तेः, महयन्नित्यनेन पूजार्थे, न चोत्क्षेपणे तत्पात्रोत्क्षेपणं न हस्तेन सर्वासाम्। कर्मत्वेन श्रवणाद्धस्तेनोत्क्षेपणे [?] तदभावात् स्रुचा सहापामुद्यमनं गम्यते। अथवा, उन्महयन्निति एतन्मन्त्रजपरूपं पूजनं कुर्वन्निति। उपोत्तिष्ठति स्रुगुद्यमनकालसमनन्तरकालमेवोत्तिष्ठति।

**अद्‌भिरेवापः प्रोक्षति 'प्रोक्षिताः स्थ। प्रोक्षिताः स्थ' (तै० १।१।५।३) इति त्रिः।**

अत्र '**प्रोक्षिताः स्थ**' इत्येतावानेव मन्त्र आम्नातः। तस्यात्र वीप्सया विनियोगः क्रियते। तेनावगम्यते मन्त्रकर्मणोरुभयोरपि त्रिरावृत्तिरिति। अन्यथा सकृदेव मन्त्रमुच्चार्य त्रिरिति ब्रूयात्। तथा च '**कर्मैव त्रिः** [1]**सकृदेव मन्त्रः**' इति भवति। एवं च द्वैधोक्तयो बौधायनशालीकिपक्षयोर्विषयो व्यवस्थाप्यते '**स ह स्माह बौधायनस्त्रिरेव मन्त्रं ब्रूयात् त्रिः कर्मावर्त्तयेदिति। सकृदेव मन्त्रं ब्रूयात् त्रिः कर्मावर्त्तयेदिति शालीकिः**' (बौ० श्रौ० २०।७) इति। अन्ये तु एवं विषयनियमे तत्रैव समनन्तरं क्रियमाणोऽतिदेशोऽनर्थकः '**एवं यूपस्य**[1] **परिलेखने**' इत्यादिकः। न ह्यौत्सर्गिको विधिः स्वविषयेऽतिदेशमपेक्षते। अतोऽयमतिदेशोऽनयोर्विध्योः प्रदर्शनार्थं द्योतयत इति मन्वाना वीप्सैव नियमार्थे व्याचक्षते। वीप्सारूपोऽयं मन्त्रः प्रतिप्रोक्षणं त्रिरावर्तनीयः। अन्यथा मन्त्रवीप्सयैव कर्मत्रित्वे सिद्धे पुनस्त्रिग्रहणमनर्थकं स्यात्। किञ्च, इतिकरणेन च स्वरूपेऽवस्थापनमनुकार्यस्य भवति। न चैतादृशस्य व्यवधानमवच्छेदो वा [2]युक्तः। तथा चोक्तम् '**स्वरूपेऽवस्थितिर्येषां शब्दानामितिनेष्यते**[3]**। न तानन्यव्यवहितान् प्रयुञ्जीत विचक्षणः**' इति।

कर्मान्ते तु '**मन्त्रजप एव प्रोक्षणे**' (बौ० श्रौ० २०) इत्युक्तम्। तथापि वीप्सितस्यैव मन्त्रस्य त्रिर्जपः, त्रिग्रहणसामर्थ्यात्। तथाहि '**किं प्रोक्षिता उ खलु**

१-१. **ख**— 'सकृदेव मन्त्रः ... ब्रह्मवादि०' नास्ति।

१. **ग**— विलेखने।

२. **इ१**— युक्तम्।

३. **इ१**— °नोच्यते।

**प्रोक्षिण्यो भवन्तीति ।** विज्ञायते-**ब्रह्मवादिनो वदन्त्यद्भिर्हवींषि प्रौक्षीः, केनाप इति, ब्रह्मणेति'** (तै० २।६।५।१) **'ब्रह्मप्रोक्षिता एव भवन्ति'** ( बौ० श्रौ० २४।२५ ) इति । ब्रह्मेति मन्त्रः । अयं च पक्षः **'अद्भिरेवापः प्रोक्षति'** इत्यनेनैव सूचितः । तथा हि **एवकारस्यान्यनिवृत्तिपरत्वात्, न** [1]**चान्योऽत्र प्रसक्तो निवर्त्यः । प्रसक्तिश्च श्रौत्येव'** इति । आधाने ब्रह्मसामगानन्यायेन[2] मन्त्रप्रोक्षणकल्पो वैकल्पिकः । अद्भिः प्रोक्षणगताभिः ।

## अथ पुरोडाशीयान् प्रोक्षति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादैवतं त्रिः ।

अत्र केचित् द्रव्यैक्येऽपि देवताभेदेन पृथक् शूर्पेषु निर्वापनमङ्गीकुर्वते । तेषां पक्षे प्रतिदैवतं पृथक् सावित्रमनुद्रुत्य प्रोक्षणम् । अन्ये तु पृथक् शूर्पेषु निर्वापस्य दृष्टार्थतया तं पक्षमनादृत्य संभूय निर्वापमिच्छन्ति । तेषां मते प्रकृतौ शूर्पमिति **'वेषाय त्वा'** इति चैकवचनम्, विकृतिषु च **'वेषाय वाम्**। **वेषाय वः'** इति द्विवचनबहुवचने । तास्वेवं च[3] धान्यभेदाभावे तदभाव इत्येवमादिकमुपपन्नम् । अतः सकृदेव मन्त्रः सावित्रः प्रोक्षाम्यन्तः । **'अमुष्मा अमुष्मै'** इति तत् तद्देवतानुगुण्येनोहः समाम्नातः **'अग्नीषोमाभ्याम्'** इत्यस्य स्थाने भवति । न चात्र प्रतिदैवतं **'वो जुष्टं प्रोक्षामि'** इति मन्त्रांशस्यावृत्तिः, [4]यथाम्नातादेव निराकाङ्क्षत्वात् । प्रोक्षणमपि[5] त्रिरेव, न तु प्रतिदैवतं त्रिः प्रोक्षणम् । द्रव्यस्य विभक्तत्वात् मन्त्रांशावृत्तौ तदपि स्यात् । द्वैधे विशेषः **'पुरोडाशीयानां प्रोक्षण इति । अवग्राहशः प्रोक्षयेदिति बौधायनः । देवताः समनुद्रुत्य त्रिरेवेति शालीकिः'** ( बौ० श्रौ० २०।६ ) । ग्रहणं ग्राहः, अवयुत्य

---

१. ग भ स— चान्योऽन्य ।

२. ग स— °गायनन्यायेन ।

३. ग भ स— प्रधान० ।

४. भभ स— यथाम्नातदेव० ।

५. इ१— °मिति ।

ग्राहोऽवग्राहः। अवग्राहशः प्रतिदेवताग्रहणम्। त्रिः प्रोक्षयेदिति बौधायनः। सकृदेव सर्वा देवताः समनुद्रुत्यान्ते त्रिः प्रोक्षयेदिति शालीकिः।

**उत्तानानि पात्राणि कृत्वा प्रोक्षति 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' (तै० १।१।५) इति त्रिः।**

अत्र 'कृत्वा' श्रुत्या समानकर्तृत्वं प्रतीयते। तच्चैकेन हस्तेन प्रोक्षणीं धारयतापरेणोत्तानीकरणं शक्यत इति मुख्यमेव। तद्दृथैवान्तर्गर्भितणिजर्थत्वाभिधानप्रयास इति। अत्रापि प्रतिपात्रं त्रिः प्रोक्षणं मन्त्रगतबहुवचनादेव चरितार्थत्वात्; अतः समुदायस्यैव त्रिः प्रोक्षणमिति। द्वैधे मन्त्रविशेषः **'पात्राणां प्रोक्षण इति सूत्रं शालीकेः'। अत्रो ह स्माह बौधायनः शुन्धध्वं दैव्याय कर्मणे देवयज्यायै'** (बौ० श्रौ० २०।६) इति।

**[1]अथशिष्टाः प्रोक्षणीर्निधाय।**

[2]अग्रेण गार्हपत्यमिति शेषः। तथा च सूत्रम् **'प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय'** (आप० श्रौ० १।१९।३) इति। द्वैधे विशेषः **'अतिशिष्टानां परिशायन इति। [3]एता एव परिशयीरन्निति बौधायनः। सिक्त्वैता अप उपरिष्ठादन्याः संस्कुर्वीतेति शालीकिः'** (बौ० श्रौ० २०।६)।

**कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्य 'अवधूतं रक्षोऽवधूता अरातयः' (तै० १।१।५।६) इति त्रिः।**

उदङ्ङावृत्योर्ध्वग्रीवं कृष्णाजिनमवधूनोतीत्यन्वयः। तच्च सव्येन ग्रीवादेशेऽन्तर्लोमावाग्गृहीत्वा दक्षिणेनावाग्धूननमवधूननम्। तथा च कल्पसारे **'ग्रीवाप्रदेशे**

---

१. ब श्र— अति।

२. ग भ स— अग्रे।

३. ङ१— एनाः।

परिगृह्य सव्यमावृत्य[1] धूतिः [2]स्तरणमशिरोऽन्तम्[2] इति । द्वैधे विशेषः 'कृष्णाजिनस्यावधूनन इति । उपनिष्क्रम्याग्न्यगारादुत्तरे[3]ऽवान्तरदेशे कृष्णाजिनमवधूनुयादिति बौधायनः । [4]उत्तरेवैतां दिशमिति शालीकिः' (बौ० श्रौ० २०।६) ।

**अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति 'अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु' (तै० १।१।५।७) इति ।**

पुरस्तादित्यध्वर्युमपेक्ष्य, कृष्णाजिनैकदेशमपेक्ष्य वा । पुरस्तादारभ्योपस्तृणातीति । आस्तरणदेशश्चोत्तर औत्सर्गिकः, [5]अवधूननविधानात्, सन्निहितश्च [6]सूत्रानुसारात् 'गार्हपत्यादुत्तरत उत्करदेशे वा' ( आप० श्रौ० १।१९।४ ) । द्वैधे विशेषः 'कृष्णाजिनस्यास्तरण इति । स ह स्माह बौधायनो विसृजन्नेतत्कर्म[7] कुर्यात् कृष्णाजिनावधूननादास्तरणात्[8] । एवमुलूखलाध्यूहनादापुरोडाशीयानामावपनात् । एवं मुसलस्याधानादा[9]शूर्पस्योपोहनात् । एवमधिवपनादाप्रस्कन्दनात् । एवं कपालोपधानादा[10]योगाभ्यूहाभ्याम् । एवं [11]प्रस्तारादा स्रुचां सादनात् । एवमभ्यादानादाखननात् । एवमौदुम्बर्याभिहोमात् । एवं यूप आपरिव्ययणा[12]-

---

१. ग भ स— धूः ।

२-२. ग भ— 'स्तरणमशिरोऽन्तम्' नास्ति ।

३. ब श्र— परेऽवान्तरदेशे ।

४. ब श्र— अन्तरे वैताम् । स— उत्तरे वैताम् ।

५. ग भ स— अवधूनने ।

६. इ१ स— सूत्रान्तरानुसारात् ।

७. ग— विसर्जनात्कर्म ।

८. इ१— °धूननाद्यास्तरणात् । ब श्र— धवनादा आस्तरणात् ।

९. इ१— °व्याधानादा० ।

१०. इ१— योगाभ्यूहाभ्याम् । स— योगाभ्युहाभ्याम् ।

११. ग स— प्रस्तर आस्रुचाम् ।

१२. ब श्र— °व्ययणा० ।

दिति। यथोपपादमेवैतानि कर्माणि कुर्यादिति शालीकिः' (बौ० श्रौ० २०।६)। [1]एतानि कृष्णाजिनास्तरणादीनि[1]। यथोपपादं यथासम्भवं कुर्यात्। अविसर्गपक्षो न नियत इत्यर्थः। एतस्मिन्[2] पक्षे दक्षिणहस्तस्य व्यापृतत्वात् सव्येनाविसर्गः। कृष्णाजिनावधूननमारभ्यास्तरणपर्यन्तं तस्य परित्यागः। एवं सर्वत्र योजनीयम्।

**तस्मिन्नुलूखलमध्यूहति 'अधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्तु' (तै० १।१।५।७) इति।**

तस्मिन् कृष्णाजिने। अध्यूहति उपरिकरोति।

**तस्मिन् पुरोडाशीयानावपति 'अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि' (तै० १।१।५।६) इति।**

तस्मिन् उलूखले, सर्वेषां पुरोडाशीयानामावपनं मन्त्रश्च सकृदेव। उलूखलपरिमाणानुगुण्येन पुनः पुनरवहृत्य शूर्पे प्रक्षेपः। द्वैधे विशेषः **'पुरोडाशीयानामावपन इति सूत्रं बौधायनस्य। पञ्चमुष्टीन् पञ्चावत्तिनामावपेदिति शालीकिः'** (बौ० श्रौ० २०।७)। अनेन चतुरवत्तिनां चतुरावपनं सूचितम्। मन्त्रोऽपि यथायोगमावर्त्तनीयः। निर्वापधर्मानुसरणात्।

**मुसलमवदधाति 'अद्रिरसि वानस्पत्यः। स इदं देवेभ्यो हव्यं सुशमि शमिष्व' (तै० १।१।५।६) इति।**

अथ हविष्कृतमाह्वयति **'हविष्कृदेहि हविष्कृदेहि'** इति त्रिः। अत्रापि प्रागुक्तो न्यायः। कर्मान्ते विशेषः **'हविष्कृदेहीति ब्राह्मणस्य वदति। हविष्कृदागहीति राजन्यस्य। हविष्कृदाद्रव वैश्यस्य। हविष्कृदेहीति [3]पर्जन्य एवैष[3] उक्तो भवति। अथाप्युदाहरन्ति हविः संस्कारीमेवैतदाहेति'** (बौ० श्रौ० २४।२५)

---

१-१. ग भ— 'एतानि....दीनि' नास्ति।

२. ग भ स— एतस्मिंश्च।

३-३. ग— पर्जनस्य एष। स— पर्जन्यं तमेषे।

इति । पर्जन्यस्य हविष्कृतत्वं वृष्टिद्वारेण, ओषध्युत्पादकत्वात् । हविः संस्कारिणस्तु[1] मुख्यं हविष्कृतत्वमिति । संस्कारीमिति छान्दसः ।

**अथ दृषदुपले वृषारवेणोच्चैः समाहन्ति 'इषमावदोर्जमावद द्युमद्वदत वयं संघातं जेष्म' (तै० १।१।५।११) इति ।**

वृषारवः पाषाणः । 'उच्चैः समाहन्तवै' ( तै० ब्रा० ३।२।५।९ ) इति संप्रैष-सामर्थ्यात् । न हि स्वकर्तृके कर्मणि सम्प्रेषो युक्तः । अतः प्रैषपक्ष एव दृषदुपलयोरेव समन्त्रकमाहननमिति विवेकः । तथा च कर्मान्ते **दृषदुपले वृषारवेणोच्चैः समाहन्तीति** । ([2]विज्ञायते) **ब्राह्मणम्—उच्चैः समाहन्तवा आह विजित्यै । यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपश्रृण्वन्ति ते सर्वे पराभवन्ति'** (तै० ब्रा० ३।२।५।९) इति । '[2]**द्विर्दृषदि सकृदुपलायाम्**[3] । **नवकृत्वः संपादयति-इति विज्ञायते'** (बौ० श्रौ० २४।२५) । अत्र च पूर्वकल्पे च दृषदुपलाहनन एवोच्चकैः शब्दप्रयोगात् तत्पदसम्प्रैषस्य तद्विषयत्वं[4] द्योत्यते । द्विर्दृषदि सकृदुपलायामिति चाहननत्रित्वं [5]त्रेधा विभक्तं मन्त्रमपेक्षत इति । समन्त्रकत्वमप्यस्यैवान्यथा यज्ञायुध-संख्यापेक्षया मन्त्रावृत्तिमपि ब्रूयात् । न त्वेवमब्रवीत् । तन्मन्यामहे दृषदुपलाहननमेव [6]समन्त्रकं तद्विषय एव सम्प्रैष इति ।

सर्वाहननपक्षे तु दृषदुपलाग्रहणं प्रदर्शनार्थमिति । नवकृत्वः सम्पादयेदिति । द्विर्दृषदि सकृदुपलायामिति विधाय [6]समन्त्रमितियोगादाहननत्रये सकृन्मन्त्र इति क्रमेण त्रिवारं मन्त्रमिच्छन्ति । अन्ये तु द्विर्दृषद्याहनने सकृत्समस्तो मन्त्रः । एवं सकृदुपला-यामपीति षोढा मन्त्रावृत्तिमाहुः । अत्र प्रत्याघातं समस्तमन्त्राश्रयणेन नवावृत्तिः

---

१. इ₁— संस्कारिण्या० । भ— संस्कारिण्यां तु ।

२. पाठोऽयं तैत्तिरीय ब्राह्मणमनुसृत्य संयोज्यते ।

३. ब श्र— द्विर्द्विर्दृषदि सकृत्सकृदुपलायाम् ।

४. भ— 'द्योत्यते' नास्ति ।

५. इ₁— त्रिधा ।

६-६. भ— 'समन्त्रकं....विधाय' नास्ति ।

कुतो [1]नोक्तेति चिन्त्यम्। अन्ये तु मन्त्रभेदमाश्रित्य प्रत्याघातं मन्त्रसमाप्तिरिति मन्त्रत्रयपक्षमंगीकृत्य **'वयं संघातं जेष्म'** इत्यस्य तृतीयमन्त्रशेषतामाहुः। एतस्मिन् पक्षे **'दृषमावद'** इति मन्त्रमुच्चारयन् द्विर्दृषदिसकृदुपलायाम्, एवमुत्तरयोरपि मन्त्रयोरिति नवकृत्वः सम्पादने मन्त्रत्रयस्य सकृत् सकृदुच्चारणमाहुः।

अन्ये तु—**'दृषमावद'** इति सकृन्मन्त्रमुक्त्वा द्विर्दृषदि द्विर्दृषदि एवमेव मन्त्रं पुनरुक्त्वा सकृदुपलायामेव। एवमेवमुत्तरयोरपि मन्त्रयोरिति नवकृत्वः सम्पादनमिच्छन्ति। अस्मिन् पक्षे मन्त्रत्रयस्य प्रत्येकं द्विरावृत्तिः। अपरे तु **'दृषमावद'** इति मन्त्रस्य प्रत्याघातमावृत्त्या द्विर्दृषदि सकृदुपलायामिति त्रिरावृत्तिः। एवमेवोत्तरयोर्मन्त्रयोरपीति मन्त्रत्रयस्यापि प्रत्येकं त्रिरावृत्तिमामाहुः। आहननस्य दृषद्यारम्भः, उपलायां समाप्तिः। द्वितीयतृतीययोर्दृषद्युपलायां वारम्भ.। [2]यत्रारम्भः तत्र वा समाप्तिरिति। सर्वस्मिन्नपि[3] पक्ष उदगपवर्गः प्रागपवर्गो सम्पादनीयः। तथा च-**'दृषदुपलयोर्दक्षिणोत्तरत्वं पश्चिमपूर्वत्वं वा भवति'** इति। शम्यया वाऽऽहननम्। तथा च द्वैधे—**'दृषदुपले वृषारवेणोच्चैः समाहन्तीति सूत्रं बौधायनस्य, शम्यैवेति शालीकिरिति'** (बौ० श्रौ० २०।७)।

तदेतत्सर्वमभिसन्धायोक्तं कल्पसारे—

> **'उच्चैरिति प्रेष उदीरितेऽग्नीत्सर्वे[4] समाहन्ति वृषारवेण।**
> **यज्ञायुधं [5]सध्वनि शम्यया वा तूष्णीं समन्त्रं तु शिले न चान्यत्॥**
> **द्विर्द्विर्दृषद्याहननं सकृत्स्यात्तथोपलायां नवकृत्व [6]दृष्टौ।**
> **केचित्तु मन्त्रं विभजन्ति भेदाद् द्वयोः प्रयुञ्जन्ति च मन्त्रमेकम्॥'** इति

---

१. ग— वोक्तेति।

२. भ— 'यत्रारम्भः' नास्ति।

३. ग भ स— 'अपि' नास्ति।

४. ग भ— सर्वम्।

५. ग— संहन्ति।

६. ग भ— इष्टम्। स—इष्ट।

अत्र सर्वाहननपक्षेऽपि प्रैषाभ्यनुज्ञानात् प्रागुक्तः प्रैषाभावपक्षो नादृतः। दृषदुपलसंस्कारार्थस्याहननस्य पुरोडाशाभावे निवृत्तिः। तथा च भारद्वाजः '**असति द्रव्ये कर्मलोपे यथा चरौ समाहननमाप्येभ्यो निनयनम्**' इति।

**अवहत्य तुषान् कृत्वोत्तरतः शूर्पमुपयच्छति 'वर्षवृद्धमसि' (तै० १।१।५।१२) इति।**

अवघातानन्तरमुद्गततुषान् कृत्वा शूर्पमुत्तरदेशे निदधाति।

**तस्मिन् पुरोडाशीयानुद्वपति 'प्रति त्वा वर्षवृद्धं वेत्तु (तै० १।१।५।१३) इति।**

तस्मिन् शूर्पे। उद्वपति उलूखलमुद्धृत्यावपतीत्यर्थः। द्वैधे विशेषः **शूर्पस्योपोहन इति सूत्रं शालीकेः। अत्रो ह स्माह बौधायनस्तूष्णीं शूर्पमुपोहेत्। समस्तेनैवास्मिन् मन्त्रेण पुरोडाशीयानुद्वपेत्—'वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु'** (बौ० श्रौ० २०।७) इति।

**अथोदङ् पर्यावृत्य परापुनाति 'परापूतं रक्षः परापूता अरातयः' (तै० १।१।५।१४) इति।**

परापुनाति[1] प्रस्फोटयति। शूर्पगतान् तुषान् व्रीह्युत्क्षेपणावक्षेप[2]णाभ्यां तुषानपसारयतीत्यर्थः। द्वैधे विशेषः '**अथोदङ् परापुनातीति[3] सूत्रं बौधायनस्य यां कांचिद् दिशमभिपर्यावृत्य परापुनातीति[3] शालीकिः**' (बौ०श्रौ० २०।७) इति।

**सव्येन तुषानपहत्येमां दिशं निरस्यति 'रक्षसां भागोऽसि' (तै० १।१।५।१५) इति।**

---

१. भ — 'परापुनाति' इत्यस्यानन्तरम् 'शूर्पेण तुषप्रोहणं परापवनमिति रुद्र०'।

२. द१— °क्षेपणोपक्षेप०।

३. ग स — °पुनोतीति।

द्वैधे विशेषः 'तुषाणां निरसन इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायन अतएव यावन्मात्रानुपहृत्य कृष्णाजिनस्य ग्रीवात [1]उद्वपेत् रक्षसां भागोऽसीति । अथोदमुपस्पृशेदिति' ( बौ० श्रौ० २०।७) । अतएव सव्यहस्तादेव । यावन्मात्रान् ग्रहणार्हपरिमाणान् [2]उपहृत्य गृहीत्वा कृष्णाजिनस्य ग्रीवात अधस्तान्निक्षिपेदिति गम्यते । तथा च सूत्रम् 'रक्षसां भागोऽसीत्यधस्तात् कृष्णाजिनस्योपवपति' (आप० श्रौ० १।२०।९) ।

**अथाप [3]उपस्पृश्य-इति ।**

निरसनत्वादेव सामान्यतः सिद्धेऽप्युपस्पर्शने पुनरभिधानं तद्भ्रेषे श्रौतप्रायश्चित्तविधानज्ञापनार्थमित्युक्तम् ।

**विविनक्ति 'वायुर्वो विविनक्तु' (तै० १।१।५।१६) इति ।**

विवेकः तण्डुलव्रीह्योः पृथक्करणम् ।

**पात्र्यां तण्डुलान् प्रस्कन्दयति 'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' (तै० १।१।५।६) ।**

व्रीहिभ्यो विविक्तान् तण्डुलान् दारुपात्र्यामावपति ।

**अवहन्त्र्यै प्रयच्छन्नाह 'त्रिष्फलीकर्त्तवै त्रिष्फलीकृतान् मे प्रब्रूतात्' इति ।**

तण्डुलेभ्यो विविक्तान् व्रीहीन् अवहन्त्र्यै प्रयच्छन्नाह । अवहन्त्री अवहननकर्त्री पत्नी दासी वा । 'दासी पिनष्टि पत्न्यवहन्ति विपरीतामित्येके' इति श्रुतेः ।

---

१. ब अ— उपवपेत् ।

२. इ१— अपहृत्य ।

३. इ१ भ— °स्पृशेत् ।

अनालम्भुकेत्यादिना पत्न्यसन्निधानेऽपरा वा । तथा च कल्पसारे-'पत्नी विदध्यादवघातपेषौ प्रैषे कृते तद्विरहेऽपरा वा'।

**त्रिष्फलीकृतान् प्राहुः "[1]त्रिष्फलीकृताः' इति[1] ।**

फलीकरणं [2]नाम श्वैत्याच्छादकतुषापनयनम् । फलीकरणं त्रिवारम् । फलीकृतान् त्रिःफलीकृताः[3] तान् आहुः । अत्र बहुवचनेन फलीकरणमशक्तिविषये बहुकर्तृकमपि भवतीति दर्शयति ।

**'त्रिष्फलीक्रियमाणानाम् । यो न्यङ्गोऽवशिष्यते । रक्षसां भागधेयम् आपस्तत्प्रवहतादितः' इति तण्डुलप्रक्षालनमन्तर्वेदि निनयत्युत्तरदेशे वा ।**

अत्र प्रक्षालनं दारुपात्र्यां तथैव च निनयनम् । मन्त्रस्य पूर्वपाठो निनयनस्य नित्यतां द्योतयितुम् । [4]तेनास्य तण्डुलप्रक्षालनोदकनिनयनस्य प्रतिपत्तिकर्मतां निवारयति । तेन च केनचित्तदपचारे पुनस्तत्सम्पादनं द्योतयति ।

**एतस्मिन् काले प्रातर्दोहं धेनूर्दोहयत्युदगग्रेण पवित्रेण । नात्रातनक्ति ।**

एतस्मिन् काले इति वचनात् कालान्तरेऽपि दोहप्रसक्तिं दर्शयति । स चाग्निहोत्रानन्तर एव कालः । ब्राह्मणे 'तिर्यक् प्रातः' इति श्रवणाद् न च चायं संगवकालीनोदोहः प्रातःकालीनो भवति । अत एवोक्तम्-[5]अस्मिन् काले इति । अन्यथा-अथ

---

१-१. ब श्र— 'त्रिष्फलीकृता इति' नास्ति ।

२. भ— 'फलीकरणम्' इत्यस्यानन्तरम् 'फलीकरणं नाम कणापकरणार्थस्तण्डुलावघात इति रुद्र०' ।

३. ग भ— 'तान्' नास्ति ।

४. ग भ स— 'तेन च' ।

५. अत्र 'एतस्मिन्' इति समीचीनः पाठः ।

प्रातर्दोहम् इत्येव ब्रूयात्। ततश्चास्य चाग्निहोत्रानन्तरस्य च कालस्य विकल्पः प्रातर्दोहो प्रातर्दोहमिति। दुह्यत इति दोहः, पयः कर्म। धेनूरिति कर्मभूताः। एवं बहुवचनेन पूर्ववत् षडवराः। उदगग्रेण पवित्रेण नात्रातनक्तीति विशेषनिषेधात्, शेषाभ्यनुज्ञा गम्यते। ततश्च सायं दोहवदातञ्चनादन्यत् सर्वमपि कर्मानुष्ठेयम्। प्राप्तेऽप्यातञ्चना दुपरितनेऽपिधाननिधाने निवर्त्तेते। तथा च सूत्रम् **'आतञ्चनापिधाने निधानं च निवर्तते'** ( आप० श्रौ० १।१४।७ ) इति।

**अत्र प्रयोगक्रमः—**

प्रातरग्निहोत्रानन्तरमध्वर्युरुत्तरेणाहवनीयं तिष्ठन् हस्तौ सम्मृशते **'कर्मणे'** इति। उत्पत्तिक्रमेणाहवनीयप्रभृति पुरस्तात् पश्चाच्चो[1]दगग्रैर्दर्भैर्दक्षिणत उत्तरतश्च[1]प्रागग्रैः प्रादक्षिण्येन दक्षिणानुत्तरानुत्तरानधरान् करोति। एवमितरयोः। एतस्मिन् काले दर्भैरासनानि कल्पयति। दक्षिणेनाहवनीयं पूर्वं ब्रह्मणे परं यजमानस्यासने कल्पयति। उत्तरेणाहवनीयं प्रणीतायाः, उत्तरां श्रोणिमुत्तरेण होतुः। [2]उत्करस्य पश्चादाग्नीध्रस्य। जघनेन गार्हपत्यं पत्न्याः, तेषां प्रवेशेऽप्रवेशे वा।

अथाग्रेण गार्हपत्यं दर्भान् संस्तीर्य प्रक्षाल्य पात्राणि द्वन्द्वं न्यंचि सादयति स्फ्यं च कपालानि०। यानि चान्यानि पात्राणि तान्येवमेव [3]द्वन्द्वं सादयति। **'धृष्टद्याः पदे स्यादुपवेष एव सांनाय्यवत्कर्मणि हीति तज्ज्ञाः। वृषारवोऽश्मा स च सादनीयः समाहृतिश्चेदमुनायुधानाम्। द्वितीयग्राहानौ सतृणं तु सार्धं द्वन्द्वत्वसिध्यै समिधायुतं वा'**। एतस्मिन् [4]काले ब्रह्मा स्नानादिचतुष्टयं कृत्वा, इडादि जपित्वा [5]चातुःस्वर्येणाहतं वासः सूत्रं वा द्वितीयमधिकमुपवीयान्तरेण वेद्युत्करौ [6]प्रपद्य, अग्रेणाहवनीयं परीत्य स्वसदनस्य दक्षिणत उदङ्मुखः तिष्ठन् ब्रह्मसदनमुप-

---

१-१. ग स— चोदग्रैर्दक्षिणोत्तरतः।

२. ग स— उत्करपश्चात्।

३. ङ१ — 'द्वन्द्वम्' नास्ति।

४. ग भ— 'काले' नास्ति।

५. ग— चातुर्येणा०।

६. ग भ— प्रपाद्य।

तिष्ठते—'नमो ब्रह्मणे नमो ब्रह्मसदनाय' इति । आसदनादङ्गुष्ठोपकनिष्ठिकाभ्यां तृणं संगृह्य दक्षिणाप्रत्यङ् निरस्यति । तथा चाश्वलायनः 'अंगुष्ठोपकनिष्ठिकाभ्यां होतृसदनात्तृणं प्रत्यग्दक्षिणा निरसेत्' (आ० श्रौ० १।३।३०) इति ।

'अहेदैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः' ( तै० ३।२।४।२६ ) इत्यप उपस्पृश्योपविशति । 'उन्निवत उदुद्वतश्च गेषम्' (तै० ३।२।४।२७ ) इति द्यावापृथिवी समीक्षते । 'पातं मा द्यावापृथिवी अद्याह्नः' ( तै० ३।२।४।२८ ) इत्युपविश्य जपति 'भूर्भुवः सुवः । क इदं ब्रह्मा भविष्यति स इदं ब्रह्मा भविष्यति प्राणः प्रजापतियुक्तोऽहं युज्ये ब्रह्मणार्वेव वाजी सुधुर इव वह्निर्बलीवर्द इव युक्तो हव्यं वक्ष्याम्यहं देवताभ्यो भूः प्रपद्ये भुवः प्रपद्ये वायुं प्रपद्ये ब्रह्म प्रपद्ये क्षत्रं प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं प्रपद्ये नार्त्तां देवतां वाचं प्रपद्य ओं प्रपद्ये' ( बौ० श्रौ० ३।२३ ) इति । एतस्मिन् काले यजमानो ब्रह्माणं वृणीते 'भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे वीतहव्ये पुरोहितं येनायन्नुत्तमं सुवर्देवा अंगिरसो दिवम्' (तत्रैव) इति । वृतो ब्रह्मा जपति 'अहं भूपतिरहं भुवनपतिः । अहं महतो भूतस्य पतिः ॥ देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देवसवितरेतं त्वा वृणीते । बृहस्पतिं दैव्यं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्रियै । गायत्री त्रिष्टुभे । त्रिष्टुब्जगत्यै । जगत्यनुष्टुभे । अनुष्टुप् पङ्क्त्यै । पंक्तिः प्रजापतये ॥ प्रजापतिर्विश्वेदेवेभ्यः । विश्वेदेवा बृहस्पतये । बृहस्पतिर्ब्रह्मणे । ब्रह्मा भूर्भुवः सुवः । बृहस्पतिर्देवानां ब्रह्मा अहमसौ मनुष्याणां बृहस्पते यज्ञं गोपाय' (तै० ब्रा० ३।७।६।१-२) इति । 'अहमसौ' शब्दस्थाने स्वनाम [1]प्रथमान्तं वदेत् ।

एवं वृतो ब्रह्मा वाचयम आस्ते आप्रणीतायाः[2] । अध्वर्युः परिभोजनीयात् [3]पृष्ठ्यां स्तृणाति सन्ततां गार्हपत्यादाहवनीयात् । 'यज्ञस्य सन्तति०' इति । परिभोजनीयात् पवित्रार्थं द्वौ कुशावनन्तगर्भौ दैर्घ्यपरिणाहाभ्यां समावादाय नखेन छित्वाप उपस्पृश्य

---

१. ङ१ स— प्रथमान्तेन ।

२. ग स— प्रणीताभ्याः ।

३. ग स — प्रत्यक् ।

पवित्रे करोति **'इमौ प्राणापानौ०'** अथैनेऽद्भिरनुमार्ष्टि **'पवित्रे स्थो०'** इति । ग्रन्थिं करोति, न वा । यदि करोति विस्रस्य प्रस्तरेऽवगूहनम् । उत्तरेण गार्हपत्यमुपविश्य । अन्येनानीतं प्रणीताप्रणयनं पुरतो निधाय तस्मिन्नुदगग्रं पवित्रं निधायाप[1] आनयन्नाह **'ब्रह्मन्नपः प्रणेष्यामि । यजमान वाचं यच्छ'** (बौ० श्रौ० ३।२३) । ब्रह्माभ्यनुजानाति **'देवसवितः प्रणय यज्ञं देवता वर्धयैता नाकस्य पृष्ठे सुवर्गे लोके यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि'** इत्युपांशूक्त्वा **'ओं प्रणय'** ( तत्रैव ३।२४ ) इत्युच्चैरुक्त्वा वाचंयमो भवति, आतण्डुलप्रस्कन्दनात् । यजमानस्यापि वाग्यमनमाहविष्कृतः । अध्वर्युः प्रणीतामद्भिः पूरयित्वा प्राणैः [2]समं धारयमाण **'अनयापः प्रणयामि'** इति वदन् पृथिवीं मनसा ध्यात्वा विषिञ्चन् हरति । उत्तरेणाहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य पवित्रमादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रवन्नादत्ते दक्षिणेनाग्निहोत्रहवणीं सव्येन शूर्पम् **'वेषाय त्वा'** इति । अवाक् कृत्वा गार्हपत्ये प्रतितपति **'प्रत्युष्टं रक्षः०'** इति । जघनेन गार्हपत्यमनसोऽभावे उदगग्रं स्फ्यं निधाय, स्फ्यस्योपरि दारुपात्रीं तस्यां व्रीहीनोप्य[3], शूर्पेऽग्निहोत्रहवणीं निधाय स्रुग्घस्तः पात्र्याः पूर्वार्धमभिमृशति **'धूरसि०'** इति । व्रीहीन् प्रेक्षते **'मित्रस्य त्वा०'** इति तत्रस्थं शूकं तृणं वा निरस्यत **'उरुवाताय'** इति ।

अपः [उप] स्पृश्य **'चित्तिः स्रुक्०'** इति वदेत् । यजमानमामन्त्रयते **'हविर्निर्वप्स्यामि'** इति । यजमानः **'ॐ निर्वप'** इत्यनुजानाति । प्रोषिते यजमानेऽध्वर्युः पुत्रोऽन्तेवासी वानुजानाति **'ॐ निर्वप'** इति । सोदगग्रपवित्रामग्निहोत्रहवणीं सव्येन गृहीत्वा तस्यां दक्षिणेन व्रीहिमुष्टिमोप्य दक्षिणेनैव तथा शूर्पे निर्वपति **'देवस्य० अग्नये जुष्टं निर्वपामि'** इति त्रिः[4] । प्रत्यावापं मन्त्रावृत्तिः । सकृत् तूष्णीम् । एतत्पर्वद्वयसाधारणम् । पौर्णमास्याम् **'देवस्य० अग्नीषोमाभ्यां जुष्टं निर्वपामि'** । समानतन्त्रपक्षे **'इन्द्राय वैमृधाय जुष्टं निर्वपामि'** इति । **'इन्द्राय जुष्टं निर्वपामि'**

---

१. ग स— 'अप' नास्ति ।

२. ग स— 'समम्' नास्ति ।

३. ग स— नन्वोप्य ।

४. ग भ स — 'त्रिः' नास्ति ।

इति संनयतः। 'महेन्द्राय' इति तद्याजिनः। उपांशुयाजस्य चरुपक्षे पर्वद्वयेऽप्याग्नेयानन्तरं यथादैवतं द्वैधानुसारेण विष्ण्वादिभ्यो[1] निर्वपेत्। यजमानः प्रतिदैवतं हविर्निरुप्यमाणमभिमन्त्रयते 'अग्निं होतारमिह तं हुवे देवान् यज्ञियानिह यान् हवामहे। आ यन्तु देवाः सुमनस्यमाना वि यन्तु हविषो मेऽस्य' इति। तदुदित्वा वाचंयमो यजमान आ पात्र्यां तण्डुलावापात्। अध्वर्युर्निरुप्तानभिमृशति 'इदमुनः सह' इति। पात्रीस्थाननिरुप्तान् व्रीहीन् निरुप्तेष्वावपति 'स्फात्यै त्वा नारात्यै' इति। आहवनीयमीक्षते 'सुवरभि०' इति। गृहानन्वीक्षते 'दृँहन्ताम्०' इति। अथैनानग्निहोत्रहवण्या सहादायोत्थाय[2] गच्छति 'उर्वन्तरिक्षमन्विहि' इति। उत्तरेण [3]गार्हपत्यमुपसादयति 'अदित्यास्त्वो०' इति। उत्तरत उपविश्य गार्हपत्यमभिमन्त्रयते 'अग्ने हव्यं रक्षस्व' इति। अभिमन्त्रणं दृष्टवा जपः। स च चातुःस्वर्येण।

सशूकायामेवाग्नि[4]होत्रहवण्यामुदगग्रे पवित्रे निधाय, अप आनीयोदीचीनाग्राभ्यामुत्तानानामिकाङ्गुष्ठाग्रगृहीताभ्यां पवित्राभ्यां त्रिरुत्पुनाति 'देवो वः सवितोत्पुनातु' इति प्रथमम्, 'अच्छिद्रेण पवित्रेण' इति द्वितीयम्, 'वसोः सूर्यस्य रश्मिभिः' इति तृतीयम्। उत्पवनस्य प्रत्यगारभ्य प्रागपवर्गत्वम्, विशेषस्त्वाज्योत्पवने वक्ष्यते।

प्रोक्षणीरादायोपोत्तिष्ठति 'आपो देवी०' इति। [5]स्रुग्गताभिरेवाद्भिः [6]स्रुग्गताः प्रोक्षति। 'प्रोक्षिताः स्थ प्रोक्षिताः स्थ' इति मन्त्रं त्रिरुक्त्वा त्रिः प्रोक्षणम्। अत्र व्रीहीन् प्रोक्षति, 'देवस्य त्वा०' इत्यनुद्रुत्य 'अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय' इत्यविकारेण पौर्णमास्यां प्रोक्षणम्। अमावस्यायामसंनयतः इन्द्राग्निभ्याम्' इति, संनयतः 'इन्द्राय' इति। 'महेन्द्राय' इति तद्याजिनः। सकृन्मन्त्रेण द्विस्तूष्णीम्। [7]उत्तानानि पात्राणि कृत्वा[7] प्रोक्षति 'शुन्धध्वम्०' सकृन्मत्रेण

---

१. ग भ स— 'विष्ण्वादिभ्यः' इत्यस्यानन्तरम् 'यथादैवतम्'।
२. ग भ स— 'उत्थाय' नास्ति।
३. इ१— गार्हपत्यमनधः।
४. ग भ— °मग्नि०।
५. ग भ स— स्रुगाताभिः।
६. ग भ— स्रुगाताः।
७-७. भ— 'उत्तानानि....कृत्वा' नास्ति।

द्विस्तूष्णीम्। प्रोक्षणीमग्रेण गार्हपत्यं निधायाथैनद् द्वेधा उत्तरतः [1]कृष्णाजिनमूर्ध्वग्रीवमुदङ्गावृत्य त्रिरवधूनोति 'अवधूतम्[1]'। पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति। अनुत्सर्गे विकल्पः। तस्मिन्नुलूखलमध्यूहति 'अधिषवण०' इति। तस्मिन्न् हविरावपति 'अग्नेस्तनू०' इति। मुसलमवदधाति 'अद्रिरसि०' इति। हविष्कृतं पत्नी 'हविष्कृदेहि हविष्कृदेहि' इति त्रिः। 'उच्चैः समाहन्तवै' इत्याग्नीध्रमाह। अनादेशे सर्वत्राग्नीध्रः परिकर्मी वा।

आग्नीध्रः शम्यया 'इषमावदो०' इति द्विर्दृषदि सकृदुपलायां समाहन्ति। त्रिरावृत्तिर्मन्त्रस्य क्रियायाश्च। यत्रारम्भस्तत्र समाप्तिः, तत्र पुनरारम्भः। दृषदुपले पश्चिमपूर्वे दक्षिणोत्तरे वा। दृषदि समारम्भः, उपलायां समाप्तिः। एवं च[2] नवकृत्वः समाहननम्। अध्वर्युः व्रीहीनपगततुषान् कृत्वोलूखलस्योत्तरतः शूर्पं निदधाति 'वर्षवृद्धमसि'। शूर्पे व्रीहीनुद्वपति 'प्रति त्वा वर्ष०' इति। उदङ् पर्यावृत्य परापुनाति 'परापूतम्०' इति। सव्येन तुषानपहृत्य नैर्ऋत्यां निरस्यति 'रक्षसां भागोऽसि' इति। 'रक्षोभ्यः इदम्' अप उपस्पृश्य व्रीहीन् तण्डुलांश्च पृथक्करोति 'वायुर्वो विविनक्तु' इति। [3]पात्र्यां तण्डुलानावपति 'देवो वः' इति। यजमानो यज्ञं योगेन युनक्ति 'कस्त्वा युनक्ति स त्वा युनक्तु' इति। मन्त्रजप एव यज्ञयोगः विहारेक्षणं वा। अध्वर्युरवहन्त्र्यै सतण्डुलान् व्रीहीन् प्रयच्छन्नाह 'त्रिष्फलीकर्त्तवै त्रिष्फलीकृतान्मे प्रब्रूतात्' इति। अवहन्त्री तान् त्रिरवहत्य शुक्लीकृत्याध्वर्यवे [4]प्रयच्छन्त्याह 'त्रिष्फलीकृताः' इति।

अध्वर्युर्विविक्तान्तर्बहिस्त्वक्कान्[5] तान् दारुपात्र्यां प्रक्षिप्य प्रक्षाल्यान्तर्वेदि निनयत्युत्करदेशे वा [6]'त्रिष्फलीक्रिय०' इति[6]। 'रक्षोभ्य इदम्' अपः स्पर्शनम्।

---

१-१. ग भ स— 'कृष्णाजिन....अवधूतम्०' नास्ति।

२. इ₁— 'च' नास्ति।

३. ग भ स— दारुपात्र्याम्।

४. ग भ स— प्रयच्छन्नाह।

५. इ₁— विविक्तान्तं बहिस्त्यक्त्वा।

६-६. इ₁— 'त्रिष्फली इति' नास्ति।

एतस्मिन् काले प्रातर्दोहकर्म[1]। जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति **'मातारिश्वनो०'** इत्यादि । कुम्भ्यामुदग्रं पवित्रं निदधाति **'वसूनां पवित्र०'**। **'सम्पृच्यध्वम्०'** इति संक्षालननिनयनान्तं करोति । ब्रह्मा दोहोपक्रमप्रभृत्यादोहसमाप्तेर्वाचंयमो भवति ।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने पञ्चमोऽध्यायः ।

---

१. ग भ स— प्रातर्दोहः ।

# षष्ठोऽध्यायः

**अथ प्रोक्तेषु [1]त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूनो-त्यूर्ध्वग्रीवमुदङ्गावृत्य 'अवधूतं रक्षोऽवधूता अरातयः[1]' ( तै० १।१।६।१ ) इति ।**

'त्रिष्फलीकृताः' इत्युक्तेषु सत्सु सकृत् कृष्णाजिनमवधूनोति । अयं क्रमः पौर्णमासविषयः । दर्शे तु न, प्रातर्दोहानन्तर्यस्य सिद्धत्वात् । अत्र केचित् 'त्रिष्फलीकृता' इत्युक्त्वानन्तरमेव 'कृष्णाजिनमवधूनोति' इत्युक्ते तण्डुलप्रक्षालनोदकनिनयनमनित्यमित्याहुः । अयमनित्यपक्षः पौर्णमासविषयः । तथैवेति—अनेन सर्वेषु कृष्णाजिनावधूननधर्मेषु प्राप्तेषु पुनः 'ऊर्ध्वग्रीवमुदङ्गावृत्य' इत्यभिधानाद् द्वैधोक्तावरलोमोपस्तरणपक्षानुसरणेना[2]बहिर्लोमावधूननपक्षमपि संगृह्णाति । उदङ्गावृत्येति—अनेन दिगन्तराभमुख्यपक्षं निवारयतीति ग्रहणमनुवादः ।

**अथैनत्पुरस्तात्प्रतीचीन[3]ग्रीवमुत्तरलोमोपस्तृणाति[3] 'आदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु' (तै० १।१।६।२ ) इति ।**

द्वैधे विशेषः कृष्णाजिनस्य पुनरास्तरण इति सूत्रमाचार्ययोः । प्राचीनग्रीवमुत्तरर्क्षमित्यौपमन्यवः' ( बौ० श्रौ० २०।७ ) इति । पुनरास्तरणेऽधिवपनार्थे प्राक्तन एव कृष्णाजिनस्य प्रकार इत्याचार्ययोर्मतम् । औपमन्यवस्य तु मते प्राचीनग्रीवमुत्तरर्क्षम् । ऋक्षं विशसनप्रदेशः । तस्योत्तरत्वं सलोमप्रदेशस्याधरीभाव इत्यर्थः ।

---

१-१. ग स—'त्रिता अरातयः' ।

२. ग— °नुसारेणा० ।

३-३. ग स— '°ग्रीव...तृणाति' नास्ति ।

**तस्मिन्नुदीचीनकुम्बां शम्यां निदधाति 'दिवः स्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्तु' (तै० १।१।६।३) इति ।**

कुम्बा स्थूलप्रदेशः ।

**तस्यां प्राचीं दृषदमध्यूहति 'धिषणासि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु' (तै० १।१।६।४) इति ।**

[1]प्राचीं प्राग्देशव्यवस्थिताम्[1] । अध्यूहति [2]पश्चादभागे यथौन्नत्यं भवति तथो[2]परि स्थापयति ।

**[3]दृषद्युपलामध्यूहति 'धिषणासि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु' (तै० १।१।६।५) ।**

अध्यूहति उपरि स्थापयति[3] ।

**तस्यां पुरोडाशीयानधिवपति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादैवतम् ।**

निगदव्याख्यातमेतत् ।

**[4]अधिवदते[4] 'धान्यमसि धिनुहि देवान् (तै० १।१।६।६) धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञनियम्' इति ।**

---

१-१. ग— 'प्राचीं...स्थिताम्' नास्ति ।

२-२. ग — 'पश्चाद्....तथा' नास्ति । भ— 'पश्चाद्भागे यथौन्नत्यं भवति तत्' ।

३-३. ग भ— 'दृषद्युपला....पयति' नास्ति ।

४-४. ग भ— 'अधिवदते' नास्ति ।

अधिवदते अधिवाप्य जपति ।

**पिंषति 'प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा' (तै० १।१ ६।७-६ ) इति ।**

पिंपति [1]सञ्चूर्णयति। द्वैधे विशेषः **'पेषण इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायनः—प्राणाय त्वा इति प्राचीं प्रोहेत्, अपानाय त्वा इति प्रतीचीम्, व्यानाय त्वा इति तिरश्चीं कर्षेत्'** (बौ० श्रौ० २०।७) इति । उपलामिति शेषः[2] । तिर्यश्चीं, तथा च सूत्रम् **'प्राणाय त्वा इति प्राचीमुपलां प्रोहेत्' अपानाय त्वा इति प्रतीचीम्, व्यानाय त्वा इति मध्यदेशे व्यवधारयति'** ( आप० श्रौ० १।२१।६, भा० श्रौ० १।२३।६ ) इति । एवं समन्त्रकं मुष्टिमात्रस्य [4]स्थूलपिष्टीकरणेन सर्वमपि हविः संस्कृतं भवति ।

**बाहू अन्वेक्षते 'दीर्घामनुप्रसितिमायुषेधाम्' (तै० १।१।६।१० ) इति ।**

सकृदेव मन्त्रः, द्विवचनेन चरितार्थत्वात् । द्वैधे तु **'अथ प्राचीं प्रोहेत् दीर्घा-मनुप्रसितिमायुषेधाम् इति'** (बौ० श्रौ० ३।१८) ।

**कृष्णाजिने [5]पिष्टानि प्रस्कन्दयति[5] 'देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु' (तै० १।१।६।११) इति ।**

[6]द्वैधे च **'कृष्णाजिने पिष्टानि [7]प्रस्कन्दयेत् देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु—इति'** (बौ० श्रौ० ३।१८ ) इति[6] । प्रस्कन्दनमावापः ।

---

१. ग— चूर्णयति ।
२. ग— 'शेषः' इत्यस्यानन्तरम् 'तिरीञ्चीति' ।
३. आप० श्रौ०, भा० श्रौ०— प्रोहति ।
४. ग भ स— 'स्थूल' नास्ति ।
५-५. ग स— 'पिष्टानि प्रस्कन्दयति' नास्ति ।
६-६. ग स— 'द्वैधे च...इति' नास्ति ।
७. ब श्र— प्रस्कन्दयति ।

**हविः पेष्ट्यै प्रयच्छन्नाह 'असंवपन्ती पिंषाणूनि कुरुतात्' इति ।**

पतितानां पिष्टकणानां[1] पुनरावाप[2]मकुर्वन्ती । अणूनि सूक्ष्माणि ।

**पिंषन्ति पुरोडाशीयान् ।**

अत्र बहुवचनेन पत्न्यशक्तौ [3]पेषणस्य बहुकर्तृत्वं[3] द्योतयति । सोऽयं क्रमो धान्यनिर्वापे । अशक्तौ पिष्टनिर्वापे त्ववघातादिमन्त्रजपः । तथा च 'भारद्वाजः[4]' 'पिष्टे पेषणमन्त्रान् जपेत्' इति । लौगाक्षिरपि—

'छिन्ने पिष्टे तथा लूने सांनाय्ये मार्तिके तथा ।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥' इति ।

न केवलं मन्त्रजपमात्रमवघातादिषु तत्तत्साधनेन पिष्टमेव तथा संस्कुर्यात् । 'आहृतं वा यजुषा करोति' इति लिङ्गदर्शनात् ।

**नि चरव्यान् दधाति । यदि चरुं करिष्यन् भवति, प्रागधिवपनाच्चरुपुरोडाशीयान् विभजेरन् ।**

उपांशुयाजपक्षे तस्य चरोर्विकल्पितत्वात् । विकृतिषु चरुनियमस्य तद्विकल्पस्यापि संभवात् । चरव्यान्निदधाति । अधिवपनात् चरुपुरोडाशीयान् विभजेरन्— इति [6]चर्वपेक्षम् ।

---

१. ग भ— °करणानाम् ।

२. ग भ— °वपन० ।

३-३. इ— पेषणबहुकर्तृत्वम् । ग स— बहूनां कर्तृत्वम् ।

४. ग भ स— भरद्वाजः ।

५. ग भ स— 'प्रागधि....विजेरन्' नास्ति ।

६. ग भ स— च सर्वापेक्षम् ।

अत्र प्रयोगः—

तण्डुलप्रक्षालनानन्तरं पौर्णमास्यां कृष्णाजिनावधूननम् । अमावास्यायां दोहनानन्तरमवधूननम् । उपांशुयाजचरुपक्षे[1] तण्डुलप्रक्षालनान्तरं चर्वर्थान् तण्डुलान् विभज्य यत्र निदधाति पौर्णमास्याम् । अमावस्यायां दोहनानन्तरं विभज्य निदधाति । कृष्णाजिनस्योर्ध्वग्रीवमित्यादि पूर्ववत्, 'अदित्याः०' इत्यादि च । कृष्णाजिस्यापरभाग उदीचीन[2]स्थूलप्रदेशां शम्यां निदधाति 'दिवः स्कम्भनि०' इति । तस्यां प्राक्प्रवणां दृषदं निदधाति 'धिषणासि०' इति । दृषद्युपलामध्यूहति 'धिषणासि पार्वे०' इति । दृषदि पुरोडाशार्थं तण्डुलानधिवपति 'देवस्य त्वा०' इत्यनुद्रुत्य 'अग्नये जुष्टमधिवपास्यग्नीषोमाभ्याम्' 'इन्द्राय वैमृधाय' इति पौर्णमास्याम् । अमावास्यायाम् 'अग्नये जुष्टमधिवपामीन्द्राग्निभ्याम्' इत्यसंनयतः, 'इन्द्राय' इति संनयतः, 'महेन्द्राय' इति तद्याजिनः । न्युप्य जपति 'धान्यमसि०' इति । [3]ब्रह्मणो वाग्यमनमधिवपनमारभ्याकपालोपधानात् । अध्वर्युः पिनष्टि । 'प्राणाय त्वा' इति प्राचीमुपलां प्रोहति । 'अपानाय त्वा' इति प्रतीचीम् । 'व्यानाय त्वा' इति मध्ये व्यवधारयति । स्वबाहू अन्वेक्षते 'दीर्घा०' इति । किञ्चित् पिष्ट्वा कृष्णाजिने पिष्टानि प्रस्कन्दयति 'देवो वः०' इति । पिष्टानि प्रयच्छन्नाह 'असंवपन्ती०' इति । पत्नी सूक्ष्मपिष्टानि करोति[4] । अत्र विनियोगसंग्रहः—

देवो व अप उत्पूयापस्ता उन्महयन्स्थितः ।
[5]त्रिः प्रोक्षयेत् प्रोक्षिताः स्थेत्यपो धान्यं तथाग्नये ॥
अग्नीत्यादि यथायोगं शुन्धध्वं पात्रसंहतिम् ।
धुनुयादवधूतेति कृष्णाजिनमथोत्तरे ।
अदित्या इति चास्तीर्याध्युलूखलयोजनम् ॥

---

१. ग— °व्याजपक्षे ।
२. भ— स्थूलदेशाम् ।
३. ग स —ब्रह्म० । भ— ब्रह्मणे ।
४. ग भ स— 'करोति' इत्यस्यानन्तरम् 'षष्ठः' ।
५. ग स— 'त्रः' नास्ति ।

अग्नेस्तत्र हविः क्षेपः, अद्रिमुसलयोजनम् ।
इषमित्यश्मनोर्घातः शूर्पं वर्षत्युदक् क्षिपेत् ॥
प्रति त्वास्मिन् हविः क्षेपो वायुर्वो विविनक्त्विवति ।
विवेकस्तण्डुलव्रीह्योर्देवो च इति तण्डुलान् ॥
पात्र्यां क्षिपेत् सप्तदशमन्त्रा इह निरूपिताः ॥

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः

**अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयति ।**

एतानि आसादितानि । एतानीति–आधानप्रभृतिपात्रवत्कपालानामपि धारणं द्योतयति । प्रक्षालितानीत्यनेनासादनात्प्रागेव प्रक्षालनं गम्यते । जघनेन गार्हपत्यमिति पुरोडाशश्रपणं नियमयति ।

**अष्टौ दक्षिणत एकादशोत्तरतः[1]—इति ।**

तदेतद्द्वयं दर्शपूर्णमासयोर्नियतमेव । वैमृधस्य तन्त्रत्वपक्षे[2]तु तदुत्तरत[2] एकादशकपालान्युपसादयेत् ।

**अथ जघनेन गार्हपत्यमुपविश्य धृष्टिमादत्ते 'धृष्टिरसि ब्रह्म यच्छ' ( तै० १।१।७।१ ) इति ।**

उपवेषाभावे धृष्टिग्रहणम् । तत्सद्भावे तु तत्राप्ययं मन्त्रः । 'धृष्टिर्वा उपवेषः' इति दर्शनात् । द्वैधे विशेषः '**नैकचरो धृष्टेरादानं विद्यते, न बहुष्विति शालीकिः । अत्रो ह स्माह बौधायन आदित एव धृष्टिमाददीत धृष्टिरसि ब्रह्म यच्छ इति**' ( बौ० श्रौ० २०.८ ) । एकश्चरु र्यस्मिन्निति एकचरुः—'**अर्यम्णे चरुं निर्वपेत्**' (तै० २।३।४।१) इत्येवमादिः । बहुचरुः '**अनुमत्यै चरुं राकायै चरुं सिनीवाल्यै चरुं कुह्वै चरुम्**' इत्यादि । उपलक्षणं चैतत् । द्विचरोरपि संभवात् । पुरोडाशसाहि-

---

१. भ ग— °त्तरः ।

२. ग भ स— तदुत्तर० ।

त्ये[1]ऽपि न धृष्टयादानमित्येकः पक्षः। एकचरुपक्षस्य कर्मधारयत्वे चरुविषय एव धृष्ट्यादाननिषेध इत्यन्यः पक्षः । तथा च—पुरोडाशार्थं धृष्ट्यादानं नियतम्। आदित एव धृष्टिमाददीतेति बौधायनः। न तु प्रतिकपालग्रहणं धृष्टिग्रहणावृत्तिरित्येकः पक्षः।

**गार्हपत्यमभिमन्त्रयते 'अपाग्नेऽग्निमामादं जहि' ( तै० १।१।१।२ ) इति 'निष्क्रव्यादं सेध' (तै० १।१।७।३) इति दक्षिणाङ्गारं निरस्यति। अथान्यमावर्तयति 'आ देवयजं वह' ( तै० १।१।७।४ ) इति।**

तदेतत् कर्मान्ते विवृतम् 'अपाग्नेऽग्निमामादं जहीति। [2]को नु खल्वामाद् भवतीति। अपराग्निरेवैष उक्तो भवति। निष्क्रव्यादं सेधेत्यादहनाग्निरेवैष उक्तो भवति। आ देवयजं वहेत्याहवनीय एवैष उक्तो भवति'[2] को नु खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयात्। विज्ञायते-यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः' (तै० २।६।१२।१२) इति (बौ० श्रौ० २४।२६ )। आदहनाग्नि आगत्य। [3]दहन्ति अस्मिन् मृतमित्यादहनाग्निः। अत्र केचिदेतन्मन्त्रत्रयं यथाम्नातमेवेच्छन्ति। अपरे तूत्तरयोरपि मन्त्रयोः 'अग्नेऽग्निम्' इति पदद्वयमनुषज्य पठन्ति—'निरग्नेऽग्निं क्रव्यादं सेध। आग्नेऽग्निं देवयजं वह' इति। दक्षिणाङ्गारनिरसनं गार्हपत्यस्य दक्षिणभागात्। अन्यावर्त्तनमुत्तरभागात्।

**तं दक्षिणेषां कपालानां मध्यमेनाभ्युपदधाति 'ध्रुवमसि पृथिवीं दृँहायुर्दृँह प्रजां दृँहं सजातानस्मै यजमानाय पर्यूह' (तै० १।१।७।६) इति।**

---

१. ग भ— '°प्यसाहित्ये' नास्ति।

२-२. ग— 'को नु....भवति'।

३. भ— हन्ति।

तम् अङ्गारं मध्यमेन कपालेन प्राथमिकत्वेऽप्यस्य भाविप्रतिसन्धानेन मध्यमत्वम्[1]। अभिः अभिव्याप्तौ, अङ्गारं व्याप्योपदधातीत्यर्थः।

**अङ्गारमधिवर्तयति 'निर्दग्धं रक्षो निर्दग्धा अरातयः' (तै० १।१।७।५) इति।**

अधिवर्तयति कपालस्योपर्यङ्गारं निदधातीत्यर्थः।

**अथ पूर्वार्ध्यमुपदधाति 'धर्त्रमस्यन्तरिक्षं दृँह प्राणं दृँहापानं दृँह सजातानस्मै यजमानाय पर्यूँह' (तै० १।१।७।७)।**

पूर्वार्ध्यम् उपहितकपालपूर्वभागसम्बन्धि।

**अथापरार्ध्यमुपदधाति 'धरुणमसि दिवं दृँह चक्षुर्दृँह श्रोत्रं दृँह सजातानस्मै यजमानाय पर्यूहं' (तै० १।१।७।८) इति। अथ दक्षिणार्ध्यमुपदधाति 'धर्मासि दिशो दृँह योनिं दृँह प्रजा दृँह सजातानस्मै यजमानाय पर्यूँह' (तै० १।१।७।९) इति। अथ पूर्वमुपधिमुपदधाति 'चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूँह' (तै० १।१।७।१०) इति।**

उपधिः कोणक्षेत्रम्। [2]पूर्वार्ध्यक्रमेण [3]मध्यमद्वयसम्बन्धिक्षेत्रमित्यर्थः[3]।

**अथापरमेव।**

---

१. भ — °त्वे।

२. इ१ — मध्यमद्वयपूर्वार्ध्य०।

३-३. भ— 'मध्यम....मित्यर्थः' नास्ति।

अपरमुपधि मध्यमद्वयापरार्ध्यसम्बन्धिक्षेत्र[1]मित्यर्थः । सम्बन्धिकपाल एवोपधिशब्दप्रयोगः ।

**द्वे उत्तरतः संस्पृष्टे उपदधाति 'चितः स्थ' प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह' (तै० १।१।७।१०) इति ।**

एवमेवेत्यनुषज्यते । मध्यपूर्वार्ध्यक्रमेणेत्यर्थः । 'चितः स्थ०' इत्यस्य मन्त्रस्याद्यन्तयोः पाठात् पृथक् मन्त्रवत् कपालचतुष्टयातिरिक्तेषु कपालेषु प्रतिकपालं मन्त्रावृत्तिं द्योतयति ।

**अथैतान्यङ्गारैरभिवासयति 'भृगूणामङ्गिरसां तपसा तप्यध्वम्' (तै० १।१।७।११) इति ।**

एतानि उपहितानि कपालानि अङ्गारैः परितो वासयति दार्ढ्याय सम्यक्पुरोडाशश्रपणाय च[2] । एवमस्य दृष्टार्थतया, प्राक्तनयोरङ्गारावर्तनाधिवर्तनयोः दृष्टार्थतया न प्रतिकपालमावृत्तिः ।

**अथैतानि योगेन युनक्ति 'यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू युङ्क्ताम्' इति ।**

[3]युज्यतेऽनेनेति योगो मन्त्रः[3], तेन [4]युनक्ति मन्त्रं जपतीत्यर्थः । 'युङ्क्ताम्' इति शाखान्तरीयः पाठः ।

**एवमेवोत्तराणि कपालान्युपदधाति ।**

---

१. भ— °सर्वाधिक्षेत्रम् ।

२. ग भ — 'च' नास्ति ।

३-३. ग— 'युज्यते....मन्त्रः' नास्ति ।

४. भ— युक्त० ।

अत्रातिदेशो धृष्ट्यादानादिक इति केचित् । अन्ये त्वङ्गारनिरसनादिक इति । अपरे त्वङ्गारावर्तनादिक इति ।

**अभीन्धते कपालानि । उपेन्धते चरुस्थालीम् अध्यस्यन्ति श्रपणानि । तपन्ति पिष्टसंयवनीया आपः—इति ।**

बहुवचनेन [1]कर्त्रनियमं द्योतयति । श्रप्यन्ते हवींष्येभिरिति श्रपणानि काष्ठानि । अध्यस्यन्ति अग्नौ प्रक्षिपन्ति । तैः कपालानि अभीन्धते उपरिष्टाद्दीपयन्ति । उपेन्धते चरुस्थालीमिति । उपांशुयाजचरुपक्षे द्वैधोक्तक्रमेणाग्नेयकपालोपधानानन्तरं स्थाल्यधिश्रयणात् । एतेनैव क्रमेण चरुद्रव्यकेषु चरुमुखेषु पुरोडाशमुखेष्वपि द्रष्टव्यम् ।

**पिष्टसंयवनीयाः**[2]—पिष्टसंग्रहार्थाः । आपः लौकिकीर्मदन्तीयाः, न तु प्रणीतागता, **'प्रणीताभ्यः स्रुवेणोपहत्य'** इति वचनात् । अन्ते पूर्णपात्रनिनयनग्रहणाच्च । तदेतत्सर्वं द्वैधे स्पष्टमुक्तम् **'नैकचरौ धृष्टेरादानं विद्यते, न बहुष्विति शालीकिः । अत्रो ह [3]स्माह बौधायन आदित एव धृष्टिमाददीत—धृष्टिरसि ब्रह्म यच्छ'**—इति । गार्हपत्यमभिमन्त्रयते-अपाग्नेऽग्निमामादं जहि—इति । निष्क्रव्यादं सेध-इति दक्षिणाङ्गारं निरस्येत् । अथान्यान् कल्पयेत्—आ देवयजं वह इति । तेषु चरुस्थालीमधिश्रयेत्—ध्रुवासि पृथिवीं दृंहायुर्दृंह प्रजां दृंह सजातानस्मै यजमानाय पर्यूह—इति । अथैनां प्रदक्षिणमङ्गारैः परिचिनुयात्—निर्दग्धं रक्षो निर्दग्धा अरातयः इति । स एवमेव सर्वाश्चरुस्थालीरधिश्रयेदिति । चरुमुखेष्विति[4] । **स ह स्माह बौधायन [5]आदित एव धृष्टिमा[5]ददीत । [6]मुखादेव**

---

१. ग भ— कर्तृनियमम् । स— कर्नियमम् ।

२. ङ— °संवपनीयाः ।

३. भ— **'स्माह'** नास्ति ।

४. ग स— **'इति'** नास्ति ।

५-५. ग भ स— **'आदित एव धृष्टिम्'** नास्ति ।

६. ब श्र— मुख्यादेव ।

भक्षान् सादयेदिति । अत्रो ह स्माह शालीकिः कपालसंयोगे[1] खलु धृष्टेरादानं भवति । स कपालान्येवोपधास्यन् धृष्टिमाददीत । पुरोडाशादेव भक्षान् सादयेदिति ।

'कपालानामुपधान इति' सूत्रमाचार्ययोः अत्रो ह स्माहौपमन्यवो यथाम्नायं खल्वस्यैवं कपालान्युपहितानि भवन्ति । य एवैषोऽङ्गाराधिवर्तनो मन्त्रस्तं प्रथमं [2]कपालोपधानानां कुर्यादथ तूष्णीमङ्गारमधिवर्तयेदिति । 'एककपाले[3] द्विकपाल इति' । स ह स्माह बौधायनो यदि चैककपालो यदि च द्विकपालः सर्वैरेनं कपालमन्त्रैरुपदध्यादिति । अत्रो ह स्माह शालीकिर्यथाधिकरणमेव कपालन्युपदध्यात् । न तु योगाभ्यूहौ गमयेत् तपनमन्त्रं [4]चात्र ब्रूयात् 'भृगूणामङ्गिरसां तपसा तप्यस्व तप्येथां तप्यध्वम्' इति ।

'कपालानां योग इति' सूत्रमाचार्ययोः । अत्रो ह स्माहौपमन्यव एतैरेवास्यैतानि मन्त्रैर्युक्तानि यैरुपहितानि भवन्ति । अथेतरो विमोचनमन्त्र एव स्यादिति । 'मदन्तीनामधिश्रयण इति । तिरः पवित्रमप आनीयाधिश्रयेदिति बौधायनः । यथोपपादमिति शालीकिः' (बौ० श्रौ० २०।८) । एनामिति । चरुस्थालीमङ्गारैः परिचिनुयात् परितः पूरयेत् । 'स एवमेवेति' चरुबहुत्वेऽपि एवमेव क्रमेण । सर्वाश्चरुस्थालीरधिश्रयेत् अंगारैः परिचिनुयान्न्चेत्यर्थः चरुमुखेषु चरुपूर्वकेषु । आददीत धृष्टिमिति शेषः । [5]मुखादेव धृष्टेर्न त्वौपचारिकादुपवेषात् भक्षान् सादयेत् । [6]बह्वङ्गारासादनं मुख्यधृष्टिसंपाद्यमेव, न भक्षशब्दोऽङ्गारवचनः । अग्नेर्भक्षरूपत्वात् । शालीकिमते तु कपालसंयोगे खलु कपालसम्बन्ध एव तु समिद्रूपादुपवेषादित्यर्थः । शालीकिमते तु कपालसंयोगे खलु कपालसम्बन्ध एव धृष्टेरासादनं भवति । अत एव कपालन्युपधास्यन् धृष्टिमाददीति । न तु चर्वर्थम् ।

---

१. ब श्र— संयोजने ।

२. ग स— कपालोपधानम् ।

३. ग भ इ१ स— °कपालो० ।

४. ब श्र— वात्र ।

५. इ१ — मुख्यादेव ।

६. ग— चर्वङ्गारा० ।

पुरोडाशादेव भक्षान्सादयेत्[1]। पुराडाशादेवाङ्गारानुद्वासयेत् न तु चरुस्थाल्या इत्यर्थः।

यथाम्नायम् आम्नायमनतिक्रम्यास्य पुरोडाशस्य। एवमुक्तेन क्रमेण। अङ्गाराधिवर्तनो मन्त्रः **'निर्दग्धं रक्षः'** इत्यादिकः। तं कपालोपधानानां प्रथमं कुर्यात्। उपधीयन्त इत्युपधानानि कपालानि, तेषां प्रथममनेन मन्त्रेण कुर्यात्। अन्येषु तूष्णीमङ्गारानधिवर्तयेत्। एककपाले द्विकपाले च विशेषमाह। यदि चेति। सर्वैः **'ध्रुवमसि'** (तै० १।१।७।६-१०) इत्यादिभिः पञ्चभिर्मन्त्रैरेककपालमुपदध्यात्। एवं द्विकपालेऽपि।

शालीकिमते तु अधिक्रियते इत्यधिकरणं मन्त्रः तमनतिक्रम्य कपालान्युपसादयेत्। एककपाले [2]द्विकपाले च[2] प्राथमिकद्वितीयमन्त्रानतिक्रमेण यथाक्रममुपसादयेत् न त्वेकत्र सर्वमन्त्र प्रयोग इत्यर्थः। न तु योगाभ्यूहौ गमयेत्। योगो मन्त्रान्तरसम्बन्धः। अभ्यूहस्तपनमन्त्रः। तं न प्रापयेत्। पक्षान्तरमाह तपनमन्त्रं वेत्यादि। औपमन्यवस्तु योगमन्त्रापगममाह एतैरेवेति। एतानि कपालानि यैर्मन्त्रैरुपहितानि भवन्ति तैरेव मन्त्रैर्युक्तानि भवन्ति, न तु योगमन्त्रः। **'यानि धर्मे०'** इत्यादिकः शाखान्तर्यः। स्वशाखीयविमोचनमन्त्रस्त्वङ्गीकृत इत्याह **'अथेतरः'** इति। स्यादेवेत्यन्वयः। सर्वपुरोडाशकपालानि न्यग्भूतान्येव[3], **'त्रैधातवीये[4]ऽस्यामुत्तानेषु कपालेष्वधिश्रयति'** इति विशेषविधानात्।

**अत्र प्रयोगक्रमः—**

अध्वर्युः कपालानि प्रक्षाल्य गार्हपत्यस्य पश्चाद्विभज्य सादयति। अष्टौ दक्षिणतः, एकादश उत्तरतः। तत उत्तरत एकादश एकादश पौर्णमास्याम् अमावास्यायामष्टौ दक्षिणतः, एकादशोत्तरतः इति। स्वयमपि तत्रोपविश्य धृष्टिमादत्ते **'धृष्टिरसि०'** इति। अमावास्यायामुपवेषः। गार्हपत्यमभिमन्त्रयते **'अपाग्ने०'** इति।

---

१. ङ१— उत्सादयेत्।

२-२. ग— 'द्विकपाले च' नास्ति।

३. ग स— 'भूतान्येव' इत्यस्यानन्तरम् 'पुरोडाशकपालानि भवन्ति'।

४. स— °वीज्ये°।

गार्हपत्यादङ्गारं दक्षिणतो निरस्यति **'निष्क्रव्यादं सेध'** इति। अप [ उप ] स्पृश्य गार्हपत्यस्य पश्चाद्दक्षिणतोऽन्यमङ्गारमावर्तयति **'आदेव०'**। तस्मिन् दक्षिणेषां कपालानां मध्यमुपदधाति **'ध्रुव०'**। तस्मिन्नङ्गारमधिवर्तयति **'निर्दग्धम्०'** इति। मध्यमस्य पुरस्तादुपदधाति **'धर्त्र०'** इति। मध्यमस्य पश्चात् **'धरुण०'** इति। मध्यमस्य दक्षिणत[1] उपदधाति[2] **'धर्मासि०'** इति। दक्षिणस्य पुरस्तादुपदधाति[2] **'चितः स्थ०'** इति। दक्षिणस्य पश्चादुपदधाति[2] **'चित्त स्थ०'** इति। मध्यमस्योत्तरत उपदधाति[2] **'चितः स्थः०'** इति। उत्तरस्य पुरस्तादु[3]पदधाति **'चितः स्थ०'** इति[3]।

कपालेषु धृष्ट्याङ्गारानध्यूहति **'भृगूणां०'** इति। अध्वर्युर्यजमानश्च कपालानि स्पृष्ट्वा जपतः **'यानि धर्मे० युङ्क्ताम्'** इति। एवमेवोत्तरत अग्नीषोमीयस्यैकादशकपालानि स्पृष्ट्वा जपति। आग्नेयवदष्टावुपधायोत्तरस्य पश्चादुपदधाति, मध्यमस्योत्तरत उपदधाति, उत्तरस्य पुरस्तादुपदधाति। एवं वैमृधस्यैकादशकपालान्युपदधातीति पौर्णमास्याम्। अमावास्यायां त्वाग्नेयमष्टाकपालमुपधायैन्द्राग्नस्यैकादश कपालान्युपदधात्यसन्नयतः। सन्नयतस्त्वाग्नेयमुपधायैन्द्रमेकादशकपालमुपदधाति। माहेन्द्रं तद्याजिनः। **'आदेव०'** इत्यारभ्यायोगजपात् प्रतिपुरोडाशं समानम्। उपहितान्यङ्गारैरभीन्धते। गार्हपत्ये प्रक्षालितां पिष्ट्वोद्वपनीमधिश्रयति। मदन्त्यां सपवित्रायां लौकिकीरप आनीयाधिश्रयति।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने सप्तमोऽध्यायः।

---

१. ग भ स— दक्षिण०।

२. इ१— 'उपदधाति' नास्ति।

३-३. ग भ— 'उपदधाति....इति' नास्ति।

अष्टमोऽध्यायः

**अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरः पवित्रं पात्र्यां कृष्णाजिनात् पिष्टानि संवपति 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं सं वपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति। यथादैवतम्।**

उपविश्येति [1]प्रह्वादीनां [2]मध्य [3]एकस्य। वचनाभावे तेषामर्थ[4]प्राप्त्यभावे चोपवेशस्य नियमं द्योतयितुं [5]तथा चोक्तम्—**'आसीन ऊर्ध्वः प्रह्वो वा नियमो [6]यत्र नेदृशः। तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता'** इति। वाचंयमः आवाग्विसर्जनविधानात्। वक्ष्यति हि—**'अविदद्दन्त श्रपयत इति वाचं विसृजते'** ( बौ० श्रौ० २४।२६ ) इति। उदगग्रं पवित्रमन्तर्धाय तच्च सव्येन पवित्रं गृहीत्वा दक्षिणेन संवपेत् तप्तायां पात्र्याम्। कृष्णाजिनादिति नियमार्थम्। तथा च कर्मान्ते **'कुतो न खलु पिष्टानि संवपेत्? कृष्णाजिनादित्येव ब्रूयात्। संवपन् पिष्टानि वाचं यच्छति। तामविदद्दन्तः [7]श्रपयतेत्येव विसृजेत्'** (बौ० श्रौ० २४।२६)। संवपतीति भर्जनार्थं वपतीत्यर्थः। अत्र निर्वापावापसंवापशब्दाः समानार्था अपि नियतविषयाः। तथा च [8]भाष्ये **'बीजसंवापे[9] वपिः पठितश्छेदनेऽपि वर्तते। यथा केशान् वपति'** इति।

---

१. ग भ स— प्रह्वत्वादीनाम्।
२. ग स— 'मध्ये' नास्ति।
३. स— एकवचनाभावे।
४. ग भ स— °मर्थे।
५. भ— यथा।
६. ग— अत्र।
७. ब श्र— श्रपयत इत्येव।
८. व्या० म० (६।१।६, पृ० ३११)—वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते-केशान् वपतीति।
९. इ१— °सन्ताने।

**अथ परिकर्मिणमाह 'आहराप आनय' इति ।**

अथेति । न संवापमात्रानन्तर्यं प्रैषस्य, अपि तु सम्यक् श्रवणानन्तर्यमन्यथा तदसम्भवात् । तथा च कर्मान्ते **'यो विदग्धः स नैर्ऋतो यो शृतः स रौद्रो य शृतः स सदेव इति । साधु शृतं** [1]**श्रपयतेत्येतदेवमुक्तं भवति'** (बौ० श्रौ० २४।२६) । न चाय पर्यग्निकरणानन्तरीयश्रपणमात्र[2]विषयः, भर्जनविषयोऽपि द्रष्टव्यः । अन्यथा पुरोडाशस्यान्तः पाकानुपपत्तेः । तथा चोक्तम् **'येन येन यद्धविः संसिध्येत्'** ( बौ० श्रौ० २४।२६ ) इत्यादि । परिकर्मी आग्नीध्रादन्यः, तदभावे स एव वा । यथाप्रैषं तदनुष्ठानमाह—

**आहरति प्रैषकारः प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं वान्तर्धाय । एवं मदन्तीभ्यः । ता उभयीरानीयमानाः प्रति मन्त्रयते 'समापो अद्भिरग्मत समोषधयो रसेन सं रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वम्' (तै० १।१।८।२) इति ।**

उपहत्य अवयुत्यादाय । उपयम्य वेदमुपा[3]धारीकृत्य हस्तस्यैव मुख्याधारत्वात्[4] । [5]पाणिं वान्तर्धाय । वेदेनेत्यनुषज्यते । पात्रपाण्योर्मध्ये वेदमासञ्जयतीत्यर्थः । एवं मदन्तीभ्यः । आहरतीत्यनुषङ्गः । ता उभयीरिति । [6]ता इत्येतावतैव पर्याप्ते पुनः 'उभयीः' इति वचनमासेचनकाले द्विरूपत्वस्मरणार्थम् । प्रतिमन्त्रणं नाम [7]प्रतीपं स्थित्वा मन्त्रणम् । द्वैधे विशेषः '[8]**संवपन इति सूत्रं शालीकेः । अत्रो ह स्माह**

---

१. ब श्र— श्रपयतीत्येवेदमुक्तम् ।

२. ग स— °नन्तरश्रपण० । भ— °नन्तरीयश्रपणमन्त्र० ।

३. ग भ स— मुपधानी० ।

४. ग— °धारम् । स— धारत् ।

५. स— वाणिम् ।

६. भ— 'ताः' नास्ति ।

७. इ१— समीपम् ।

८. ब श्र— संयवन० ।

बौधायनः प्रणीताभ्यः स्रुवेणोपहत्याप आनयेत्। एवं मदन्तीभ्यस्ता उभयी-रानीयमानाः प्रति मन्त्रयते[1]—समापो अद्भिरग्मत समोषधयो रसेन सं रेवती-र्जगतीभिर्मधुमतीभिः सृज्यध्वम् इति' ( बौ० श्रौ० २०।८ )। संवपनमुदकपिष्टयोः संयोजनम्, तथा च सूत्रम् 'प्रणीताभिः संयौति' ( आप० श्रौ० १।२५।३ )। इति प्रणीतोदकमासिच्य तथैव मदन्त्युदकमासेचयेत्[2]। प्रत्यासेचनं मन्त्रणं प्रतिमन्त्रण-मित्यर्थः।

**अथानु परिप्लावयति 'अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वम्' (तै० १।१।८।३) इति।**

मदन्तीभिरिति शेषः। तथा च सूत्रम् 'तप्ताभिरद्भिरनुपरिप्लाव्य' ( आप० श्रौ० १।२४।५ )। तप्ता आपो मदन्तीरिति याज्ञिकप्रसिद्धिः। अनु अनन्तरमेव परितः प्लावनं परिप्लावनम्। निरवशेषेणोदकपिष्टसंयोजनमित्यर्थः।

**संयौति 'जनयत्यै त्वा संयौमि' (तै० १।१।८।४) इति।**

[3]संयमनं हस्तमर्दनेन सम्यक् मिश्रीकृत्य सम्पिण्डनम्।

**संयुत्य व्यूह्याभिमृशति 'अग्नये त्वाग्नीषोमाभ्याम्' (तै० १।१।८।५) अमुष्मा अमुष्मै' इति यथादैवतम्।**

संयुत्य संपिण्ड्य व्यूह्य विभज्य देवतासंख्यानुगुण्येनेत्यर्थः। द्वैधे विशेषः 'व्यभिमर्श इति। स ह स्माह बौधायनो व्यभिमृशेदेवैकहविः। एवं नाना बीजानीति। अथो ह स्माह शालीकिः संसर्गात्खलु व्यभिमर्शो जायते। नासंसृ-ज्यमानानि हवींषि [4]व्यभिमृशेत् नैकहविः। को हि नानाबीजानां व्यभिमर्श

---

१. ब श्र— मन्त्रयेत।

२. ग स— सिचयेत्।

३. अत्र 'संयवनम्' इति समीचीनः पाठः प्रतीयते।

४. इ, ग भ स— 'व्यभिमृशेत्' नास्ति।

इति' ( बौ० श्रौ० २०।८ ) । व्यभिमृशेत् विभज्याभिमृशेत् । एकहविः एकद्रव्यकं हविः । तस्य देवताभेदापेक्षया विभज्याभिमर्शः । अथवा, एकहविरिति एकमेव हविः पुरोडाशरूपं [1]वैश्वानरेष्ट्यादौ । तत्र व्यभिमर्शो देवतापेक्षया नियमार्थः । नाना बीजसंयोगाभावान्न व्यभिमर्शः । एवमेकपुरोडाशेऽपीति ।

**पिण्डं करोति 'मखस्य शिरोऽसि' (तै० १।१।८।७) इति ।**

प्रतिपिण्डं मन्त्रावृत्तिः ।

**तं दक्षिणेषां कपालानां प्रत्यूह्याङ्गारांस्तेष्वधिपृणक्ति 'घर्मोऽसि विश्वायुः' (तै० १।१।८।८) इति ।**

तमाग्नेयं पुरोडाशं [2]निरस्ताङ्गारेषु कपालेषु स्थापयति ।

**प्रथयति 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्' ( तै० १।१।८।९) इति ।**

प्रथयति विस्तारयति ।

**तं तन्वन्तं कूर्मप्रकारं करोति । 'सर्वाणि कपालान्यभिप्रथयति' (तै० २।६।३।६) इति ब्राह्मणम् ।**

तन्वन्तं विस्तार्यमाणम्, अथ वा तनुरन्तो यस्य स तन्वन्तः । कूर्मप्रकारं कूर्मव्यावर्त्तकधर्मयोगिनम् । तथा चोक्तम् 'सामान्यस्य भेदको विशेषः[3] प्रकारः' (का० ५।३।२३) इति । ब्राह्मणग्रहणं संहितापारक्षुद्रयोरैकार्थ्यख्यापनार्थम् । तच्च विकल्पनिवृत्यर्थम् । अयमर्थः—संहितायाम् 'उरुप्रथस्व' (तै० १।१।८।९) इति प्रथनमात्र[4]-

---

१. ग स— वैश्वानरेत्यादौ ।
२. ग स— निरंगारेषु ।
३. का—विशेषो भेदकः ।
४. ग— °मन्यत्र० ।

मुक्तम् । तस्येयत्ता पारक्षुद्रे ख्याप्यते । संहितामध्यपतितस्य ब्राह्मणस्य पारक्षुद्रसंज्ञा याज्ञिकप्रसिद्धा । एवमनयोरैकार्थ्यख्यापनेन सर्वकपालाभिप्रथनस्य वैकल्पिकत्वं निवारयति । तथा च सूत्रम् **'पुरोडाशं प्रथयन् सर्वाणि कपालानि प्रथयति'** (आप० श्रौ० १।२५।३) इति ।

**अथ तिरः पवित्रमाज्यस्थाल्यमाज्यं निर्वपति 'महीनां पयोऽस्योषधीनां रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि' ( तै० १।१।१०।११ ) देवयज्यायै इति ।**

द्वैधे विशेषः **'आज्यस्य निर्वपण' इति सूत्रं शालीकेः । आख्यातं बौधायनस्य । अत्रो ह स्माहौपमन्यवः सर्वाण्येव हवींषि परिनिष्ठाप्याज्यं निर्वपेदिति'** ( बौ० श्रौ० २०।८ )। अत्र ब्राह्मणद्वयम्—**'पुरोडाशमधिश्रित्याज्यं निर्वपेत्'** इति, **'सर्वाण्येव हवींषि परिनिष्ठाप्याज्यं[1] निर्वपेत्'** इति च । अत्रैकत्वबहुत्वयोर्विहितत्वं पक्षद्वयं शालीक्याचार्ययोरौपमन्यवस्य च । **'पत्नीं संनह्याज्येनोदेहि'** इति प्रैषाद् ब्राह्मणे च पत्नीसन्नहने योक्त्रग्रन्थिकरणानन्तरम् **'महीनां०'** इति निर्वापमन्त्राम्नानात्, मन्त्रपाठक्रमे च पत्न्यञ्जलावुदपात्रनिनयनमन्त्रानन्तरम् **'महीनां०'** इत्याज्यनिर्वापमन्त्राम्नानात्, [2]भाविप्रैषमन्त्रेषु[3]ब्राह्मणमन्त्राधिगतकालस्यापि वैकल्पिकत्वमित्येके । आचार्याभिप्रायस्तु प्रैषस्य तावदविरोधः, निरुप्ताज्यानयनमात्राभिधानात्, ब्राह्मणस्य च मन्त्रक्रमानुविधायित्वात् । तदपि विवक्षयैवाविवक्षितत्वम् । मन्त्रक्रमविवक्षा च स्पष्टैव पत्नीसंयाजानन्तरमाम्नानात् । ततः प्रागुदाहृतब्राह्मणद्वयानुसारेण पक्षद्वयं युक्तमिति । तत्राप्युपांशुयाजस्याज्यद्रव्यकत्वपक्षे त्वाग्नेयपुरोडाशाभिप्रथनानन्तरम् **'देवताक्रमेण पुरोडाशमधिश्रित्य'** इति वचनाच्च तत्रैवाज्यनिर्वापः । तस्य च चरुद्रव्यकत्वे विकृतिषु चौपमन्यवीयः पक्षः ।

---

१. इ₁— °निष्टयाज्यम् ।

२. इ₁ भ— 'भावि' नास्ति ।

३. इ₁— 'मन्त्रेषु' नास्ति ।

अत्र केचित् **'पुरोडाशमधिश्रित्याज्यं निर्वपति'** इति श्रवणादाज्यनिर्वापस्य पुरोडाशसंस्कारत्वमपि मन्यमानाः प्रतिपुरोडाशमाज्यनिर्वापमिच्छन्ति । **'प्रत्यश्व-प्रतिग्रहं तदिष्ट्यावृत्तिः'** इति । नैतत् सारम् । आज्यस्य प्रधानहत्री[1]रूपत्वात्, सर्वार्थत्वाच्चरुसंस्कारत्वाच्च । ग्रहणमन्त्रस्य सकृत् संस्कारादेव चरितार्थत्वादिति ।

**अथोत्तरतो भस्ममिश्रानङ्गारान्निरुह्य तेष्वधिश्रयति ।**

सारस्वतपाठे व्यत्ययप्राचुर्याच्च गार्हपत्याद्उत्तरतः । अत्र गार्हपत्यक्षेत्रादङ्गा-राणामबहिर्भावः । यदि बहिर्भावः स्यात् प्रत्यूह्याङ्गारानिति ब्रूयात्, न त्वेवमब्रवीत् । ततः सर्वत्रायं नियमः । यत्र पुनरङ्गारप्रत्यूहनविधानमस्ति[2] तदभावेऽप्यर्थप्राप्तिश्च बहिर्भावस्य । यत्र [3]तन्नास्ति तत्रायतनक्षेत्रादबहिर्भाव इति । अधिश्रयति । आज्यमि-त्यनुषज्यते ।

**एवमेवोत्तरं पुरोडाशमधिश्रयति ।**

उपलक्षणं चैतत् । वैमृधस्य समानतन्त्रत्वपक्षे तस्य च विकृतिष्वन्येषामपि । एवमेवेत्यतिदेशः । एतदेवज्ञापकं वैमृधभिन्नतन्त्रत्वपक्षस्य । एवमुत्तरत्राप्युत्तरपुरो-डाशमधिकृत्य यानि विधीयन्ते त्वग्ग्रहणश्रवणादीनि, तत्रैकत्वस्य विवक्षितत्वे वैमृधस्य भिन्नतन्त्रत्वज्ञापकम् । अविवक्षितत्वे तु समानतन्त्रस्येति ।

**अथ शृतमथ दधि ।**

शृतं तदुत्तरभागे दधि द्रव्याविरोधेन ।

**अथ पात्र्यामप आनीय दक्षिणस्य पुरोडाशस्य त्वचं ग्राहयति 'त्वचं गृह्णीष्व त्वचं गृह्णीष्व' ( तै० १।१।८।१० ) इति त्रिः ।**

---

१. इ१— प्रधानम् ।

२. ग भ स — नास्ति ।

३. ग स— नास्ति भ— नास्ति । तत्प्राप्तिः ।

पिष्टोद्वपन्यां मदन्तीरानीय ताभिर्हस्तसङ्गताभिः [1]परितो मार्जनेन श्लक्ष्णीकरणेन त्वचं ग्राहयति । तदुक्तम्—'**अथाप आनीय परिमार्ष्टि । मांस एव तत्त्वचं दधाति**' (तै० ब्रा० ३।२।८।४) इति ।

**अथोत्तरस्य ।**

त्वचं ग्राहयतीति शेषः । प्राक्तन एव मन्त्रः ।

**अथ पर्यग्निकरोति 'अन्तरितं रक्षोऽन्तरिता अरातयः' (तै० १।१।८।११) इति त्रिः ।**

[2]अत्र सकृन्मन्त्रः । त्रिः पर्यग्निकरणमपि तेनैव समन्त्रमित्यस्मदाचार्याभिप्रायः । न त्वचार्यान्तरवत् सकृन्मन्त्रेण द्विस्तूष्णीमिति । तदेतत् '**नाप्रकान्तं प्रक्रमयेत्**' (बौ० श्रौ० २४।७) इत्यनेन सङ्गृहीतम् । पर्यग्निकरणं नाम ज्वलतोल्मुकेन परितः प्रदक्षिणमावर्त्तनम् । तथा चाश्वलायनः '**ज्वलता परिहरेत्**' ( आ० श्रौ० ३।७ ) इति । तदेतत् पर्यग्निकरणं सर्वहविषां तन्त्रम् । '**सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वा**' (आप० श्रौ० १।२५।८) इति सूत्रोक्तेः । अत्र केचिदाहुः—पर्यग्निकरणं पुरोडाशविषयमेव । तथा च ब्राह्मणम् '**अन्तरितं रक्षोऽन्तरिता अरातय इत्याह रक्षसामन्तर्हित्यै । [3]पुरोडाशं वाधिश्रितं रक्षांस्यजिघांसन्**' (तै० ब्रा० ३।२।८।५-६)  इति । अत्र पुरोडाशसम्बन्ध एव श्रूयते । अतस्तद्विषयमिति । तदेतदसारम् । आज्यस्यापि तदभावप्रसङ्गात् । तथा च प्रकृतिवत् क्रियमाणायां विकृतौ '**आज्यं निरूप्याधिश्रित्य पर्यग्नि कृत्वा**' ( बौ० श्रौ० २५।२१ ) इति वचनानुपपत्तिः । हन्त तर्ह्युत एव प्रकृतौ तन्निवर्तत इति चेत्[4] । सत्यम् । तथा च कर्मान्ते पर्यग्निकरणा-

---

१. इ₁— परिमार्जनेन ।

२. ग स— अयम् ।

३. इ₁— पुरोडाशवाधिश्रितम् । व श— तै० ब्रा० पुरोडाशं वा अधिश्रितम् । भ— पुरोडाशमधिश्रितम् ।

४. ग भ— 'चेत्' नास्ति ।

ध्यानमसमञ्जसं स्यात् प्रज्ञातमन्येषां [1]हविषां पर्यग्निकरणम्। किंस्विद्‌व्राक्ष इति। [2]यदेवादो वसतीवरीः परिहरति तद्व्राक्ष इति' ( बौ० श्रौ० २४।९ )। पर्यग्निकरणं सर्वहविषामभ्युपगतम्। अतएव भरद्वाजः पर्यग्निकरणकाले दध्युपदधाति' इति।

**अथ दक्षिणं पुरोडाशं श्रपयति 'देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधिनाकेऽग्निस्ते तनुवं माऽति धाक्' (तै० १।१।८।१२-१३) इति।**

उत्तरत्र 'अविदहन्तः श्रपय' इति दर्शनात्, दर्भैरभिज्वलनमित्यभियुक्ताः।

**गार्हपत्यमभिमन्त्रयते 'अग्ने हव्यं रक्षस्व' (तै० १।१।८।१३) इति। एवमेवोत्तरं पुरोडाशं श्रपयति।**

एवमेवेत्यनेन श्रपणाभिमन्त्रणयोः प्रतिपुरोडाशमावृत्तिः। चरुषु तु गोपालः 'पर्यग्नि रक्षस्व च वाग्विसर्गः' इति।

**अथ दक्षिणं पुरोडाशं भस्मनाभिवास्य वेदेनाभिवासयति 'सं ब्रह्मणा पृच्यस्व सं ब्रह्मणा पृच्यस्व' (तै० १।१।८।१४) इति त्रिः।**

धृष्टया भस्मनाभिवासनममन्त्रकं वेदेन तु साङ्गारभस्माभिवासनमदाहाय। तथा च सूत्रम् 'वेदेन[3] पुरोडाशे साङ्गारं भस्माध्यूहति' ( आप० श्रौ० १।२५।१२ ) इति। कर्मान्ते तु मन्त्रार्थो विवृतः 'सं ब्रह्मणा पृच्यस्वेति। विज्ञायते वाग्वै ब्रह्म वाचैवैनमेतत्सम्पृणक्ति' ( बौ० श्रौ० २४।२६ ) इति।

---

१. ग ख भ— 'हविषाम्' नास्ति।

२. भ— यदेवात्वो०।

३. ग भ— पुरोडाशानाम्। ख— पुरोडाशाम्।

**अथोत्तरम् ।**

पुरोडाशमिति शेषः । प्रागुक्त एव क्रमः ।

**'अविदहन्तः श्रपय' इति वाचं विसृजते ।**

श्रपणस्याग्नीध्रकर्तृकत्वनियमे बहुवचनमविवक्षितम् । अनियमे तु विवक्षितम् । वाग्विसर्गस्तादृशः संकल्पः । तद्व्यापारस्येतः प्रागभ्युपलम्भात् । कर्मानुपयुक्ताम्लेच्छाभिभाषणाभ्यनुज्ञातमिति । '[1]**बर्हिषि न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एषोऽपशब्दः**'[2] ( मा० धा० पृ० ९४ ) इति श्रवणात् । सूत्रे च '**यदि प्रमत्तो वाचं व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत्**' (आप० श्रौ० ३।१८।७) इति ।

**अत्रैतत्[3] पात्रीसंक्षालनं गार्हपत्यादङ्गारेणाभितप्य हृत्वान्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयति 'एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा' (तै० १।१।८।१५-१७) इति ।**

पात्र्याः पिष्टोद्वपन्या संक्षालनमुदकम्, अथवा पात्र्यां यद्धस्तसंक्षालनं[3] तत्पात्रीसंक्षालनमित्युभयथापि [4]गात्रपात्रसंक्षालनद्वयमपि गृहीतम् । तथा च सूत्रम् '**अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य**' (आप० श्रौ० १।२५।१४) इति । तदेतत्संक्षालनोदकद्वयं पिष्टोद्वपन्यां स्थितमङ्गारेण गृहीत्वा तेन तापयति । तथा च ब्राह्मणम् '**उल्मुकेनाभि गृह्णाति शृतत्वाय**' (तै० ब्रा० ३।२।८।१२) इति । गार्हपत्यादिति । अपादानत्वेऽपि न गार्हपत्यादङ्गारस्य बहिर्भावः । पुनः प्रत्यूह्येत्यभिधानात् । आज्याधिश्रयणाङ्गारवदन्तर्वेदि निनयनस्य हरणानन्तर्यकत्वेऽपि हृत्वेत्यभिधानं निरवशेषहरणार्थम् ।

---

१. **मा० धा०**— तस्माद् ब्राह्मणेन ।

२. **इ, मा० धा०**— °यदपशब्दः । **ग स**— परशब्दः ।

३-३. **भ**— 'तत् पात्री....संक्षालनम्' नास्ति ।

४. **ग भ स**— 'गात्र' नास्ति ।

तिसृषु लेखासु प्रतीचीनं निनयतीत्यन्वयः। प्रतीचीनं प्रत्यगपवर्गम्। अनेन लेखानां प्रागपवर्गत्वं द्योतयति। औत्सर्गिकस्य तथात्वस्य निनयनमात्रेऽपवादात्। कर्मान्ते तु निनयनादनन्तरमङ्गाराभिताप उक्तः। तस्मिन् पक्षेऽङ्गारस्य [१]गार्हपत्यक्षेत्राद् बहिर्भावात् प्रत्यूहनविधानाभावाच्चापवृक्ते [२]कर्मणि लौकिकत्वं [३]शामित्रादिवत्। [४]तद्यथा '**क्व उ खलु हविः [५]प्रत्तं श्रप्यत इति। यद्देवैतदाप्येभ्यो निनयति एकताय स्वाहा, द्विताय स्वाहा त्रिताय स्वाहा**' इति। को नु खल्वेकतः को द्वितः कस्त्रित इति। **पिता पितामहः प्रपितामह इत्येके। पृथिव्यन्तरिक्षं द्यौरित्येके अग्निरादित्यो वैद्युत इत्येके। अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्नित्यन्ये**[६]। **त[७] एत[७] ऋषय एतन्नामधेया बभूवुरित्येके। ते देवा आप्त्येष्वसृजतेति**[८]। [९]**आप्त्या नाम देवा**[९] **भवन्ति**' (बौ० श्रौ० २४।२६) सर्वत्र हविः श्रपणानन्तरं प्रत्तं भवति। प्रत्तं हविः क्व श्रप्यत इति प्रश्नः। उत्तरम्—यद्देवैतदाप्येभ्यो निनयतीति। एतत् प्रक्षालनोदकरूपं हविः। यदाप्येभ्यो निनयति तदा प्रदानानन्तरं श्रपणम्, अन्यदा देवतान्तरेभ्यो निनयनकाले तपनान्तरं प्रदानं निनयनमित्यर्थः। त एव देवताविकल्पाः प्रतिपाद्यन्ते '**को नु खल्वेकतः**' इत्यादिना। प्रत्तश्रपणपक्षे प्रतिनिनयनं श्रपणम्।

द्वेधे निनयस्थाने[१०] विशेषो दर्शितः '[११]**आप्यस्य निनयन** इति। **जघनेन**

---

१. इ₁— गार्हपत्यस्य क्षेत्राद्०।

२. इ₁ भ— °वृत्त।

३. इ₁— शामित्रवत्।

४. इ₁ भ— 'तद्यथा' नास्ति।

५. ब श्र— पृक्तम्।

६. ब श्र— त्येके। इ₁— °त्ये।

७-७. ब श्र— 'त एत' नास्ति। भ— एतत्।

८. ब श्र— °मृजतेति।

९-९. ब श्र— आप्यनामधेयाः।

१०. इ₁— स्थान०।

११. ब भ श्र— आप्यनिनयन०।

**गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनः। अग्रेणातिहाय [1]नेति शालीकिः। अग्रेण वा जघनेन वेत्यौपमन्यवः'** (बौ० श्रौ० २०।८)। आप्यस्य अपः सम्बन्धिनो हविषो निनयने विषये। तत्रापि यदाप्येभ्यो[2] निनयति तदास्यां न विकल्पः। देवतान्तरपक्षे त्वन्तर्वेद्येवाग्रेण। गार्हपत्यमिति शेषः [3]अस्यान्तर्वेदि निनयनपक्षाद् भेदं दर्शयति। अतिहाय नेति। गार्हपत्याग्रभागमनतिक्रम्यान्तर्वेदि न कुर्यादित्यर्थः।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने अष्टमोऽध्यायः।

---

१. ब श्र— एति।

२. भ— निनयेदिति।

३. ग— अस्यामन्त०।

## नवमोऽध्यायः

**अथ वेदमादत्ते 'अयं वेदः पृथिवीमन्वविन्दद् गुहासती गह्वरेषु। स विदन्तु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु' (तै० ब्रा० ३।७।६।१३)। वेदेन वेदिं त्रिः सम्मार्ष्टि 'वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि। गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिः' (तै० ब्रा० ३।३।६।१०) इति।**

वेदादानं वेदिसम्मार्गार्थं सम्मार्गश्च वेदिसंस्कारः। स चोत्तराध्याय एव तत्प्रकरणे वक्तव्यः। तथाप्येतदध्यायशेषत्वेनाभिधानस्यैतत् प्रयोजनं वेदिसम्मार्गस्य स्तम्बयजुर्हरणाङ्गता वेदिसंस्कारत्वं चेति। प्रथमपक्षे महावेद्यामप्यस्य प्रवृत्तिः, द्वितीये त्वप्रवृत्तिरिति। स्फ्यादानादिक एव तत्र प्रयोगो यथा स्यादिति।

**अथ जघनेन [1]वेद्यै तिष्ठन् स्फ्यमादत्ते 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' (तै० १।१।३।१) इति।**

अथ सम्मार्गानन्तरं वेदं निधाय। वेद्यै इति षष्ठ्यर्थे चतुर्थी। वेद्या जघनं विशयः। तदभावे गार्हपत्यव्यवधानेन वा तत् पश्चिमो देशः। तदव्यवधानेन श्रोणिपरिसर [2]उत्तरो देशः। तिष्ठन्निति। यद्यप्यत्रासीनेनैव स्फ्यादानादिककार्यं तथापि महावेद्यपक्षोया तिष्ठन्नित्युक्तम्। अत्राभिधानं त्वर्थप्राप्तानां [3]प्रकरणनियमं

---

१. ग स— वेद्यौ तितिष्ठन्।

२. ग भ— उत्तरदेशः।

३. ग स— प्रकरणात्।

व्यावर्त्तयितुम् । यथा गोपितृयज्ञे पितापुत्रद्यूतादेः प्रकरणातिक्रमेण राजन्यैकविषयता तथा द्यौतोदनपाकादेरपीति । अथवा स्फ्यादानस्य तिष्ठता करणं समन्त्रकत्वे सर्वत्र नैय्यमिकस्तम्बयजुर्हरणादेरर्थप्राप्त्यानुष्ठानमिति ।

**आदायाभिमन्त्रयते 'इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजाः' इति ।**

आदयेति पुनर्वचनादादानासम्भवे [1]त्वेतदाभिमुख्येन मन्त्रणं सूचयतीति । केचिदभिमन्त्रणस्य प्रधानत्वाद्[2]क्षिणेन हस्तेन धारणम् ।

**अथैनं बर्हिषा संश्यति 'वायुरसि तिग्मतेजाः शतभृष्टिरसि वानस्पत्यो द्विषतो वधः' इति ।**

संश्यति परिमृजति । तदेतत्सव्येन हस्तेन दक्षिणस्य स्फ्यधारणव्यापृतत्वात् । अपरे त्वाहुः '**आदायाभिमन्त्रयते**' इति पुनरादानं ग्रहणस्य प्रयोजनाभावाद् दक्षिणहस्ताद्वामेन स्फ्यादानमुक्तमिति । दक्षिणहस्तेनैव बर्हिषा परिमार्जनमिति । द्वैधे विशेषः '**स्फ्यस्य [3]संश्यन इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायनो य एष स्फ्यस्योद्सनो [4]मन्त्रस्तं प्रथमं [4]संश्यनानां कुर्यादथ तूष्णीं स्फ्यमुदस्येदिति**' ( बौ० श्रौ० २०।९ ) । उत्तरत्र स्फ्यस्योदसने यो मन्त्रो विनियुज्यते '**यो मा हृदा मनसा०**' ( तै० ब्रा० ३।७।६।४-५ ) इति । [5]स मन्त्रो मार्जनविनियुक्तानां मन्त्राणां प्राथमिकः कार्यः, पश्चात् '**वायुरसि तिग्मतेजाः**' इति । स्फ्यस्योदसनं तु तूष्णीमिति ।

**अथान्तर्वेद्यु*दीचीनाग्रं बर्हिर्निदधाति 'पृथिव्यै वर्मासि वर्म यजमानाय भव' इति ।**

---

१. भ — तदा० ।
२. इ१ — दक्षिणहस्तेन ।
३. ब श्र — संशान० ।
४-४. स — मन्त्रयति । ब श्र — संश्यानानाम् ।
५. ग स — 'सः' नास्ति ।

---

*अन्तर्वेदि = पूर्वार्धे वितृतीयदेशे ईषद्दूनतृतीयदेशे दर्भं निधाय — इ१ ।

वेदिं त्रिधा विभज्य तृतीये पूर्वभाग निदधाति, सोमे तथा दर्शनात् **'अथोपखाणां कालात् स्तम्बयजुर्हरति'** (बौ० श्रौ० ६।२२) इति । कालशब्दो देशवचनः । उपखदेशस्य तृतीयभागत्वात् तादृशो वैकृतोऽपि धर्मः प्रकृतावनुसन्धेय, यथा—प्रायणीयोपदिष्टाश्चरुधर्माः प्रकृताविति ।

**तस्मिन् स्फ्येन प्रहरति 'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' (तै० १।१।९।२) इति ।**

तस्मिन्निति मूलप्रदेश इति गम्यते । उदगपवर्गत्वायोदकोपस्पर्शमप्यौत्सर्गिकमुक्तम् । तत्प्रहरतीति वक्तव्ये यदुक्तं तस्मिन्निति तेनावगम्यते बर्हिराधारभूताया वेदेरपि खननमिति ।

**'अपहतोऽररुः पृथिव्यै' (तै० १।१।९।४) इत्यादत्ते ।**

बर्हिर्भूम्योः [1]तन्त्रेण प्रहरणाभिधानेन पांसुछिन्नतृणयोः सहादानं गम्यते । तथा च सूत्रम् **स्फ्येन सतृणान् पांसूनुपादाय'** (आप० श्रौ० २।१।५) इति ।

**'व्रजं गच्छ गोस्थानम्' । (तै० १।१।९।५) इति हरति ।**

उदकदेशपर्यन्तमिति [2]शेषः ।

**वेदिं प्रत्यवेक्षते 'वर्षतु ते द्यौः' (तै० १।१।९।६) इति ।**

प्रत्यवेक्षणम् परावृत्यावलोकनम् ।

**हृत्वोत्करे निवपति 'बधान देवसवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्' (तै० १।१।९।७) इति ।**

---

१. 'स्फ्येन' इति पाठः स्यात् ।

२. इ१ — अर्थः ।

हृत्वेति पुनर्वचनं व्यवहितोत्करायां महावेद्यां स्वयमेव हरणं द्योतयति। अत्र केचिन्निवपनस्य निरसनरूपतां मन्यमाना [1]उदकोपस्पर्शनमिच्छन्ति। [2]नैतत् सारम्[2]। [3]नैव भवति निरसनं निवपनमिति। तथात्वे 'दक्षिणे चर्मपक्षे राजानं निवपति' इत्यादावपि निरसनरूपतापत्तिः। भाव्युपयोगानुपयोगाभ्यां प्रति नियमः इति चेत्, अत्रापि 'अभि च गृह्णाति' इति विहिताग्नीध्राभिग्रहणोपयोगात्। तथा च सूत्रम् 'न्युप्तमाग्नीध्रोऽञ्जलिनाभिगृह्णाति' (आप० श्रौ० २।१।८) इति। अत्रापि न्युप्तमित्युक्तं, न तु निरस्तमिति। तस्मादत्र नोदकस्पर्शनमिति।

**द्वितीयं प्रहरति 'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' इति। 'अपहतोऽररुः पृथिव्यै देवयजन्यै' (तै० १।१।६।८) इत्यादत्ते। 'व्रजं गच्छ गोस्थानम्' (तै० १।१।६।६) इति हरति। वेदिं प्रत्यवेक्षते 'वर्षतु ते द्यौः' (तै० १।१।६।१०) इति। हृत्वोत्करे निवपति 'बधान देवसवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्' (तै० १।१।६।११) इति[4]। तृतीयं प्रहरति 'पृथिवि देवजन्योषध्यास्ते मूलं मा हिंसिषम्' इति। 'अपहतोऽररुः पृथिव्या अदेवयजनः' (तै० १।१।६।१२) इत्यादत्ते। 'व्रजं गच्छ गोस्थानम्' (तै० १।१।६।१३) इति हरति। वेदिं प्रत्यवेक्षते 'वर्षतु ते द्यौः' (तै० १।१।६।१४) इति। हृत्वोत्करे निवपति 'बधान देव सवितः परमस्यां परावति शतेन पाशै योऽस्मान् द्वेष्टि यं च वयं द्विष्म-**

---

१. ग भ स— उदकस्पर्शमि०।

२-२. ग भ स— 'नैतत् सारम्' नास्ति।

३. ग भ— न हि।

४. ङ, प— 'इति' इत्यस्यानन्तरम् 'द्वितीयं प्रहरति-पृथिवि....सिषमिति। अप....व्यै देवयजन्या इत्यादत्ते। व्रजं....मामौक्-इति'।

**स्तमतो मा मौक् । अररुस्ते दिवं मा स्कान्' (तै० १।१।६।१५-१६) इत्यत्रानुवर्तयति तूष्णीं चतुर्थं हरति सह बर्हिषा ।**

अत्रेति सन्निहिततृतीयपर्यायमात्र एव 'अररुस्ते दिवं मा स्कान्' इत्यस्य जप इति केचित् । अन्ये तु अनुवर्तयतीत्यनुवर्तनग्रहणसामर्थ्यात्, अत्रेत्यस्य प्रकृतमात्रपरत्वाच्च 'अररु०' इत्यस्य प्रतिपर्यायमावृत्तिरित्याहुः । तूष्णीं चतुर्थं हरति सह बर्हिषा-अत्र हरणं प्रहरणादेर्निवपनान्तस्योपलक्षणम् । सह बर्हिषेति । छिन्नावशिष्टेन बर्हिषा सहेत्येके । तथा च सूत्रम् 'तूष्णीं चतुर्थं [1]हरन् सर्वं दर्भशेषं हरति' ( आप० श्रौ० २।१।१० ) इति । अन्ये तु [2]चतुर्थे पर्याये 'सह बर्हिषा' इति वचनात् प्राक्तनपर्यायत्रये पांसुमात्रग्रहणम्, चतुर्थ एव पर्याये छिन्नेनावशिष्टेन च बर्हिषा सह ग्रहणमिति । सोऽयं कर्मसमुदायः स्तम्बयजुर्हरणाख्य इति केचित् । सपांसु बर्हिर्हरणं स्तम्बयजुर्हरणमित्यन्ये ।

**अथ [3]पूर्वं परिग्राहं परिगृह्णाति 'वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा' (तै० १।१।६।१७) इति दक्षिणतः, 'रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा' ( तै० १।१।६।१८ ) इति पश्चात्, 'आदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा' (तै० १।१।६।१९) इत्युत्तरतः ।**

द्वैधे विशेषः 'वेद्यै परिग्रहण इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायनः श्रोणीं प्रथमां परिगृह्णीयादथ दक्षिणमंसमथोत्तरमिति । पुरस्तादेवैनां [4]प्रदक्षिणं परिगृह्णीयादित्यौपमन्यवः' ( बौ० श्रौ० २०।९ )। अत्रौपमन्यवः पक्षः पूर्वकल्पसम्मतः पुरस्तादारभ्य प्रदक्षिणं [5]परिग्रहे मन्त्रक्रमानुगुण्यं च । बौधायनीये

---

१ 'हरन्' इति पाठ आपस्तम्बश्रौतसूत्रमनुसृत्य संयोज्यते ।

२. इ१ प — चतुर्थ० ।

३. ग भ — पूर्व० ।

४. ग — 'प्रदक्षिणम्' नास्ति ।

५. ग — परिग्रह० । स —परिग्रहम् ।

तु पक्षे [1]प्रथमश्रोणिपरिग्रहे तत्र विनियुक्तः 'रुद्रास्त्वा०' इति मन्त्रः प्रथमः, द्वितीयः 'वसवस्त्वा०' इति, तृतीयः 'आदित्यास्त्वा०' इति विवेकः। उदक्प्रागपवर्गत्वं चौत्सर्गिकम्।

'रुद्रास्त्वा०' इत्यत्रोदकस्पर्शनं कर्त्तव्यं रौद्रत्वात् कर्मणः। अन्ये तु रुद्रप्राधान्याभावात् तदनुपकारकेऽस्मिन् कर्मणि नोदकस्पर्शनम्। ब्राह्मणे वस्वादिभिर्देवतोपकारश्रवणात्। तथा 'रौद्रेणानीकेन पाहि माग्न०' (बौ० श्रौ० ६।२९, २५।१९) इत्यादाविति वदन्ति। अपरे त्वेकस्मिन्नेव रुद्रेऽपामुपस्पर्शनमित्युपदेश इति वदन्ति। बहुवचने रुद्रशब्देऽपां स्पर्शनं नेच्छन्ति। अत्र किं मूलमिति चिन्त्यम्। न च रौद्रत्वे बहुत्वैकत्वयोर्विशेष इति। न च वाच्यम् 'रुद्रो वै क्रूरः' (बौ० गृ० ३।१३।४) [2]इत्येकस्यैव क्रौर्याभिधानान्न बहूनामिति, क्रूरसमुदायस्याक्रूरत्वे[3] प्रमाणाभावात्। तस्माद्रुद्रा [4]घातुका इति बहुष्वपि दर्शनाच्च। पित्र्यादिष्वपि तथा प्रसंगेन, 'पितृभ्यस्त्वा पितॄन् जिन्व' इति तदभावप्रसंगात्।

**करणं जपति 'इमां नराः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं वर्ष्मन् दिवो नाभा पृथिव्या यथाऽयं यजमानो न रिष्येत्' (तै० ब्रा० ३।७।७।१३-१४) इति।**

नायं प्रैषमन्त्रो जपतीति वचनात्। सोमे चास्य सद्भावेऽपि 'वेदिकरा वेदिं कल्पयत' (बौ० श्रौ० ६।२३) इति प्रैषोपलम्भात्। अतोऽत्र चातुःस्वर्यमुपांशुत्वं चेति।

**अथ प्राचीं स्फ्येन वेदिमुद्धन्ति 'देवस्य त्वा सवितुः सवे कर्म कृण्वन्ति वेधसः' (तै० १।१।६।२०) इति।**

---

१. प ग स— प्रथमम्।

२. ग— इत्यन्येकस्यैव।

३. ग भ स— नियामकाभावात्।

४. इ१— घातकाः।

प्राचीं प्राक्प्रवणामित्यर्थः। प्रागपवर्गत्वौत्सर्गिकत्वात्।

**अथाग्नीध्रमाह 'अग्नीदितः त्रिर्हर' इति।**

यद्यप्यत्र प्रैषवचनादेवाग्नीध्रविषयत्वमवगतं तथापि **'आग्नीध्रमाह'** इति पुनर्वचनमुत्तरार्थम्। ततश्च **'प्रोक्षणीरासादय'** इत्यादिवक्ष्यमाणस्य प्रैषस्याग्नीध्रविषयत्वं सिध्यतीति। न पारिशेष्यात्तद्विषयत्वप्रतिपादनप्रयासः।

**ततस्त्रिराग्नीध्रो हरति। यदाग्नीध्रः त्रिर्हरति।**

ततः खतप्रदेशादाग्नीध्रः पाणिना त्रिवारं[1]मृदमपनीयोत्करे क्षिपतीति शेषः। तथा च सूत्रम् **'समुद्धतस्याग्नीध्र उत्करे त्रिर्निवपतीति'** (आप० श्रौ० २।२।४) यदाग्नीध्रः त्रिर्हरतीति। [2]यदेति पदच्छेदः। एतदभिधानस्यैतत्प्रयोजनं त्रिर्हरणानन्तरमेवोत्तरपरिग्रहार्थं सम्प्रैषो यथा न स्यादिति। अयमर्थः। यदा यस्मिन् काले, आग्नीध्रः त्रिर्हरति तदव्यवधानेन न[3] सम्प्रैषः, अपि तु व्यवधानेन। अतएवोक्तम्—अथ सम्प्रैषमाहेति, न तु तदेति। तस्माद्विज्ञायते [4]नाव्यवहितमानन्तर्यम्। दर्शे तावत् स्पष्टं कालेन कर्मभिश्च व्यवधानं हरणस्य पूर्वेद्युः क्रियमाणत्वात्। पौर्णमास्यां च[4] हरणप्रैषवचनयोर्मध्ये वेदिकरणम्। अतएवोत्तरत्वं परिग्राहस्य।

तथा च कर्मान्ते **'अथेयं दार्शपौर्णमासिकी वेदिर्यजमानमात्री भवत्यपरिमिता वा। यथासन्नानि हवींषि संभवेदेवं तिरश्चीं। प्राञ्चौ वेद्यंशावुन्नयत्याहवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी निरूहति गार्हपत्यस्य परिगृहीत्यै। पुरस्तादंहीयसी पश्चात् प्रथीयसी मध्ये सन्नततरा भवत्येवमिव ह्येषा। तस्यै वदति इयतीं खनतीति। प्रजापतिना यज्ञमुखेन सम्मिताम्। आप्रतिष्ठायै खनति [5]इति। द्व्यङ्गुला खेयेत्येकेषाम्[5]। त्र्यङ्गुला खेयेत्येकेषाम्। चतुरङ्गुला**

---

१. ग— मृदमानी०। स— त्रिरंमृदमनी०।

२. भ— पदे इति।

३. ग भ स— 'न' नास्ति।

४-४. ग स— 'नाव्यवहित०....मास्यां च' नास्ति।

५-५. ए— 'इति....केषाम्' इति पाठः सूत्रपाठमनुसृत्य संयोज्यते।

खेयेत्येकेषाम् । सीतामात्रीत्येकेषाम् । रथवर्त्ममात्रीत्येकेषाम् । यावत्पार्ष्ण्यै श्वेतमित्येकेषाम् । एतदेव सदन्येषामनुक्रान्ततरं भवति । नैतामात्रा अति खनेत् । दक्षिणतो वर्षीयसीं करोति । पुरीषवतीं करोति । प्राचीमुदीचीं प्रवणां निस्तिष्ठन्ति' (बौ० श्रौ० २४।२४) इति ।

यजमानमात्रीं दैर्घ्येण । अपरिमिता उक्तप्रमाणादधिका न तन्न्यूना । तथा च कात्यायनः 'अपरिमितं प्रमाणाद् भूयः' इति भारद्वाजश्च तथा 'अपरिमितशब्दः संख्याया ऊर्ध्वम्' इति । पक्षद्वयेऽपि वेदिराहवनीयसंगता । गार्हपत्यात् प्राग्विशयः । तदभावे तूभयसंगता [1]तिर्यग् विस्तारप्रमाणमाह यथासन्नानीति । आसन्नानि हवींषि यथा संभवेत् संगृह्णीयात् तथा तिर्यग्विस्तीर्णाम् । प्राञ्चौ श्रोणी निरूहति नितरामूहति । अभितो गार्हपत्यं सम्बध्नातीत्यर्थः । पुरस्तादंहीयसी पूर्वभागे तन्वी । पश्चात् प्रथीयसी, मध्ये सन्नततरा च मध्ये तनुतरा । तदेतत् सर्वं शुल्बे निपुणतरं वक्ष्यामः । तस्यै-इति षष्ठ्यर्थे चतुर्थी । वदति । ब्राह्मणमिति शेषः । इयतीं [2]खनतीति । खननप्रमाणविशेषानभिधानात् प्रमाणविकल्पान् नानाशाखोदितानाह—द्व्यङ्गुला खेयेत्येकेषामित्यादि । रथशब्दस्तच्चक्रवचनः । सीता फालकृष्टा रेखा । पार्ष्णिः पादस्य पश्चिमभागः । तस्य यावच्छुक्लो भागः तावत् खनति एतदेवेति । एतदेवप्रमाणं सर्वेषां प्रमाणानामनुगतं सामान्यरूपम् । एतदुक्त[3]प्रमाणातिरिक्तं न खनेदित्यर्थः । तदेतत्सर्वमभिसन्धायोक्तम्-आप्रतिष्ठायै खनतीति । यावता [4]खननेन वेदिप्रतिष्ठा न निहन्यते, तावदुक्तप्रमाणेष्वन्यतरप्रमाणाश्रयणेन खनतीत्यर्थः । अतएवोक्तम्—नैता मात्रा अतिखनेदिति । निस्तिष्ठन्ति वेदिकरणाद्विरमन्तीत्यर्थः ।

**अथ सम्प्रैषमाह 'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि' इति ।**

---

१. ग भ— अति० ।

२. भ— संतन्ती तिरः ।

३. ड१— 'उक्त' नास्ति ।

४. ड१— खनेन ।

सम्प्रैषः प्रसववचनप्रेरणम् ।

**प्रसुत उत्तरं परिग्राहं परिगृह्णाति ।**

प्रसुतः अनुज्ञातः ।

**'ऋतमसि' (तै० १।१।६।२१) इति दक्षिणतः, 'ऋतसदनमसि' (तै० १।१।६।२२) इति पश्चात्, 'ऋतश्रीरसि' (तै० १।१।६।२३) इत्युत्तरतः ।**

प्राग्दिशमारभ्य प्रादक्षिण्यं पूर्ववत् ।

**अथ प्रतीचीं स्फ्येन [1]योयूप्यते 'धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयच्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते' (तै० १।१।६।२४-२५) इति ।**

प्रतीचीं प्रत्यगपवर्गां योयूप्यते निम्नोन्नतसमीकरणार्थं घटयति । द्वैधे विशेषः '[2]**योयूपन इति सूत्रं बौधायनस्य । चतुर्थेन [3]योयूपित्वा पञ्चमेनोद्गृह्णीयादिति शालीकिः**' ( बौ० श्रौ० २०।९ ) इति । चतुर्थेन **'उदादाय'** इत्यारभ्य **'स्वधाभिः'** इत्यन्तेन । पञ्चमेन **'तां धीरासः'** इत्यनेन । उद्गृह्णीयात् उद्धृत्य गृह्णीयात् स्फ्यमिति शेषः । अथवा, चतुर्थशब्दो मन्त्रचतुष्टयसमुदायवचनः ।

**अथान्तर्वेदि तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषमाह 'प्रोक्षणी-**

---

१. ब श्र— योयुप्यते ।

२. योयूप्यन । ब श्र— योयुपन ।

३. ब श्र स— योयुपित्वा ।

**रासादयेध्माबर्हिरुपसादय स्रुवं स्रुचश्च सम्मृड्ढि पत्नीं संनह्या*ज्येनोदेहि' इति ।**

अन्तर्वेदीत्यनेन वेदिं त्रेधा विभज्य [1]पाश्चात्यं वेदितृतीयभागं विहाय तत्सन्निहित एव मध्यभागस्यापरार्धे स्फ्येनोदीचीं रेखामालिख्य तन्मध्ये तिर्यग्भूतं स्फ्यं स्तब्ध्वा स्थापयित्वा सम्प्रैषमाह । तथा च सूत्रम् **'पश्चार्द्धे [2]वेदेर्वितृतीयदेशे'** इति । **'स्फ्यस्य वर्त्मन्त्सादयति'** (तै० ब्रा० ३।२।१५) इति लिङ्गाच्च रेखाकरणं सूचितम् । प्रैषवचनस्याग्नीध्रविषयत्वम् । **'अथाग्नीध्रमाह'** इति वचनस्य [3]तत्सम्बन्धित्वेन व्याख्यातत्वात्, प्रोक्षण्यासादनेन च । **'दक्षिणेनाध्वर्युस्ताः स्फ्य उपनिनीय'** ( बौ० श्रौ० १।११ ) इत्येतदध्वर्युव्यतिरिक्तस्यान्यकर्तृकत्वज्ञापनाच्च सुकरोऽत्रबोधः । तथाप्यत्राभियुक्तैरेव विचारितम्—न परप्रत्ययनार्थम् । आनुपूर्व्यस्मरणार्थमाध्वर्यवे समाम्नानात् **'अनुपूर्वतायै'** इति वचनात् । यथा तक्षा सूत्रं पातयित्वा तक्षति तथा प्रेषणं मनः समाधानार्थम् । अग्नीधः करणे समाख्यायामध्वर्युशब्दो गौणः स्यात्, संशयश्च किमग्नीत् [4]प्रेषितो ब्रह्मयजमानौ वेति ।

सन्निधानविशेषाद्विशेषसमाख्याद्यभावात् । तत्कार्ये च सर्वत्राग्नीद्ग्रहणात्, परप्रेषणे च नाम[4]ग्रहणात् **'प्रातर्यावभ्यः'** ( बौ० श्रौ० ७।२ ) इत्यादिष्विति । तथा सति प्रैषो गौणः स्यात् न ह्यात्मा प्रेष्यते । प्राप्तकालत्वे चात्मनि वचनमनर्थकं स्यात् मध्यमपुरुषश्च विरुध्येत । न चात्मप्रैषणं प्रयोजनवत् । संप्रैष इति वचनं [5]क्वचिदात्मनि न दृष्टम् । **'अनुपूर्वतायै'** ( तै० ब्रा० ३।२।१०।१४ ) इत्याग्नीध्रस्यापि तुल्यम् । प्रोक्षणीध्माद्याहरणे बहुवचनस्य प्रयोजनं वक्तव्यम् । [6]करणे [7]करणं

---

१. भ— पाश्चात्यायाम् ।
२. ग स— वेदितृतीय० ।
३. ग— एतत् विधित्वेन ।
४-४. भ — प्रेषितो....नाम' नास्ति ।
५. ग— कदा ।
६. ग— 'करणे' नास्ति ।
७. स— करणमन्त्र० ।

---

*पत्नी संनह्य=पत्न्यां रजस्वलायां प्रैषे पत्न्यर्थपदस्य लोपः— इ० ।

मन्त्रवज्जपतीत्यवक्ष्यत् । सम्मार्गादिवत्समाख्यापि न विरुध्यते । **'अध्वर्युरवेक्षते'** इत्यध्वर्युग्रहणं ज्ञापकम्-इतः प्राञ्चः पदार्था अन्येन कर्त्तव्याः इति ।

सर्वत्र ब्रह्मा दक्षिणत आस्ते-इति [1]तस्य चलनं नास्तीति । [2]अपरिक्रीतैर-कर्त्तव्यत्वात्, यजमानस्य स्वामित्वात्, होतुर्न तावत् कालः, परिशेषादाग्नीध्रः । [3]यत्र-नामाग्रहणादिति । **'होतः समिधो यज'** इति, **'उन्नेतराहरोपसृज'** इत्यवचनात् प्रैषेऽनुक्तेऽपि सामर्थ्यात् संनिहितः करोतीति गम्यते । **'मुखदघ्ने धारयन्नाह आहराप आनय'** (का० श्रौ० २।६।२७-२८) इत्यादिषु कस्य नाम गृहीतम् । इह च नामाग्रहण-प्रयोजनं प्राक् स्रुक्सम्मार्गादनियमख्यापनार्थम् । यत्रामन्त्रकाः पदार्था अनियत-कर्तृका भवन्ति । तथा च बहुवचनम् आहरन्त्येता प्रोक्षणीरिति । अन्ये तु प्रैषस्या-ध्वर्युविषयत्वं वैकल्पिकमाहुः [4]**'अपचारे यजमानस्य स्वयमात्मानमनुजानीयात्'** (आप० श्रौ० ६।७।३) इति न्यायेनात्मन्यपि सम्प्रैषोपपत्तेश्च । न चैवं सम्प्रैषानर्थ-क्यम् । कर्तृसंस्कारार्थत्वात् । अतएवोक्तम् **'अनुपूर्वतायै'** इति । तथा च कात्यः **'यथाप्रेषितमन्यः [5]करोति पराधिकारात् । स्वयं वाऽविरोधात्'** ( का० श्रौ० २।६।२७-२८ ) इति । भारद्वाजोऽपि **'आग्नीध्र एतानि कर्माणि कुर्यादित्येकम् । अध्वर्युरित्यपरम्'** (भा० श्रौ० २।३।१२) ।

पत्नीं सन्नह्येति । तदेतद्बहुपत्नीकस्याप्येकवचनमेव । **'न प्रकृतावूहो विद्यते'** (आप० य० ३।४८) इति सूत्रोक्तेः । ततश्चैकत्वमविवक्षितं वा स्यात् **'ग्रहं सम्मार्ष्टि'** इतिवत् । पत्नीत्वजातिसद्भावे तु तद्विषयं चैकवचनम् । तथा चोक्तं भट्टपादैः— **'पत्नीसंनहनादौ तु व्यक्तमाकृतिसंख्यया'** इति । भाष्ये च [6]**'अहर्विशेषौ चोद्यते प्रत्येकं परिसमाप्यते'** इति । एवं सर्वानूहप्रसंगे सूत्रमुपतिष्ठते **'न प्रकृतौ'** (आप० प० ३।४८) इति । केचित्तु प्रकृतावप्यूहमिच्छन्ति । यथाप्रकृतौ द्वादशाहेऽव-

---

१. ग स— 'तस्य' नास्ति ।
२. अत्र 'परिक्रीतैः' इति पाठः स्यात् ।
३. ग स— यच्च नामग्रहणा० ।
४. इ१— अपरे ।
५. का० श्रौ०— करोति' नास्ति ।
६. ए स— चरुविशेषौ । ग— हविशेषौ । अत्र पाठश्चिन्तनीयः ।

सुत्यामित्युपदेश इति । अत एव गोपालः **'प्रकृतावूहविकल्पमाह अविकारोऽथ [1]ऊहेद्वा या सम्राडिति[1] शासनम्'** इति । एवं विकल्पसम्भवेऽपि न्यायसम्मतः सर्वानूहपक्ष एव ।

**आहरन्त्येताः प्रोक्षणीरभिपूर्य । दक्षिणेनाध्वर्युस्ताः स्फ्य उपनिनीय स्फ्यस्य वर्त्मन् सादयति ।**

आहरन्तीति बहुवचनादमन्त्रकाणि कर्माण्यनेककर्तृकाण्यपि भवन्तीति सूचयति । अभिपूर्य हरन्तीत्यन्वयः । अभिपूरणं च लौकिकाभिरद्भिः । ता अन्येन हृता अध्वर्युर्दक्षिणेन हस्तेनादाय । एतावन्तं कालं दक्षिणस्य स्फ्यधारणव्यापृतत्वेऽपीदानीं सव्येन स्फ्यधारणमर्थाद् भवति । स्फ्यस्य वर्त्मन् वर्त्मनि प्रकृतायां रेखायां सादयति । द्वैधे विशेषः **'प्रोक्षणीनामासादन'** इति । स्फ्यस्य वर्त्मन्नुपनिनीयासादयेदिति बौधायनः । अनुपनिनीयैवेति शालिकिरिति ।

**अथोत्करे स्फ्यं निहन्ति 'यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि' (तै० ब्रा० ३।७।६।४-५) इति ।**

निहन्ति उदस्यति । तत्काले च भ्रातृव्यस्मरणम् ।

**[2]हस्तौ प्रक्षाल्य स्फ्यं च प्रक्षालयति[2] ।**

**'हस्तावयनेनिक्ते आत्मानमेव पवयते'** (तै० ब्रा० ३।२।१०।२) इत्यादि ।

**उपसादयन्त्येतदिध्माबर्हिः ।**

अत्रापि बहुवचनेनामन्त्रकत्वात्कर्तृनियमाभावः । आसादनदेशश्च कर्मान्ते दर्शितः **'समान्येतानि कुर्यात् प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति**

१-१. उहे वा याम्राडिति ।

२-२. इ१ प ग भ स— 'हस्तौ....प्रक्षालयति' नास्ति । अयं पाठः सूत्रपाठमनुसृत्याङ्गीकृत ।

'यज्ञशिर इत्येतदाचक्षते'[1] (बौ० श्रौ० २४।२५) इति। प्रणीताभ्य उत्तरत इध्मः तदुत्तरं बर्हिरिति। द्वैधे विशेषः 'इध्माबर्हिषोरासादन[2] इति सूत्रं बौधायनस्य। उत्तरमिध्ममिति शालीकिः' (बौ० श्रौ० २०।९)।

**अत्र प्रयोगक्रमः—**

अध्वर्युरुत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तप्तायां पिष्टोद्वपन्यां सव्येन पवित्रं धारयन् दक्षिणेन हस्तेन कृष्णाजिनात् पिष्टानि संवपति **'देवस्य'** इत्यारभ्य **'अग्नये जुष्टं संवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय'** इति पौर्णमास्याम्। अमावास्यायाम् **'अग्नये जुष्टं संवपामीन्द्राग्निभ्याम्'** इत्यसंनयतः। संनयतः **'अग्नये जुष्टं संवपामीन्द्राय'** इतीन्द्रयाजिनः, **'महेन्द्राय'** इति तद्याजिनः। ब्रह्मापि संवपन-प्रभृत्याभस्माभिवासनाद् वाग्यतो भवति। सुशृते पिष्टे परिकर्मिणमाह **'आहराप आनय'** इति। परिकर्मी पात्रान्तरमादाय वेदेनोपयम्य स्रुवेण प्रणीताभ्य [3]उपहृत्य तस्मिन्नानीय। एवं मदन्तीभ्य आदाय तदप्यस्मिन्नानीय गार्हपत्यस्योत्तरतः प्रत्यङ्-मुखस्तिष्ठन्नुभयीः पिष्टेष्वानीयमाना अध्वर्युः प्रतिमन्त्रयते **'समापो०'** इति। भूमौ पिष्टोद्वपनीं निधाय तप्ताभिरनु[4]परिप्लावयति **'अद्भ्यः'** इति। मेक्षणेन मिश्रयति **'जनयत्यै०'** इति। त्रेधा कृत्वाऽभिशति **'अग्नये त्वाऽग्नीषोमाभ्यां त्वा, इन्द्राय वैमृधाय त्वा'** इति पौर्णमास्याम्। अमावास्यायां द्वेधा कृत्वाभिमृशति **'अग्नये त्वा, इन्द्राग्निभ्यां त्वा'** इत्यसन्नयतः। सन्नयतस्तु **'अग्नये त्वा, इन्द्राय त्वा'**। **महेन्द्राय त्वा'** इति तद्याजिनः।

प्रथमभागं पिण्डं करोति **'मखस्य शिरोऽसि'** इति। अश्वशकमात्रं संकुचित-कूर्माकारमिव करोति। दक्षिणकपालाङ्गारान् प्रत्यूह्याग्नेयमधिश्रयति **'घर्मोऽसि विश्वायुः'** इति। सर्वेषु कपालेषु यथा व्याप्नोति तथा प्रथयति **'उरु प्रथताम्'** इति। लौकिकमाज्यमानीय विलीनमप्यदृष्टार्थं गार्हपत्येऽधिश्रित्याज्यस्थाल्यामुदगग्रं पवित्रं

---

१. भ— यज्ञस्य शिरः।

२. व श्र— उपसादन०।

३. ग भ स— अपहृत्य।

४. इ१ प स ग— प्लावयति।

निधाय तां सव्येन गृहीत्वा दक्षिणेनाज्यं निर्वपति '**महीनां**' इति। गार्हपत्यस्योत्तरतस्तत्क्षेत्र एव भस्ममिश्रानाङ्गारा[1]न्निरूह्य तेष्वाज्यस्थालीमधिश्रयति। पवित्रं प्रोक्षण्यामेव निदधाति। अग्नीषोमीयवैमृधयोरपि '**मखस्य०**' इत्यारभ्य प्रथनान्तं समानम्। अमावास्यायामाज्यं निरूप्यासन्नयत ऐन्द्राग्नम्, सन्नयत ऐन्द्रं माहेन्द्रं तद्याजिनः। पुरोडाशोत्तरे शृतं तदुत्तरतो दधि। पिष्टोद्वपन्यामप आनीय सोदकेन पाणिनाग्नेयं पुरोडाशं श्लक्ष्णीकरोति '**त्वचं गृह्णीष्व**' इति त्रिर्मन्त्रेण। एवमुत्तरयोरपि त्रिरावृत्तिर्मन्त्रस्य क्रियायाश्च।

ज्वलतोल्मुकेन सर्वाणि साज्यानि हवींषि पर्यग्निकरोति '**अन्तरितं०**' इति। सकृन्मन्त्रमुक्त्वा त्रिः कर्म करोति। पुरोडाशानां चिह्नानि करोत्यविपर्यासाय। गार्हपत्य आदीपितैर्दर्भैर्दक्षिणं पुरोडाशं श्रपयति '**देवस्त्वा०**' इति। गार्हपत्यमभिमन्त्रयते '**अग्ने हव्यं रक्षस्व**' इति। एवमुत्तरयोरपि [2]पुरोडाशयोः '**देवस्य त्वा०**' इत्यादि श्रपणावेक्षणे। दक्षिणपुरोडाशस्योपरिधृष्ट्या भस्माभिवास्य वेदेन साङ्गारं भस्माभिवासयति '**सं ब्रह्मणा पृच्यस्व**' इति। [3]मन्त्रः क्रिया च त्रिः। तथोत्तरयोरपि पुरोडाशयोर्भस्माभिवासनम्। '**अविदहन्त श्रपयतः**' इत्याग्नीध्रं सम्प्रेष्य वाचं विसृजते। आग्नीध्रः परिभोजनीयदर्भैर्हवींषि सुशृतानि करोति। पिष्टोद्वपनीं संक्षाल्य तस्यां हस्तावपि संक्षाल्य तां गार्हपत्यसमीपे धारयन् गार्हपत्याज्ज्वलितोल्मुकेनावाक्कृतेनोपरि गृहीतेन पात्रीस्थमुदकं तापयित्वोल्मुकमग्नौ प्रक्षिपति। पात्रीस्थमुदकं निरवशेषं हृत्वान्तर्वेदि स्फ्येन प्रागायताः प्रागपवर्गास्तिस्रो लेखा लिखित्वाप उपस्पृश्य, पात्रीस्थमुदकं हस्तेन प्रागारभ्य प्रत्यगपवर्गं लेखासु निनयति '**एकताय स्वाहा, द्वितायस्वाहा, त्रिताय स्वाहा**' इति। एकतायेदं द्वितायेदं त्रितायेदं पृथिव्या अन्तरिक्षाय दिवे वा। अग्नय आदित्याय वैद्युताय वा। पित्रे पितामहाय प्रपितामहायेति वा। वेदमादत्ते '**अयं वेदः**' इति। वेदेन वेदिं सकृन्मन्त्रमुच्चारयन् त्रिः सम्मार्ष्टि '**वेदेन वेदिं०**' इति। स्फ्यादानादारभ्य तिष्ठन्नेव करोति। [4]ब्रह्मा स्फ्यादानप्रभृत्याप्रोक्षणीनामासादनाद्वाचंयम आस्ते।

---

१. ग स— निरूप्य।

२. ग भ स— 'पुरोडाशयोः' नास्ति।

३. ग भ स— त्रिर्मन्त्रः।

४. ग— 'ब्रह्मा' नास्ति।

अध्वर्युर्जघनेन वेद्यै तिष्ठन् दर्भाभ्यां सह स्फ्यमादत्ते 'देवस्य०' इति। आदायाभिमन्त्रयते 'इन्द्रस्य बाहु०' इति। स्फ्यं सव्येन गृहीत्वा दक्षिणेन हस्ते हस्तस्थबर्हिषोरन्तरेण द्विगुणभुग्नेन दर्भेण मूलादारभ्याग्रात्स्फ्यमुन्मार्ष्टि 'वायुरसि' इति। परिमार्जनदर्भं निरस्याप उपस्पृश्यापरेणाहवनीयं यजमानमात्री वेदिः, तां त्रेधा विभज्य पाश्चात्यभागद्वयं विहाय पौरस्त्यभागं त्रेधा विभज्य, तस्य पाश्चात्यतृतीयभागं विहाय मध्यभागे पूर्वगृहीतं दर्भमुदगग्रं पृष्ठ्यादेशे निदधाति 'पृथिव्यै वर्मा०' इति। तृणं स्फ्येन प्रहरति 'पृथिवि०' इति। अपः [1]स्पृष्ट्वा स्फ्येन मूलतः छिन्नतृणसहितान् पांसूनुपादत्ते 'अपहतोऽरक्षः' इति। 'व्रजं गच्छ०' इति हरति। परावृत्य वेदिमीक्षते 'वर्षतु०' इति। हृत्वोत्करे निवपति 'बधान देव०' इति। आग्नीध्रः प्राङ्मुख आसीनस्तदञ्जलिनाभिगृह्णाति। एवं द्वितीयं तृणमध्यमप्रदेशे प्रहृत्य [2]हरति। तृणादाने विशेषः 'अपहतोऽरक्षः पृथिव्यै देवयजन्यै' इति। तथा तृतीयं तृणस्योत्तरभागे प्रहृत्याग्रप्रदेशं किंचिद् वेद्यामवशेष्य 'अपहतोऽरक्षः पृथिव्या अदेवयजनः' इत्यादत्ते। उत्करनिवपने 'अररुस्ते दिवं मा स्कान्' इति मन्त्रान्तः। तूष्णीं चतुर्थमवशिष्टतृणं स्फ्येन प्रहृत्याप स्पृश्य[3] सर्वं बर्हिःशेषं पांसूंश्चादाय हृत्वा वेदिमवेक्ष्योत्करदेशे निवपति। पर्यायचतुष्टयेऽप्याग्नीध्रोऽञ्जलिनाभिगृह्णाति। अध्वर्युः स्फ्येन पूर्वं परिग्राहं परिगृह्णाति। वेद्या दक्षिणमंसमारभ्यादक्षिणायाः श्रोणे रेखां लिखति 'वसवस्त्वा०' इति। दक्षिणश्रोणिप्रभृत्योत्तरायाः श्रोणे रेखां करोति 'रुद्रास्त्वा०' इति। अप उपस्पृश्योत्तरां श्रोणिमारभ्योत्तरादंसाल्लिखति 'आदित्यास्त्वा०' इति।

करणमन्त्रं जपति 'इमां नराः' इति। स्फ्येन प्राक्प्रवणां वेदिं खनति 'देवस्य सवितु०' इति। अप उपस्पृश्याग्नीध्रमाह 'अग्नीत०' इति। आग्नीध्रः [4]खातदेशात् पांसूंस्त्रिरादायोत्करे निवपति। अन्तेऽपामुपस्पर्शनम्। अध्वर्युर्ब्रह्माणमाह 'ब्रह्मन्नु-

---

१. ए ग भ स— स्पृश्य।

२. ग भ स— 'हरति' नास्ति।

३. 'उपस्पृश्य' इति पाठः। स्यात्।

४. ग स— खाताद्देशात्।

त्तरः' इति। [1]ब्रह्माभ्यनुजानाति **'बृहस्पते परिगृहाण वेदिं ब्रह्मणा यज्ञं परिगृह्णीहीमम्। सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि। ओं परिगृहाण'** इति। अध्वर्युः पूर्ववदुत्तरं परिग्राहं [1]स्फ्येन परिगृह्णाति— **'ऋतमसि'** इति दक्षिणतो रेखाः, **'ऋतसदनमसि'** इति पश्चात्, **'ऋतश्रीरसि'** इत्युत्तरतः। स्फ्येनो[1]दगग्रेण प्रत्यगपसमीकरोति **'धा असि०'** इति। वेदेः पश्चिमतृतीयभागे-[2]विहाय तत्संनिहित एव मध्यभागस्य पश्चार्धे[2] स्फ्येन तिरश्चीं लेखां लिखित्वा तस्यां तिर्यञ्च स्फ्यं स्तब्ध्वा संप्रैषमाह **'प्रोक्षणीरासादयेध्माबर्हिरुपसादय, स्रुवं स्रुचश्च संमृड्ढि, पत्नीं सनह्याज्येनोदेहि'** इति। पत्न्यामनालम्भुकायामप्यविकारेण सम्प्रैषः। द्विबहुपत्नीप्रयोगेऽप्यनूहः। प्रैषार्थनाग्नीध्रः करोति। प्रोक्षणीलौकिकाभिरद्भिरभिपूर्याध्वर्यवे प्रयच्छति। अध्वर्युः सव्येन स्फ्यं गृहीत्वा दक्षिणे ताः स्फ्यस्य वर्त्मनि किञ्चिदुपनिनीय तस्मिन् सादयति। उत्करे स्फ्यं प्रत्यगग्रं निरस्यति **'यो मा हृदा०'** इति। हस्तौ प्रक्षाल्य स्फ्यं प्रक्षालयति। आग्नीध्र उत्तरेणाहवनीयं प्रणीताः प्रागग्रमिध्माबर्हिरुपसादयति। दक्षिणमिध्ममुत्तरं बर्हिः।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने नवमोऽध्यायः।

---

१-१. भ— 'ब्रह्मा...परिग्राहम्' नास्ति। १ स— °दग्रग्रेण प्रत्यगपधीम्।

२-२. ग भ स— 'विहाय....पश्चार्धे' नास्ति।

## दशमोऽध्यायः

**अथैताः स्रुचः समादत्ते दक्षिणेन स्रुवं जुहूपभृतौ सव्येन स्रुवां प्राशित्रहरणं वेदपरिवासनानीति ।**

एता इत्युपर्युक्तानां स्रुचामा[1]दानकर्मता[2]माह । अथेत्यध्वर्युव्यतिरिक्तकर्त्तारमाह । स चाग्नीध्र एव, समन्त्रकत्वात्प्रतितपनादेः । न चान्य आदत्तेऽन्यः प्रतितपतीति सम्भवति । दक्षिणहस्तेन ग्रहणस्याचारप्राप्तत्वे सति सव्यविधित्सया तदनुवादः । अन्यथा सर्वेषां सव्येन ग्रहणमापद्येत ।

**गार्हपत्ये प्रतितपति 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि (तै० १।१।१०।१-२) ।**

गार्हपत्यग्रहणं नियमार्थम् ।

**अथ स्रुवं सम्मार्ष्टि 'गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहं सम्मार्ज्मि' (तै० १।१।१०।३) इति ।**

वेदपरिवासनैरिति शेषः । अथ द्वैधे विशेषः 'वेदपरिवासनेष्विति । पञ्चधा विभज्य स्रुचः संमृजेदिति बौधायनः । समस्तैरेवा[3]भ्याकारमिति शालिकिः' ( बौ० श्रौ० २०.९ ) इति । स्रुक्संख्यया वेदपरिवासनानां पञ्चधा विभागः । तथा च न विनियुक्तविनियोग इत्येकः पक्षः । शालीकिमते [4]तु 'अभ्याकारम्' (तै० ब्रा० ३।३।१।४) इति ब्राह्मणे श्रवणात् पुनः पुनस्तैरेव सम्मार्जनमिति ।

---

१. स — °मादनीकमतामाहो ।
२. ग — 'कर्मताम्' नास्ति ।
३. ब श्र — 'रेव' इत्यस्यानन्तरम् 'अद्भिः' ।
४. ग भ स — 'तु' नास्ति ।

**त्रिरन्तरतः त्रिर्बाह्यतस्त्रिरेव मूलैर्दण्डं सम्मृज्याद्भिः संस्पृश्य प्रतितप्योत्प्रयच्छति ।**

त्रिरन्तरतः । अग्रैरिति शेषः । सम्मृज्येत्यनुषङ्गः । त्रिर्बाह्यतः । तथैव प्रागपवर्गत्वं प्रत्यगपवर्गत्वञ्च । [1]मूलैर्दण्डं त्रिरेव सम्मृज्येति । दण्डसम्मार्जने प्रत्यगपवर्गत्वं प्रागपवर्गत्वं च[1] बाह्याभ्यन्तरभागापेक्षयानुलोम्याय । तथा च ब्राह्मणम् 'अधस्तात् प्रतीचीम् । दण्डमुत्तमतः' ( तै० ब्रा० ३।३।१।४ ) इत्यादि । अद्भिः संस्पृश्य [2]सम्मृश्य लौकिकोदकस्पर्शनकर्मतामापाद्य, न तु प्रक्षाल्य । उत्प्रयच्छति परिकर्मिणो हस्ते समुद्धृत्य प्रयच्छति, न त्वधः स्थापयति नापि नीचैः प्रयच्छतीत्यर्थः । एवमुत्तरत्रापि ।

**अथ जुहूं [3]सम्मार्ष्टि 'वाचं प्राणं (तै० १।१।१०।४) मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं सम्मार्ज्मि' इति । तथैव सम्मृज्याद्भिः संस्पृश्य प्रतितप्योत्प्रयच्छति । [4]अथोपभृतं सम्मार्ष्टि 'चक्षुः श्रोत्रं ( तै० १।१।१०।५ ) मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं सम्मार्ज्मि' इति । [5]तथैव[5]मुत्प्रयच्छति[4] । अथ ध्रुवां सम्मार्ष्टि 'प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं सम्मार्ज्मि' ( तै० १।१।१०।६ ) इति । तथैवमुत्प्रयच्छति । अथ प्राशित्रहरणं सम्मार्ष्टि 'रूपं वर्णं पशुभ्यो मा निर्मृक्षं वाजिनं त्वा सपत्नसाहं सम्मार्ज्मि इति ।**

द्वैधे विशेषः 'प्राशित्रहरणस्य सम्मार्जन इति सूत्रं बौधायनस्य । तूष्णीं

---

१. इ१— 'मूलैः...वर्गत्वञ्च' नास्ति ।

२. इ१— समृष्य । प ग स— सम्मृष्टम् ।

३. ग स — 'सम्मार्ष्टि' नास्ति ।

४-४. ग— 'अथोपभृतं....प्रयच्छति' नास्ति ।

५. व श्र— 'तथैवम्' इत्यस्यानन्तरम् 'सम्मृज्याद्भिः' ।

सम्मृजेदिति शालिकिः। न सम्मृजेदित्यौपमन्यवः' ( बौ० २०।१० )। अस्मिन् पक्षे न प्रशित्रादानं निष्टपनं चानुपयोगादित्येके। अन्ये तु विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् सम्मार्जननिषेधादन्यथा प्रसक्त्यभावादिडापात्रादिवत्।

**अथैतानि स्रुक्सम्मार्जनान्यद्भिः[1] संस्पृश्य गार्हपत्येऽनुप्रहरति 'दिवः शार्हपत्येऽनुप्रहरति' दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं तेन वयं सहस्रवल्शेन सपत्नं नाशयामि स्वाहा' इति।**

अनुप्रहरतीत्यानुपूर्व्येण प्रहरणमाह। ततश्च प्रस्तरप्रहरणधर्मोऽत्राप्यनुसन्धेयः। अथैतानि अथशब्दोपादानाद्धवनरूपत्वात्, '[2]अनादिष्टेष्वध्वर्युणैव होतव्यम्' (बौ० श्रौ० २४।७) इति कर्मान्तोक्तेश्च अध्वर्युरेव वेदपरिवासनान्यनुप्रहरतीत्येके। अन्ये तु प्रहरणस्य प्रतिपत्तिमात्रत्वात्, सञ्चरे वोत्करे वा निरसनस्याप्युपदेशात् प्रषान्तर्भाविऽप्याग्नीध्र एव कर्तेत्याहुः। द्वैधे तु 'स्रुक्सम्मार्जनानामनुप्रहरण इति सूत्रं शालिकेः। अत्रो ह स्माह बौधायनोऽद्भिरभ्युक्ष्यासंचर उदस्येदुत्करे वा। एवमिध्मसन्नहानि' (बौ० श्रौ० २०।१०) इति। अत्र दामोदरः सूत्रव्याख्यातृभिरभिहितप्रकारेण सञ्चरोत्करयोर्निरसनं विकृतिविषयमाह। न चात्र कल्पे सूत्रे वा ज्ञापकमुपलभमाहे।

**अथाग्रेणोत्करं तृणानि संस्तीर्य तेषु स्रुचः सादयित्वा।**

सम्मार्जनक्रमानुरोधेन [3]सादनक्रम इति याज्ञिकप्रसिद्धिः।

**अथैतां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण सन्नह्यति 'आशासाना**

---

१. व श्र— संस्पर्शय।

२. व श्र— अनादृष्टे ध्व०।

३. इ१— आसादन०।

**सौमनसं प्रजां सौभाग्यं तनम्। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम्' (तै० १।१।१०।७) इति।**

एतां पत्नीमिति। यया सहाहिताग्नयः तामित्यर्थः। [1]तेनोत्तरकालमूढाया पत्नीत्वे सत्यप्यग्न्यन्तरापेक्षया पत्नीत्वे सहाधानाभावादत्राप्रवेशो यथा स्यादिति। अन्तरेण वेद्युत्करावितिं। अन्तरेण वेद्युत्करावितिं। वेद्युत्करमध्यदेशस्य तीर्थत्वं प्राक्प्रतिपादितभाव्यपेक्षया। मुख्यवृत्त्या त्विदानीमेव वेदिकरणानन्तरमेव तीर्थता। अतएवात्रापि 'अन्तरेण वेद्युत्करौ प्रपाद्य' इत्यभिहितम्। प्रपाद्येति। आग्नीध्र-प्रेरितया प्रपादनं गम्यते। अन्यथा स्वतन्त्रप्रवेशेषु प्रपद्येत्येवाक्षत्। जघनेन दक्षिणेन गार्हपत्यमिति। जघनशब्दः पश्चिमदिगुपलक्षकः। तेन गार्हपत्यापेक्षया दक्षिणपश्चि-मायां दिश्युदङ्मुखीमुपवेश्य। योक्त्रेण संनह्यति संनाहयतीत्यर्थः। अतएव पत्नी स्वयमेव संनह्यतीति गम्यते। अन्यथा पत्न्यनेकत्वे समकालं संनहन[2]पक्षानुपत्तेः। मन्त्रलिङ्गाविरोधश्च। 'आशासाना संनह्ये' इति मन्त्रवाक्यार्थः प्रैषवचनवदत्रापि पत्नीविषयमेकवचनमविवक्षितम्। अतएव द्विबहुपत्नीकत्वे ज्येष्ठानुक्रमेणागमनो-पवेशनादीनि। उपवेशनदेशश्च ज्येष्ठापृष्ठभागे कनीयस्या इति, अन्यथा दक्षिण-पश्चिमदेशानुपपत्तेर्न सन्नहनम्। सन्नहनं च पत्नीक्रमाद्युगपदेव पत्नीकर्तृकत्वात्। अत्र 'सुकृताय कम्' इत्यस्यानन्तरम्' युक्तं क्रियाता आशीःकामे युज्यातै' इत्यस्यापि पत्न्या वाचनं ब्राह्मणमाणकम्। तथा च गोपालः 'योक्त्रेण सन्नह्य यजुः स एव 'युक्तं क्रियाता इति वाचयीत' इति।

**अथैनां तिरः पवित्रमप [3]आचामयति 'पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र' संसृज' (तै० १।५।१०।७) इति।**

---

१. ग ख— तेन नोत्तर०। भ— 'तेनोत्तर' नास्ति।

२. ग— °पेक्षा०।

३. ग— आचामति।

यजमानाचमनोक्त एव न्यायोऽत्राप्यनुसन्धेयः। अनेकपत्नीकत्वे तु युगपत्क्रमेण वाचनम्।

**अथैनां गार्हपत्ये समिध आधापयति 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपते०, आदित्य व्रतपते०, व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' इति।**

अत्र आधापयतीति वचनादस्वाहाकार एव पाठः, नाप्युद्देशत्यागः। एवं सर्वत्राधापयतीत्यादिष्विति केचित्। सस्वाहाकार एव पाठो याज्ञिकप्रसिद्धः, अतएव सूत्रे 'प्रस्तरप्रहरणेन [1]स्वाहाकरोति' इत्युक्तम्। अतएव प्रहरणवदाधानेऽपि स्वाहाकारप्रसक्तिरिति। अनेकपत्नीकत्वे समिदाधानं हवनरूपत्वाद् द्रव्यत्यागवाचकवर्तित्वाच्च यजमानकर्तृको हि द्रव्यत्यागः। पत्न्याः साहित्यपक्षेऽन्वयपक्षस्य जागरूकत्वात्। सहत्वेनानन्वयपक्षेऽपि स्वामित्वं यजमानस्यैवेति निर्णयः।

**अथ जघनेन गार्हपत्यमुपसीदति 'सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् (तै० १।१।१०।८)। इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा। अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय। मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्। उताहमस्मि संजया पत्युर्मे श्लोक उत्तमः' इति।**

अत्रापि 'ऊनेऽतिरिक्तं धीयातै' इत्यन्ते जपः पूर्ववदिति। प्रमाणको गोपालश्च 'ऊनेऽतिरिक्तं यजुरत्र लिङ्गात्पत्नीं पुरस्ताज्ज्वलनेक्षणाच्च'।

**अथैनां गार्हपत्यमीक्षयति 'अग्ने गृहपत उप मा ह्वयस्व**

---

१. ग— 'स्वाहा' नास्ति।

**देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीः' इति ।**

अनेकपत्नीकत्वे तु प्राङ्मुखोपवेशनं गार्हपत्यावेक्षणं च क्रमात् समकालं वा ।

[1]अथैनामाज्यमवेक्षयेदिति केचित् । तदनुपपन्नम् । पत्नीसंस्कारत्वादाज्यसंस्कारत्वे तु पत्न्यवेक्षणकृतममेध्यत्वश्रवणमनुपपन्नं स्यात् । उक्तं हि **'अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते । गार्हपत्येऽधिश्रयति मेध्यत्वाय'** (तै० ब्रा० ३ ३।४।२) इति ।

अतः पत्नीसंस्कारत्वात् सर्वाभिरपि क्रमात्कार्यम् । निमील्यावेक्षणं चात्राप्यनुसन्धेयम् । आज्यावेक्षणत्वात् । ईक्षणानन्तरमेव निमीलनम् । न चाग्नीध्रस्यापि मन्त्रजप इति भ्रमितव्यम्, **'वाचयीत'** इति श्रवणात् । पत्न्यसन्निधाने जपत्यागो वा यजमानकर्तृको वेति, द्वैधेऽभिधानात् । तथाहि—**'पत्नीनां'** सन्नहन इति । स ह स्माह बौधायन एकैकामासां सन्नहयेदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति । अत्रो ह स्माह शालीकिः सकृदेवैनाः सर्वाः गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति । अत्रो ह स्माहौपमन्यवः सकृदेवैनाः सन्नहयेत्सकृद्गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति । एकैकामासां [2]सर्वेण सर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः ।

**'ग्रन्थिकरण'** इति । अवाचीनपाशमूर्ध्वं[3]निम्लोचन[4]मित्याचार्ययोः । ऊर्ध्वपाशमवाचीननिम्लोचन[3]मिति दीर्घवात्स्यः । एवमेव हि प्रजाः प्रजायन्त इति ।

**'पत्न्यामविद्यमानायामिति । स ह स्माह बौधायनो यजमानायतन आसीनो यजमान एवैतान् मन्त्रान्निगदेदिति । अत्रो ह स्माह शालीकिः पत्नी-**

---

१. अत्र 'अथैनामाज्यमवेक्षयति—**महीनां पयोऽस्योषधीनां रसो वब्धेन त्वा चक्षुषा वेक्षे सुप्रजास्त्वाय**—(तै० १।१।१०।१२) इति' इति सूत्रपाठोनोद्धृतः ।

२. ग भ— 'सर्वेण' इति पदस्य द्वित्वं नास्ति ।

३. ग— °मूर्ध्वम् । भ — मूर्ध्वे ।

४. व श्र— °निर्मोचन० ।

**संयोजका खल्वेते मन्त्रा दृष्टा भवन्ति । तस्यामविद्यमानायां नैवैनानाद्रियेतेति'** (बौ० श्रौ० २०।१०)।

पत्न्यामविद्यमानायां यजमानेनैव स्वायतने तन्मन्त्रजपः कार्य इत्येकः पक्षः। एतान्मन्त्रान्नाद्रियेत तेषां लोप एवेत्यपरः पक्ष । अत्रेदं विचार्यते-अविद्यमानयानालम्भुकत्वादिना पत्न्यायतनासन्निहितत्वमाहोस्वित् प्रवासादपि, मरणेन वा, अनुद्वाहेन वेति । अविद्यमानायामिति वचनादभावस्य सर्वत्राविशेषादपत्नीकस्याग्निहोत्रसम्बन्धस्तु [1]न्यायस्तावत् [2]स्यात् । आहोस्विदपत्नीकस्याग्निहोत्रसम्बन्धस्याभावादविद्यमानायामित्यसन्निधानपरमिति । तत्रापत्नीकस्याग्निहोत्रसम्बन्ध[2]स्ता[3]वत् कार्य[3] इव प्रतिभाति। तस्याः कर्माङ्गमात्रत्वात्। न ह्येकतराङ्गवैकल्ये प्रधानलोपः । विधिश्च यजमानमेवाधिकरोति । **'ज्योतिष्टोमेन स्वर्गकामो यजेत** ( मा० श्रौ० ९।३।१।१ ) । **अग्निहोत्रं जुहुयात् स्वर्गकामः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'** इत्यादिकः **'तामपरुध्य यजेत'** ( बौ० श्रौ० २९।१० ) इति च। न हि तस्या यजमानसाम्येऽपरुध्य यागो भवति । तन्मन्त्रलोपो[4] वा यजमानेनैव वा जप इति ।

कल्पान्तरकारैरयमेव पक्षो ज्ञापितः। भारद्वाजेन तावत् **'अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कारः'** ( भा० प० १८३ )। अत्रापत्नीकस्याप्यौपासनाग्निहोत्राभ्यां संस्कारं ब्रुवता-अर्धाधानिन उभाभ्यामनाहिताग्नेरौपासनेनैव सर्वाधानिनोऽग्निहोत्रेणैव—इत्यपत्नीकस्याप्यौपासनाग्निहोत्राधिकारो ज्ञापितः । तलवकारकल्पे जैमिनिश्चाह **'आहिताग्नेश्चेत्पूर्वं जाया म्रियेत तां निर्मन्थ्येन दहेत् [5]सन्तपनेन वा'** ( जै० गृ० २।५ ) इति। आश्वलायनोऽपि **'आहार्येणानाहिताग्निम्। पत्नीं चेति'** (आ० श्रौ० ६।१०।९-१०) इति। अत्रानाहिताग्निसाम्यं पत्न्या ब्रुवताग्न्याधाने

---

१. ग भ स— 'न्यायः' नास्ति ।

२-२. भ— 'स्यात् ...सम्बन्धः' नास्ति ।

३-३. इ[1]— 'तावत् कार्यः' नास्ति ।

४. ग भ— °लोपे ।

५. जै० गृ०— सान्तपनेन ।

मन्निहिताया अपि सहत्वेन साहित्येन वान्वयेन यजमानसाम्यमिति द्योतितम्। बह्वृचब्राह्मणमपि **'तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्'** ( ऐ० ब्रा० ७।९ ) इति। शिष्टाचारश्च भगवता दाशरथिना पत्न्याः प्रवासादसन्निधानेऽप्यश्वमेधः कृतः, भीष्मेण त्वनुद्वाहे, विभाण्डकेन तु मृतायामिति। तस्माद[1]पत्नीकस्याग्निहोत्रपक्षो न्यायः, शिष्टादृतश्च।

नैतत् सारम्। अविद्यमानायामित्यस्यानालम्भुकत्वादिना निमित्तेन पत्न्या-यतनासन्निधानेऽपि तद्ग्रामसीमानतिलङ्घनेन सन्निधानार्थत्वात्। तथात्वे चाग्नीनां लौकिकत्वेन पुनराधानश्रवणात्— **'उभौ त्वेव निष्क्रामतो ग्रामान्ते ग्रामसीमान्ते** [2]**वाग्निहोत्रमेव लुप्येताविकृतमग्न्याधेयं कुर्वीत'** ( बौ० श्रौ० २९।९ ) इति। यजमानप्रवासेऽपि पत्नीसन्निधानेऽग्नीनां लौकिकत्वाभावश्च श्रूयते—**'प्रोषिते यजमाने तु पत्न्यपि प्रवसेद्यदि। हुत्वा वास्तोष्पतीयं स्यात् प्रवसेदग्निभिः सह'** इति।

न च युक्तं भगवद्दाशरथिभीष्माद्यनुष्ठानश्रवणादस्मादृशैरपि तथानुष्ठातुम्। तेषां तपः प्रभावविशेषात्प्रत्यवायानुपपत्तेः। युगान्तरव्यवस्थया वा तथानुष्ठानादिति। श्रूयते च—**'क्षौमे वसानौ जायापती अग्निमादधीयाताम्'** ( भा० श्रौ० ५।२।३. आप० श्रौ० ५।४।१० )' इति। **'नैकयापि विना कार्यमाधानं भार्यया द्विजैः'** इति। **'आहरेच्च ततो दारानग्नींश्चैवाविलम्बयन्'** इति च। सूत्रं च **'पत्नीवदस्याग्निहोत्रं भवति'** (आप० श्रौ० ६।५।१) इति। न च वाच्यम्—अपरुध्ययागश्रवणात्, पत्नीमन्त्राणां च लोपो वा यजमानजपो वेति दर्शनात्, पत्न्या अतन्त्रत्वमिति। यजमानप्रवासे यजमानमन्त्रेष्वपि समानत्वात् [3]पुत्रान्तेवासिप्रतिनिधियोजनस्योक्त-त्वाच्चेति। अलमति विस्तरेण। प्रकृतमनुसरामः।

## अथैनद्गार्हपत्येऽधिश्रयति 'तेजोऽसि' (तै० १।१।१०।१३) इति।

---

१. ग भ— °दपत्नीकाग्नि०। स— °दापत्नीकाग्नि०।

२. ब श्र— वा वसतोऽग्नि०।

३. ग— पुत्रोऽन्ते।

एनत् पत्न्यवेक्षितमाज्यम् ।

**समिधमुपयत्य प्राङ् हरति 'तेजोऽनुप्रेहि' (तै० १।१।१०।१४) इति ।**

समिधमुपयत्य समिधमाज्यस्थाल्या अधो निधाय।

**अथैनदाहवनीयेऽधिश्रयति 'अग्निस्ते तेजो मा विनैत्' (तै० १।१।१०।१५) इति ।**

एनत् आहृतमाज्यम् । तथा च द्वैधे—'अथैनमाज्यमवेक्षयतीति । सूत्रं शालीकेः । अत्रो ह स्माह बौधायनः पत्न्या तदवेक्षितमुपयच्छेत्—तेजोऽसि-इति । [1]अथैनच्छकलेनोपयत्य हरेत् तेजोऽनुप्रेहि-इति । अथैनदाहवनीयेऽधिश्रयति अग्निस्ते तेजो मा विनैत्-इति' (बौ० श्रौ० २०।१०) पूर्वकल्पसमानार्थो द्वैधे[2] ।

**अत्रैतां समिधं मध्यत आहवनीयस्याभ्यादधाति ।**

अत्र समिदाधानमन्त्रकम्। कल्पसारे तु स्वाहाकारमध्यत्र युक्तम् । 'स्वाहाकृतिः स्यात् समिधस्तु मन्त्रे'[1] इति ।

**अथैनदग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्द्धे वेद्यै निधाय यजमानमवेक्षयति । 'निमीलयावेक्षेत' (तै० ३।३।५।२) इति ब्राह्मणम् ।**

एनत् आहवनीयाधिश्रितमाज्यम् । अग्रेण प्रोक्षणीः प्रोक्षण्यग्रेण पर्याहृत्य हरणं स्फ्यस्य वर्त्म सादनाय । एतदन्तमाग्नीध्रकर्तृकं प्रैषार्थस्यैतावति समाप्ते । अतएव निधायेति ल्यब्वचनस्य आस्त इति पूरणम् । अन्यथा वेक्षयितृत्वापेक्षया समानकर्तृ-

---

१-१. भ— 'अथैनच्छ....मन्त्रे-इति' नास्ति ।

२. ग भ स— द्वैधः ।

कत्वप्रसङ्गात्। अतएव, अवेक्षयतीति निमित्तकर्त्ताध्वर्युः। साक्षात्कर्त्ता तु यजमानः। एतदर्थमेव ब्राह्मणोदाहरणमिति। अतएवाध्वर्युयजमानयोरुभयोरपि निमील्यावेक्षणं* सिध्यति। अन्यथा याजमानप्रकरण एव ब्रूयात्। अध्वर्योर्निमित्तकर्तृतया 'आज्यमसि' (तै० १।६।१।२) इत्यादिमन्त्रवचनमपि गम्यते।

**अथैनद्यथाहृतं प्रति पर्याहृत्योत्तरार्द्धे वेद्यै निधायाध्वर्युरवेक्षते 'अग्नेर्जिह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव' (तै० १।१।१०।१६) इति।**

यथाहृतमित्यनेन वेद्युत्तरार्धसादनेऽपि स्फ्यस्य वर्त्मनीति गम्यते। निमील्यावेक्षणं च तस्याभिघाररूपत्वात्। तथा च कर्मान्ते 'किमभिघारितं नु खल्वाज्यं भवतीति। सत्याभिघारित[1]मित्येव[1] ब्रूयात्। विज्ञायते च सत्येन त्वाभिघारयामि तस्य ते भक्षीयेति' (बौ० श्रौ० २४।२७)।

**अथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति 'शुक्रमसि ज्योतिरसि तेजोऽसि' (तै० १।१।१०।१७-१६) इति।**

एनदवेक्षितमाज्यं [2]पुनराहारं† पुनराहृत्याहरणे पौनः पुन्यवचनात्। तदनुषड्गिप्रेरणस्यापि तादृक्त्वमवगम्यते। ततश्च प्रेरणाहरणयोर्न[3]विपर्ययः। एवं त्रिरुत्पुनाति। उत्पवनं पवित्रसाध्यस्यैवंविधस्य[4] कर्मणो नामधेयम्। उत्पवनत्रये-

---

१-१ घ— 'मित्येव' त्रुटितम्।

२. ग भ— 'पुनराहारम्' नास्ति।

३. ग भ स— र्योर्वा।

४. ग भ स— °विध।

---

*निमील्यावेक्षणम् = निमीलनावेक्षणे मन्त्रात्पूर्वं कृत्वा पश्चादाज्यमसीत्यनुच्छ्वसन्तो मन्त्रान्ते चावेक्षणं पुनः पत्न्यवेक्षणेऽपि तुल्यम्— इ१।

†पुनराहारम् = पुरत आरभ्य पश्चात् कृत्वा पुरतः समाप्ति— इ१।

ऽनुद्यच्छता क्रियमाणेऽभ्याहारवृत्तित्रयमपेक्ष्य 'शुक्रमसि०' इत्यादिमन्त्रविनियोगः एकमन्त्रत्वपक्षे तन्मन्त्रोच्चारणसमकालमेव त्रिरुत्पवनमिति ।

**अथ प्रोक्षणीरुत्पुनाति 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण, वसोः सूर्यस्य रश्मिभिः' (तै० १।१।१०।२०) इति पच्छः ।**

उदगग्राभ्यामेव [1]पवित्राभ्यामिति । द्वैधे विशेषः 'अथैनदुद्धृत्योत्तरेण प्रोक्षणीः सादयित्वावेक्षितवोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीरिति । आज्यस्यावेक्षण इति सूत्रं बौधायनस्य । सर्वैरेवावेक्षितमाज्यमुत्पुनुयादिति शालीकिः' (बौ० श्रौ० २०।१०) इति । अवेक्षितावेक्षितकर्त्ताध्वर्युः । आज्यवतीभ्याम् आज्यलिप्ताभ्यां पवित्राभ्याम् । सर्वैरेव मन्त्रैः प्रोक्षण्युत्पवनार्थैरप्याज्यमुत्पुनुयादित्यर्थः । अस्मिन् पक्षे प्रोक्षण्युत्पवनममन्त्रकम् ।

**प्रोक्षणीषु पवित्रेऽवधायादत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णीते 'शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' (तै० १।१।१०।२२) इति । एतेन यजुषा चतुर्गृहीतं गृहीत्वा सम्मृश्योत्प्रयच्छति । अथ ध्रुवायां गृह्णीते 'ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' (तै० १।१।१०।२२) इति । एतेन यजुषाष्टगृहीतं गृहीत्वा भूयसो ग्रहान् गृह्णानः कनीय आज्यं गृह्णीते तथैव सम्मृश्योत्प्रयच्छति । अथ ध्रुवायां गृह्णीते 'अर्चिस्त्वाऽर्चिषि धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' (तै० १।१।१०।२३) इति । एतेन यजुषा चतुर्गृहीतं गृहीत्वाभिपूर्य तथैव सम्मृश्योत्प्रयच्छति ।**

---

१. भ— 'पवित्राभ्यामिति' नास्ति ।

उपभृत्यष्टकृत्वो ग्रहणे कनीय इति वचनं जुह्वाज्यसाम्याय जुह्वाज्यादिषु न्यूनत्वाय त्वा । जुह्वाधार[1]धारणमधिकम् । औपभृतं तु प्रयाजानुयाजार्थमेवेति । सम्मृश्योत्प्रयच्छति । सम्मर्शनं दक्षिणहस्तेनादृष्टार्थम् । उत्प्रयच्छति उद्धृत्य प्रयच्छति । अन्यस्य हस्त इत्यभियुक्ताः । केचित् प्रस्तरयजमानयोः साम्यविवक्षया प्रस्तरासादनीयानामाज्य[2]पूर्णानां स्रुचां [3]यजमानहस्ते प्रदानमिच्छन्ति[3] । एवं च जुहूमात्रस्य प्रस्तरासादनपक्षो न स्यात् । सूत्रे च 'नोत्कर आज्यान् सादयति' इति निषेधादुत्तरदिशासादनमेव न्याय्यम् । आचार्यश्च विशेषेणोत्प्रयच्छतीत्याह सम्मार्जनवत् । [4]अभियुक्ताश्चान्यहस्त इत्याहुः[4] । न चान्यशब्दो यजमानमाचष्टे । तथात्वे वा [5]कथं स्रुग्धारणव्यापृतो यजमानः प्रस्तरं बिभृयात् । तथात्वे वा कथं यजमानायेति पक्षः प्रसक्तिमासादयेत्, तस्माद्यजमानादन्यस्यैव हस्ते प्रयच्छतीति युक्तम् ।

**द्वैधे विशेषः 'आज्यग्रहाणां ग्रहण इति । स स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात् पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानोऽनुमन्त्रयीतेति[6] । [7]अत्रो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात् पौरोडाशिकैश्च याजमानैश्च । न यजमानैर्यजमानोऽनुमन्त्रयीतेति[7] । अत्रो ह स्माहौपमन्यवो यथाविधि पौरोडाशिका मन्त्रा [8]नाभिनिवर्तन्त एवमेवापि याजमाना मन्त्रा [9]नाभिनिवर्तन्त इति'** (बौ० श्रौ० २०।१०) । पौरोडाशिकाः 'शुक्रं त्वा' इत्यादयः । याजमानाः 'पञ्चानां त्वा' इत्यादयः एतैरुभयैरप्यध्वर्युराज्यं गृह्णीयादित्येकः पक्षः । अमुमेव पक्षमभिसन्धाय कर्मान्तपौरोडाशिकप्रकरण एव पञ्चानां

---

१. ग भ स — जुह्वा० ।

२. इ१ भ — °मासाम्० ।

३-३. भ — यजमान इत्याहुः ।

४-४. प ग स — अभियुक्तश्चान्यहस्त इत्याह ।

५. भ — 'वा' इत्यस्यानन्तरम् 'तम्' ।

६. ब श्र — °मन्त्रयेतेति ।

७-७. ब श्र — 'अत्रो ह....मन्त्रयीतेति' नास्ति । ७ ब श्र — °मन्त्रयेतेति ।

८. ब श्र — नाभिवर्तन्त० ।

९. त्र — नाभिनिवर्तेरन् । श्र — नाभिवर्तेरन् ।

त्वेत्यादयो व्याख्याताः । तथा हि—'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामीत्यनुदिशं वाताः । विष्वग्वात एवैषां पञ्चमो भवति । पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामीति शिशिरावत्र समासं गच्छतः । पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामीतीयमेवासामूर्ध्वा दिक् पञ्चमी भवति । पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्माय गृह्णामीति । देवा मनुष्या असुरा राक्षसाः । गन्धर्वा एवैषां पञ्चमा भवन्ति । चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामीत्यमेवैष आकाशश्चरुः पञ्चबिलो भवति । दिशोऽस्य पञ्चबिलानि भवन्ति वायुर्मेक्षणमिति । [1]अत्राप्युदाहरन्ति संवत्सर एवापि चरुः पञ्चबिलो भवत्यतवोऽस्य बिलानि भवन्ति वायुर्मेक्षणमिति[1]' ( बौ० श्रौ० २४।२७ ) ।

अत्राज्यग्रहणे पञ्चावत्तिना[2]मपि चतुर्ग्रहणमेव । कामनाविशेषात्तु पञ्चग्रहणं सर्वेषामविशिष्टम् । तथा च सूत्रम्—'पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः । दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके' ( आप० श्रौ० २।७।५-६) [2]इति । तद्भाष्यम्—'पशुकामस्य वा अकामस्य वा' ( आप० श्रौ० २।७।५-६) धूर्तस्वामिभाष्ये) इति । अत्र श्रीरामस्वामी 'पशुकामस्य वा अकामस्य वेति । अस्यार्थः—पशुकामस्य पञ्चगृहीतमित्येतावता काम्यपक्षे सिद्धे विकल्पनिर्देशात् कामनारहितस्यापि पञ्चगृहीतं लभ्यते । चतुरवत्तिनो[3]ऽपि यथाप्रकृतीतरयोरित्यस्याभिप्रायः । पञ्चगृहीतमितरयोरित्यादि पञ्चावत्तिनां[4] वक्ष्यमाणत्वादत्रापि [5]प्रसज्जत इति शङ्का मा भूदिति' ( आप० श्रौ० २।७।५-६, रामाग्निचिद्वृत्तौ ) । तदेतदन्यैः सूत्रव्याख्यातृभिः प्रत्याख्यातम् । पशुकामस्य वेत्यादि । 'यथाप्रकृति चतुरष्टकृत्वश्चेत्यर्थः । वा शब्दः पूर्वविधिविकल्पार्थः पक्षव्यावृत्त्यर्थो वा' (द० प्र० सू० टी०, पृ० २८२) । दशगृहीतमित्यादि । 'नायं कल्पः काम्येन[6]

---

१-१. भ— 'अत्राप्यु ...मेक्षणमिति' नास्ति ।
२-२. ग भ— 'इति' नास्ति । ४ स— °र्वतिना ।
३. स— °र्वतिनो० ।
४. स— °र्वतिनाम् ।
५. द० प्र०—'युज्यते' ।
६. ग स— काम्ये स— 'काम्ये' इत्यस्यानन्तरम् 'पूर्वेण विकल्प्यते किन्तु पूर्वतरेण' ।

नित्येन। स [1]चायं पञ्चावत्तिविषय इति केचित् तदयुक्तं त्रिः पञ्चावत्तिन इत्यादिवद्विशेषवचनात् । आज्यभागप्रभृत्यवदानविधिष्वेव तद्वचनाच्च। तस्मादविशेषेण सर्वविषय एवायं विकल्पो युक्तः' (द० प्र० सू० दी०, पृ० २८२)।

एवं सति श्रीरामस्वाम्यनुसारेण कल्पसारे यदुक्तं तदपि वार्तिककारोक्तन्यायेन प्रत्याख्यातं वेदितव्यम् । तथाहि—'**निर्वापमारभ्य पञ्चकृत्वः पञ्चावदानस्य भवन्ति पञ्च। [2]निर्वापणावापघृतग्रहावदानानि सेडानि वदन्ति तानि**'। अत्र घृतग्रहस्य पृथक् परिगणनादेव निर्वापादिषु नान्तर्भावः सिद्धः। तथा च, पञ्चवत्तस्य प्रक्रमण इत्युपक्रम्य[2] [3]निर्वापावदानप्रदानचातुष्प्राश्यानां चतुर्णामेव[3] द्वैधोक्तानां पञ्चावदानधर्मयुक्तानामुपलम्भाद् घृतग्रहस्यापि[4] तदतिरिक्तस्य तद्धर्मवत्तया गणने किं मूलमिति चिन्त्यम्।

**अत्र प्रयोगक्रमः—**

आग्नीध्रो दक्षिणहस्तेन स्रुवं जुहूपभृतौ, सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनान्यादाय जघनेन गार्हपत्यं प्राङ्मुख उपविश्य गार्हपत्ये प्रतितपति 'प्रत्युष्टं०' इति। सर्वेषां सम्भूय सकृन्निष्टपनम्। गार्हपत्यस्योत्तरतः प्राङ्मुख उपविश्य वेदाग्रेण पाणिमावेष्ट्य, तदग्रेण स्रुवबिलाभ्यन्तरं प्रागपवर्गं त्रिः सम्मृज्य प्रत्यग्बिलं न्यग्गृहीत्वा त्रिरेव बाह्यतः प्रत्यगपवर्गं प्रत्यग्दण्डं [5]गृहीत्वाधस्तान्मूलैः प्रत्यगपवर्गं त्रिः सम्मृज्य, दण्डोपरिभागमपि प्रागपवर्गं मूलैरेवं त्रिः सम्मृज्य दक्षिणहस्तेनाद्भिः प्रोक्ष्य प्रताप्योत्तरतः स्थितपरिकर्मिहस्ते प्रयच्छन्ति। अयमेव क्रमो जुहूपभृत[6]ध्रुवाप्राशित्रहरणा-

---

१. ग— एवायम्। स— वायम्।

२-२. भ— 'निर्वापणा...प्रक्रम्य' नास्ति।

३-३. भ— निर्वापणावापघृतग्रहापादानप्रदानपरिचातुर्प्राश्यानां चतुर्णामेव निर्वापवद्०।

४. द१— °ग्रहणस्यापि।

५. ग भ स— °दण्डे।

६. प— 'जुहूपभृद्०' इति पाठ स्यात्।

नाम् । सम्मार्जनेऽपि क्रमान्मन्त्रा—**'गोष्ठं'** [1]इति स्रुवस्य[1] **'वाचं०'** इति जुह्वाः, **चक्षुः०** [2]इत्युपभृतः, **प्रजां०** [2]इति ध्रुवायाः, **'रूपं वर्णं०'** [2]इति प्राशित्रहरणस्य।

सम्मार्जनतृणान्यद्भिः प्रोक्ष्य विस्रस्याऽध्वर्युराग्नीध्रो वा गार्हपत्येऽन्वग्रं प्रहरति **'दिवः शिल्प०'** इति। **'प्रजापतय इदं न मम'** इति यजमान आह। न्यासपक्षेऽपि अग्रेणोत्करं दर्भान् संस्तीर्य तेषु प्रागग्राण्युत्तानानि यथासम्मार्गं स्रुवादीनि सादयति। आग्नीध्रः वेद्युत्करावन्तरेण प्रपाद्य गार्हपत्यस्य पश्चिम-दक्षिणदेश ऊर्ध्वज्ञुमुदङ्मुखीमासीनां पत्नीमन्यतरतः पाशेण योक्त्रेण प्रदक्षिणमभ्यन्तरं वाससः सन्नह्यति। उत्तरेण नाभिग्रन्थिं निष्टर्क्यं कृत्वा प्रत्यूह्य, दक्षिणेन नाभिमवाचीनपाशमूर्ध्वं निम्लोचनं बद्ध्वा वाचयति—**'आशासाना०'** इति। पत्न्याः तिरःपवित्रमाचमनं समिधादानं यजमानवद् गार्हपत्ये। उद्देशत्यागं यजमानः कुर्यात्। पत्न्याः प्रागग्न्याधेयान्मन्त्राणामध्ययनम्। गार्हपत्यस्य पश्चात् पत्नी तृणं निरस्य अप उपस्पृश्य मन्त्रेणोपसीदति **'सुप्रजसस्त्वा०'** इति। पत्नीं गार्हपत्यमीक्षयति **'अग्ने गृहपत०'** इति। आग्नीध्र आज्यस्थालीमुद्धृत्याज्यमवेक्षयति **'महीनां०'** इति। पत्न्यवेक्षितमाज्यं गार्हपत्येऽधिश्रयति **'अग्निस्ते तेजो०'** इति। स्वाहाकारेण समिधमाहवनीयेऽभ्यादधाति। आज्यमग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्द्धे स्फ्यस्य लेखा [3]निधाय यजमानमाज्यमवेक्षयति **'आज्यमसि०'** इति। अथैनद्यथाहृतं पर्याहृत्योत्तरार्द्धे वेद्ये स्फ्यस्य लेखायां[3] निधायाध्वर्युरवेक्षते **'अग्नेर्जिह्वा०'** इति। अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति **'शुक्रमसि०'** इति। आज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीः त्रिरुत्पुनाति **'देवो वः०'** इति पच्छः। प्रोक्षणीषु पवित्रेऽवधायादत्ते दक्षिणेन स्रुवं सव्येन जुहूम्। अन्तर्वेद्युदगग्रे वेदे प्रतिष्ठाप्य तस्यामाज्यं गृह्णाति।

ब्रह्मैतदारभ्यासादनाद्वाचंयमो भवति। **'शुक्रं त्वा०'** इति चतुर्जुह्वां गृह्णाति। प्रतिग्रहणं मन्त्रावृत्तिः। यजमानो गृहीतं [4]गृहीतमनुमन्त्रयते—**'पञ्चानां त्वा०'** इति

---

१-१. ग स— 'इति स्रुवस्य' नास्ति।

२-२. ग स — 'इति' नास्ति।

३-३. ग स — 'निधाय''''लेखायाम्' नास्ति।

४. ग स— ग्रहण०। स— 'गृहीतम्' नास्ति।

प्रथमम्, '**पञ्चानां त्वर्तूनां०**' इति द्वितीयम्, '**पञ्चानां त्वा दिशां०**' इति तृतीयम्, '**पञ्चानां त्वा पञ्चजनानां०**' इति चतुर्थम्। अध्वर्युर्जुहूं सम्मृज्योत्तरतः परिकर्मिहस्ते प्रयच्छति। सोऽपि पूर्वसादितस्थाने सादयति। अथोपभृतं वेदे प्रतिष्ठाप्य तस्यां '**ज्योतिस्त्वा०**' इति प्रतिग्रहणमावृत्याल्पशोऽष्टकृत्वो गृह्णाति गृहीतं यजमानोऽनुमन्त्रयते '**चरोस्त्वा०**' इति। '**ब्रह्मणस्त्वाय तेजसे०। क्षत्रस्य त्वौजसे०। विशे त्वा०**'। **सुवीर्याय त्वा०। सुप्रजास्त्वाय त्वा०। रायस्पोषाय त्वा०। ब्रह्मवर्चसे त्वा०**' ( तै० १।६।१।७-१४ )। अध्वर्युः तथैव [1]सम्मृश्य प्रयच्छति। सोऽप्युत्तरेण जुहूमासादयति। ध्रुवां वेदे प्रतिष्ठाप्य '**अर्चिस्त्वा०**' इति। प्रतिग्रहणमावृत्या चतुर्गृह्णाति। गृहीतं यजमानोऽनुमन्त्रयते '**भूरस्माकं हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामि। कामाय त्वा गृह्णामि**' (तै० १।६।१।१५-१६)। अध्वर्युः पञ्चमं तूष्णीमाज्यस्थाल्या ध्रुवामभिपूरयति तां यष्टाऽनुमन्त्रयते '**कामाय त्वा गृह्णामि**' इति। तथैव सम्मृश्योत्प्रयच्छति। तां परिकर्म्युत्तरेणोपभृतं सादयति।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने दशमोध्यायः।

---

१. ग स— सम्मृज्य।

## एकादशोऽध्यायः

**अथैतामाज्यस्थालीं स्रुवां जघनेन वेद्यै निधाय प्रोक्षणीरुन्महयन्नुपोत्तिष्ठति 'आपो देवीरग्रेपुवो०' (तै० १।१।५।२) इति ।**

एतामिति प्रकृतामाज्यस्थालीं [1]स्रुवां वेद्या जघनेन विशये तदभावेऽग्रेण गार्हपत्यमित्यर्थः । उन्महयन्निति व्याख्यातम् ।

**अद्भिरेवापः प्रोक्षति 'प्रोक्षिताः स्थ प्रोक्षिताः स्थ' इति त्रिः ।**

व्याख्यातम् ।

**अथेध्मं विस्रस्य प्रोक्षति 'कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा' (तै० १।१।११।१) इति ।**

इध्मविस्रंसनं समिधामसम्बन्धार्थं तथा सति सर्वाः समिधः प्रोक्षिताः स्युरिति । [2]ल्यब्वचनादध्वर्युरेव विस्रंसनकर्तेति गम्यते ।

**वेदिं प्रोक्षति 'वेदिरसि बर्हिषे त्वा स्वाहा' (तै० १।१।११।२) इति ।**

प्रतीचीमारभ्य प्रागपवर्गं यथाहवनीये विप्रुषो न पतेयुरिति ।

---

१. ग भ स— 'स्रुवाम्' नास्ति ।

२. ग भ— कल्प० ।

**बर्हिः प्रोक्षति 'बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा' (तै० १।१।११।३) इति ।**

मूलादारभ्याग्रात् । द्वैधे विशेषः—'इध्माबर्हिषः प्रोक्षण इति । त्रिस्त्रिरेकैकं प्रोक्षयेदिति बौधायनः । सकृत् सकृदिति शालीकिः' (बौ० श्रौ० २०।१०) इति ।

**आहरन्त्वेतद्बर्हिरन्तरेण प्रणीताश्चाहवनीयं च ।**

बहुवचनेनाहरणस्य बहुकर्तृकत्वमाह । इध्मादुत्तरबर्हिरासादनपक्षे तदग्रेणाहरणमित्यभियुक्ताः ।

**तदन्तर्वेदि पुरोग्रन्थ्याः साद्य प्रोक्षति 'दिवे त्वा' (तै० १।१।११।४) इत्यग्राणि, 'अन्तरिक्षाय त्वा' (तै० १।१।११।५) इति मध्यानि, 'पृथिव्यै त्वा' (तै० १।१।११।५) इति मूलानि ।**

पुरोग्रन्थीति वचनादूर्ध्वाग्रमासादनं गम्यते । द्वैधे विशेषः—'[1]बर्हिःप्रोक्षण इति सूत्रं शालीकेः । अत्रो ह स्माह बौधायनः तिष्ठन् दिवे त्वा-इत्यग्राणि प्रोक्षेत्, प्रह्वः अन्तरिक्षाय त्वा मध्यानि, उपविश्य पृथिव्यैत्वा इति मूलानि' (बौ० श्रौ० २०।११) । औत्सर्गिकमुपविश्य प्रोक्षणं शालीकेर्मतम् ।

**सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्य ।**

पुरस्तात् स्थितं ग्रन्थि स्रुकसहितेन हस्तेन प्रत्यञ्चं प्रत्यङ्मुखं प्रत्युक्ष्य । प्रादक्षिण्येन प्रत्यङ्मुखत्वं सुग्घस्तयोः स्रुचैव निनयनमिति गम्यते ।

**अतिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरायै श्रोणेः 'स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत' (तै० १।१।११।७) इति ।**

---

१. ब भ्र— बर्हिषः प्रोक्षण० ।

अत्र प्रोक्षणीनिनयने प्राचीनावीतं केचिदिच्छन्ति पितृसम्बन्धात्। **'दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि'** ( बौ० श्रौ० २।२ ) इति परिभाषोक्तेः। एतदपरे न क्षमन्ते। स्वाध्यायब्राह्मणे **'यज्ञोपवीतीत्येवाधीयीत याजयेद्यजेत[1] यज्ञस्य'** ( तै० आ० २।१ ) इति वचनात् सर्वत्रोपवीतत्वे सिद्धे दर्शपूर्णमासप्रकरणे पुन[2]र्विधानं बाधकबाधनार्थम्। तच्च बाधकं परिभाषाप्राप्तं पित्र्येषु प्राचीनावीतत्वं तदनेन **'उपव्ययते'** ( तै० २।५।११।२ ) इति दर्शपूर्णमासप्रकरणे विधानेन बाध्यते तथैव च[3] तद्विकारेष्विति। अतो दर्शपूर्णमासतद्विकारेषु वचनादृते प्राचीनावीतत्वं न[4] कर्त्तव्यम्।

अग्निहोत्रे **'दक्षिणतः प्राचीनावीती'** (बौ० श्रौ० ३।६) इति वचनं सिद्धानुवाद इति। केचित्तु प्रोक्षणीनिनयनस्य पौर्णमास्यां पितृयज्ञस्थानीयत्वमिति तत्र वाचनिकतया तद्वदत्रापि वाचनिकत्वं प्राचीनावीतस्येति तथात्वमिच्छन्ति। यदुक्तं पौर्णमास्यां कर्मान्ते **'क्व खलु [5]पौर्णमास्यां पितृभ्यो दीयत इति। यदेवैतच्छ्रोण्यां[6] निनयति'** (बौ० श्रौ० २४।२७) इति। द्वैधे च **'सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्यातिशिष्टाः प्रोक्षणीर्निनयेत्[7] दक्षिणायै श्रोणेरोत्तरायै श्रोणेः—स्वधा पितृभ्यः इति'** (बौ० श्रौ० २०।११)।

## उदूह्य प्रोक्षणीधानम्।

द्वैधे—**'स्रुच उदूहन इति। अग्रेणात्मानमुदीचीमुदूहेदिति बौधायनः। जघनेनात्मानमुदीचीमुदूहेदिति शालीकिः'** (बौ० श्रौ० २०।११) इति।

---

१. इ१— 'यजेत' इत्यस्यानन्तरम् 'च'।

२. इ१— 'पुनः' इत्यस्यानन्तरम् 'उपव्ययते'। ए— 'पुनः' इत्यस्यानन्तरम् 'उपव्ययत इति'।

३. ग भ स— 'च' नास्ति।

४. ग भ— 'न' नास्ति।

५. इ१— पूर्णमास्याम्।

६. ब श्र— °श्रोण्योः।

७. ब श्र— नयति।

**बर्हिर्विस्त्रस्य पुरस्तात् प्रस्तरं गृह्णाति 'विष्णोः स्तूपोऽसि' (तै० १।१।११।८) इति ।**

पुरस्तात् पूर्वदिगाभिमुख्येन, तथा च सूत्रम्—'**कर्षन्निवाहवनीयं प्रतिप्रस्तरमुपादत्ते**[1]' ( आप० श्रौ० २।८।५ ) इति । अनेन सूत्रोक्ताः कर्षणनियमविशेषा अप्युपलक्षिताः ।

**तस्मिन् पवित्रे अपि सृजति 'यजमाने प्राणापानौ दधामि' इति वा तूष्णीं वा ।**

द्वैधे च '**प्रस्तरे पवित्रे अपि सृजति यजमाने प्राणापानौ दधामि इति वा तूष्णीं वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीके**' (बौ० श्रौ० २०।११) । अपि सृजति[2] निक्षिपति, उपगूहतीत्यर्थः ।

**तं यजमानाय वा ब्रह्मणे वा प्रयच्छति ।**

व्यवस्थितोऽयं विकल्पो यत्र ब्रह्मयजमानयो सन्निधिः । यथा—सर्वतोमुखे स्वायतने यजमानस्तिष्ठति[3] ब्रह्माणस्तु स्वस्वायतनेषु । तद्विषयं [4]ब्रह्महस्ते प्रदानम्[4] । अनेन गृहीताज्यानां स्रुचां यजमानहस्ते प्रदानवचनमप्यसमञ्जसं वेदितव्यम् । द्वैधे च '**तां यजमानाय वा ब्रह्मणे वा प्रयच्छतीति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य**' (बौ० श्रौ० २०।११) इति ।

**अथैतानि बर्हिः सन्नहनान्यायातयति[5] दक्षिणायै श्रोणेः आ उत्तरादंसात् ।**

---

१. आप० श्रौ०— अपादत्ते ।

२. ग भ स— निक्षिपति' नास्ति ।

३. 'ब्रह्मादयः' इति पाठः स्यात् ।

४-४. इ१—हस्ते दानम् ।

५. इ१ ग भ— °हनान्यातयति ।

सन्नहानीति बहुवचनेन बर्हिःसन्नहनस्य [1]विस्रस्यास्तरणं गम्यते। द्वैधे विशेषः **'शुल्बस्यायतन इति सूत्रं बौधायनस्य। शुल्बं विस्रस्य दक्षिणे वेद्यन्ते स्तृणीयादिति शालीकिः'** (बौ० श्रौ० २०।११)।

**अथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति '[2]देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः' (तै० १।१।११।६) इति।**

दक्षिणे वेद्यन्ते स्तरणमुपक्रम्योत्तरोद्वेद्यन्तात् स्तृणातीत्यर्थः। प्रतिमुष्टि मन्त्रावृत्तिर्बर्हिसंस्कारत्वात्। अतएव मुष्टिमिति द्वितीयानिर्देशः। दक्षिणे वेद्यन्त इत्यधिकरणनिर्देशश्च। वेदिसंस्कारत्वे तु सकृदेव मन्त्रः। तं पक्षमङ्गीकृत्योक्तम्—

**[3]तां बहुलां पुरस्तात्प्रतीचीं त्रिवृतमनतिदृश्नं स्तृणाति[3]।**

तां बहुलामित्यादि। तां वेदिं बहुलां बहुभिर्दर्भस्तम्बैः स्तीर्यमाणत्वात्। पुरस्तात् प्रतीचीं प्राचीमुपक्रम्य प्रत्यगपवर्गस्तरणवतीम्। त्रिवृतमनतिदृश्न[4]मिति च क्रियाविशेषणम्। त्रिरावृत्याद्यन्तदर्शनाभावो यथा भवति तथा स्तृणातीत्यर्थः। अत्र प्रतिमुष्टिं मूलानां मुष्ट्यन्तराग्रैराच्छादनं गम्यते। महापितृयज्ञे नाच्छादनविधानात्। तथा न वक्ष्यामः। द्वैधे विशेषः **'वेद्यै स्तरण इति सूत्रं बौधायनस्य। अत एवैनां प्राचीं धातुशः स्तृणीयादिति शालीकिः'** (बौ० श्रौ० २०।११) इति। धातुशब्दः सन्धिवचनो धारणाहेतुत्वात्। प्रागपवर्गत्वेऽप्यग्रैर्मूलाच्छादनम्।

**अथ प्रस्तरपाणिः प्राङभिसृत्य परिधीन् परिदधाति 'गन्धर्वोऽसि विश्वावसुर्विश्वस्माद्दीषतो यजमानस्य परिधिरिड ईडितः' (तै० १।१।११।१०) इति मध्यमम्, 'इन्द्रस्य**

---

१. ग भ— पवित्रस्यास्तरणम्।

२. तै० सं०— 'देवबर्हिः' नास्ति। 'देवबर्हि' इत्येतत् पदं शाखान्तरानुसारेण पूर्यते।

३-३. सूत्रपाठोऽयं भाष्यानुरोधेन संयोज्यते।

४. इ१— °दृश्य। ग भ— °दृश०।

**बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः' (तै० १।१।११।११) इति दक्षिणम्, 'मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः' (तै० १।१।११।१२) इत्युत्तरम्।**

[1]ब्रह्मणो यजमानस्य वा हस्ते स्थितं प्रस्तरं यथाहृतमानीतं पाणौ धारयन् परिधीन् परिदधातीत्यन्वयः। प्रागभिसर्पणं प्रस्तरग्रहणात् पुरस्तात् पश्चाद्वा भवति। अन्यथा प्रस्तरग्रहणव्यापृतेन पाणिना परिधिपरिधानं विहितं स्यात्। द्वैधे विशेषः **'परिधीनां परिधान इति। स स्माह बौधायनोऽध्यस्येद् दक्षिणमुपोहेदुत्तरमिति। अनीकसंस्पृष्टामेवैनान् परिदध्यादिति शालीकिः'** (बौ० श्रौ० २०।११) इति। दक्षिणं परिधिं मध्यमस्योपरि स्थापयेदुत्तरं परिधिं मध्यस्याधस्तात् स्थापयेत्। अत्रापि विशेषमाह-अनीकसंस्पृष्टामिति। अनीको मूलप्रदेशः। तन्मात्रसंस्पृष्टानेव परिदध्यादित्यर्थः।

**अथ सूर्येण पुरस्तात् परिदधाति 'सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः' (तै० १।१।११।१३) इति।**

द्वैधे विशेषः **'अथ सूर्येण पुरस्तात् परिदधातीति सूत्रं बौधायनस्य। आहवनीयमेवैतेन यजुषोपतिष्ठेदिति शालीकिः'** (बौ० श्रौ० २०।११) इति।

**ऊर्ध्वे समिधावदधाति 'वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमह्यग्ने बृहन्तमध्वरे' (तै० १।१।११।१४) इति दक्षिणां तूष्णीमुत्तरामभ्याधाय।**

द्वैधे विशेषः **'ऊर्ध्वे समिधावदधातीति सूत्रं बौधायनस्य। ऊर्ध्वे एवैनेऽभ्याधायानतिपातयेदिति शालीकिः'** (बौ० श्रौ० २०।११) इति। अतिपात आहवनीयादतिक्रम्य पातः स न कार्य इति शालीकिनोक्तः। अनतिपातयेदिति अनति-

---

१. ग भ स— ब्राह्मणः।

क्रम्य पातयेत्। प्रकृतत्वादाहवनीयमिति गम्यते। बौधायन पक्षे त्वतिपाते न विरोधः। सूत्रव्याख्यातारस्तु 'ऊर्ध्वे' इत्यस्योर्ध्वाग्रे इत्यर्थमाहुः।

**अथान्तर्वेद्युदीचीनाग्रे विधृती तिरश्ची सादयति 'विशो यन्त्रे स्थः' (तै० १।१।११।१५) इति।**

विधृती प्रस्तरबर्हिषोरसंकराय मध्ये स्थापनीयौ दर्भौ। तयोरविशेषाभिधानात् परिभोजनीयेभ्य आदानमिति गम्यते। द्वैधे 'विधृत्योः करणमिति सूत्रमाचार्ययोः। अत्रो ह स्माह दक्षिणाकारो [1]रथीतर उभे एवैते वेदिं [2]व्यतिषज्येयातामिति। [3]मध्यमाद्धातोरनन्तगर्भे स्यातामित्यौपमन्यवः' (बौ० श्रौ० २०।११)। दक्षिणाकारो रथीतर इत्यस्य विशेषणम्। बर्हिषा स्तीर्णां वेदिं विधृती एव व्यतिषज्येते[3] सम्बध्येते न तु प्रस्तरः। मध्यमाद्धातोरिति। अत्र धातुशब्दो मुष्टिवचनः।

**विधृत्योः प्रस्तरम् 'वसूनां रुद्राणामादित्यानां सदसि सीद' (तै० १।१।११।१६) इति।**

सादयेदित्यनुषज्यते। 'द्वैधे तु प्रस्तरे शाखापवित्रमासादयेदित्याह' दोहनपवित्रस्यासादन इति। विस्रस्य प्रस्तर आसादयेदिति बौधायनः। अविस्रस्यैवेति शालीकिः' (बौ० श्रौ० २०।१२) इति।

**प्रस्तरे [4]जुहूम् '[5]जुहूरसि घृताची नाम्ना प्रियेण प्रिये सदसि सीद' (तै० १।१।११।१७) इति।**

---

१. ब श्र— राथीतरः।

२. ग— व्यतिषिज्येते। स— व्यतिषिज्येयाताम्।

३-३. ग— 'मध्यमाद्धातोर....षज्येते' नास्ति।

४. ग भ स— 'जुहूम्' नास्ति।

५. तैत्तिरीयसंहितायामत्र 'जुहूः' इत्येव पाठः।

प्रस्तरग्रहणं नियमार्थम् । प्रस्तर एव न तु शाखापवित्र इति। प्रस्तरे जुहूमेवेति वा नियमः । अतएवाह बर्हिषीतरे ।

**उत्तरामुपभृतम् '[1]उपभृदसि घृताची नाम्ना प्रियेण धाम्ना प्रिये सदसि सीद' (तै० १।१।११।१८) इति ।**

उत्तराम् उदक्संस्थाम् ।

**उत्तरां ध्रुवाम् 'ध्रुवासि घृताची नाम्ना प्रियेण धाम्ना प्रिये सदसि सीद' (तै० १।१।११।१९) ।**

द्वैधे विशेषः 'स्रुचां सादने । स ह स्माह बौधायन ईषत्प्रत्यगवहृतामिवोपभृतं सादयेद्विधृतीभ्यां चैनामवगृह्णीयादिति । अत्रो ह स्माह शालीकिरनुपूर्वा एवैना सादयेन्न चोपभृतं विधृतीभ्यामवगृह्णीयादिति' ( बौ० श्रौ० २०।१२ ) उपभृतमीषत्प्रत्यगवहृतामिव किंचित् प्रत्यगवहृतामिव । एनाम् उपभृतं विधृतीभ्यामवगृह्णीयात् विधृत्योरधः स्थापयेदित्यर्थः । शालीकेः मते तु एनाः [2]स्रुचः अनुपूर्वा अनुगतपूर्वा, न त्वषीत्प्रत्यगवहृतोपभृदित्यर्थः। विधृतीभ्यां च नाधःकरणमुपभृत इति ।

**अथ स्रुचः सन्ना अभिमृशेत्[3] 'एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम्' (तै० १।१।११।२०) इति । [4]अथ 'विष्णूनि स्थ वैष्णवानि धामानि**

---

१. तैत्तिरीयसंहितायामत्र 'उपभृत्' इत्येव पाठः ।

२. ग भ— 'स्रुचः' नास्ति ।

३. ब श्र— °मृशति ।

४. इ१ ग भ स— 'अथ' नास्ति ।

**स्थ प्राजापत्यानि (मै० सं० १।१।१२) इत्याज्यान्यभिमन्त्रयते ।**

अत्र बहुवचननिर्देशात्सकृन्मन्त्रः । अभिमर्शनं सकृदेवाज्यस्थालीगतस्यापि भवति । आज्यानीत्यविशेषनिर्देशात् ।

[1]एकादशः

**अत्र प्रयोगक्रमः—**

आज्यस्थालीं सस्रुवां जघनेन वेद्यै निधाय पूर्ववत्प्रोक्षणीरादायोपोत्तिष्ठति **'आपो देवी०'** इति । [2]स्रुक्स्थाभिरद्भिः स्रुक्स्था अपः प्रोक्षति **'प्रोक्षिता स्थ'** इत्यस्य त्रिरावृत्त्या । इध्मं स्वमेव विस्रस्य सकृत् प्रोक्षति **'कृष्णोऽस्या०'** इति मूलादारभ्याग्रात् । वेदिं प्रतीचीमारभ्य प्रागपवर्गं सकृत् प्रोक्षति **'वेदिरसि०'** इति । बर्हिरविस्रंसयन् मूलादारभ्याग्रात् सकृत् प्रोक्षति **'बर्हिरसि०'** इति । बर्हिरादायान्तरेणोध्व प्रणीताश्च प्राञ्चं नीत्वा प्रणीताहवनीययोर्मध्येन[3] पश्चादानीय वेद्यां पुरोग्रन्थ्यासाद्योपविश्य सव्यहस्तेन बर्हिरालभ्य **'दिवे त्वा'** इत्याग्राणि सकृत्प्रोक्षति, **'अन्तरिक्षाय त्वा'** इति मध्यानि सकृत् **'पृथिव्यै त्वा'** इति मूलान्यपि सकृत्प्रोक्षति । पाणिधृतपुष्करां स्रुचं बर्हिषो दक्षिणगत आनीय प्रत्यङ्मुखया तया प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति । बर्हिषां प्रदक्षिणं प्रत्यग्ग्रन्थिं कृत्य[4] पूर्वाग्रं निदधाति । प्रोक्षणीशेषं दक्षिणां श्रोणिमारभ्योत्तरायै श्रोणेः सततं निनयति **'स्वधा पितृभ्य०'** इति । **'पितृभ्यो बर्हिषद्भ्य इदं न मम'** इति यजमान आह । उद्गृह्य प्रोक्षणीधानम् । प्राञ्चमुद्गूहं[5] ग्रन्थिं प्रत्यञ्चमायच्छति । सन्नहनं विस्रस्य प्रथमं प्रस्तरं पूर्वदिगाभिमुख्येन गृह्णाति **'विष्णोः स्तूपोऽसि'** इति । प्रस्तरे पवित्रे अन्वग्रमुपगूहति

---

१. इ१ ग भ— 'एकादशः' नास्ति ।

२. भ— स्रुग्गताभिः ।

३. ग भ स— मध्ये ।

४. अत्र 'ग्रन्थिं कृत्वा' 'ग्रन्थीकृत्य' वा पाठः स्यात् ।

५. इ१ भ— °मुद्गूहम् ।

**'यजमाने०'** इति। तं यजमानाय प्रयच्छति। सोऽपि धारयन्नास्ते। अध्वर्युः बर्हिसन्नहानि विस्रस्य दक्षिणां [1]श्रोणिमारभ्योत्तरादंसात् [2]सन्ततं स्तृणाति। आहरणक्रमेण प्रथममुष्टिमादाय विस्रस्य दक्षिणांसमारभ्योत्तरादंसात्सन्ततं स्तृणाति **'देवबर्हि०'** इति। [3]द्वितीयं मुष्टिमादाय वेद्यां मध्ये दक्षिणं वेद्यन्तमारभ्योत्तराद्वेद्यन्तात् स्तीर्णबर्हिमूलान्यग्रे प्रच्छादयन् सन्ततं स्तृणाति **'देवबर्हि०'** इति। तृतीयं मुष्टिमादाय वेद्याः श्रोणिप्रदेशे दक्षिणां श्रोणिमारभ्योत्तरायै श्रोणेर्मध्यमुष्टिमूलान्येतदग्रैः प्रच्छादयन् सन्ततं स्तृणाति **'देवबर्हि०'** इति।

यजमानहस्तात्प्रस्तरमादाय [4]प्राङभिसर्प्य दक्षिणेन हस्तेन धारयन् तेनैव हस्तेनाहवनीयस्यापरमेखलायामुदगग्रं मध्यमं परिधिं निदधाति **'गन्धर्वोऽसि'** इति। यजमानोऽनुमन्त्रयते **'ध्रुवोऽसि ध्रुवोऽहं सजातेषु भूयासं धीरश्चेता वसुवित्'** (तै० १।६।२।१) इति। अध्वर्युर्दक्षिणमेखलायां मध्यम[5]परिधिमूलादुपरि दक्षिणपरिधिमूलं यथा भवति तथा निदधाति **'इन्द्रस्य बाहु०'** इति दक्षिणम्। यजमानोऽनुमन्त्रयते **'उग्रोऽस्युग्रोऽहं सजातेषु भूयासमुग्रश्चेत्ता वसुवित्'** (तै० १।६।२।२) इति। अध्वर्युरुत्तरमेखलायां मध्यमपरिध्यग्रादधः कृतमूलं परिधिं प्रागग्रं निदधाति **'मित्रावरुणौ०'** इति। यजमानोऽनुमन्त्रयते **'अभिभूरस्यभिभूरहं सजातेषु भूयासमभिभूश्चेत्ता वसुवित्'** (तै० १।६।२।३) इति। सूर्येण पुरस्तात् परिदधाति **'सूर्यस्त्वा०'** इति। यजमानोऽग्निं परिधिभिर्मनसा योजयन् जपति **'युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः'** (तै० १।६।२।४) इति। आहवनीयस्य दक्षिणपूर्वभागे तदूर्ध्वदेश एवाग्नौ यथा न पतति तथा समिधमादधाति **'वीतिहोत्रं'** इति। तथैव तूष्णीमुत्तरपूर्वभागे समिधामादधाति। तत्काले यजमानो जपति **'इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते'** (तै० १।६।२।५) इति।

---

१. इ१— श्रोणिसभा०।

२. ग भ— 'संततम' नास्ति।

३. ग भ स— मध्यमम्।

४. ग भ स— 'प्राङभिसर्प्य' नास्ति।

५. इ१ ग— मध्यम्।

परिभोजनीयाद्वा मध्यममुष्टयोर्वा सभावनन्तगर्भौ दर्भौ विधृती करोति। वेदिमध्य उदीचीनाग्रे विधृती तिरश्ची सादयति 'विशो यन्त्रे स्थः' इति। तयोः प्रस्तरं शाखापवित्रेण सह सादयति सन्नयतः 'वसूनां रुद्रा०' इति। प्रस्तरे जुहूं सादयति 'जुहूरसि०' इति। तदुत्तरामुपभृतम् 'उपभृदसि०' इति। तदुत्तरां ध्रुवाम् 'ध्रुवासि०' इति। तदुत्तर-आज्यस्थालीं स्रुवं च तूष्णीं सादयति। आसन्ना स्रुचः सकृदेवाभिमृशति 'एता असदन्०' इति। 'विष्णूनि०' इत्यन्तर्वेदि स्थितान्याज्यान्यभिमन्त्रयते।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने एकादशोऽध्यायः।

---

## द्वादशोऽध्यायः

**अथादत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन पात्रीं वेदमिति। एतत् समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां द्वेधोपस्तृणीते 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' (तै० ब्रा० ३।७।५।२-३) इति।**

दक्षिणेन सव्येनेति। नियमोऽप्रमादार्थः दारुपात्र्यां द्वेधोपस्तृणीते। अनेन वैमृधस्य भिन्नतन्त्रत्वमपि द्योतयति। अन्यथा द्वेधा त्रेधा वेति ब्रूयात्। अथवाऽमावास्याविवक्षयोक्तम्। द्वेधेत्यनेनैन्द्रस्य पुरोडाशस्यानित्यता निराकृता। ततश्च पुरोडाशसंख्ययोपस्तरणं गम्यते। 'स्योनं ते' इत्यादिकः 'सुमनस्यमानः' इत्यन्तोऽयं मन्त्रः सदनकरणापरनामकेऽस्मिन् उपस्तरण एव विनियुक्तः। न तूत्तरार्धर्चस्यासादने विनियोगः। द्वयोरर्धर्चयोः परस्पराकांक्षत्वात् न हि साकांक्षं वाक्यं समाप्तिमासादयति। तथा चोक्तम् '**साकांक्षावयवं भेदे परानाकांक्षशब्दकम्। [1]क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते**[1] (वा० प० २।४) इति।

ननु लिङ्गादत्र सदनकरणमासादनं चेति द्वयं प्रतीयते। वाक्याच्च लिङ्गं बलीयः ततः क्रियाद्वयापेक्षया मन्त्रभेद एव युक्तः। आद्यः सदनकरणे विनियुक्तः। अन्त्यः [2]पुरोडाशादन इति। नैतदेवम्। नहि भस्माङ्गारछन्नस्यासादनमभिघारणं वा सम्भवति। अतस्तदनन्तरमासादने त्वस्योत्तरार्धर्चस्योत्कर्षः स्यात्। ओमितिचेत्,

---

१. वा० प० कर्मप्रधानम्। प स— क्रियाप्रधाने। इ, वा० प०— मिष्यते।

२. ग भ— पुरोडाशस्यासादन०। स— पुरोडाशस्यसादिन०।

तस्मिन्नित्यनेन किं परामृश्यते। स्पष्टं पूर्वार्धर्चे श्रुतं सदनमिति चेत्। न, तस्यागमकत्वात्। श्रुतिरेव [1]बाध्येत। **'खमंक्ष्व'** (तै० ब्रा० ३।७।५।२) इत्यस्यानन्तरं युक्तः **'तस्मिन्त्सीद'** इत्ययं मन्त्रः। तत्र प्रकृतपरामर्शी तच्छब्दः कथं नाम सदनं परामृशेत्। तस्मान्न वाक्यभेदो युक्त [2]इति सिद्धम्। पाठक्रमादेव विनियोग [3]इति। अत्र यवमये पुरोडासे **'व्रीहीणां मेध'** इत्येव पाठः। प्रकृतित्वेन वचनं [4]विनोहानुपपत्तेः। केचितु **'व्रीहियवानां मेध'** इति पाठं मन्वानाः सूक्तवाकदेवता[5]पदवद् विभज्य व्रीहियवयोर्विनियोग इति मन्यन्ते। अपरे तु स्वशाखायां व्रीहीणां मेधेत्येव पाठः। शाखान्तरे तु यवानां मेधेति। तयोरुभयोरप्याचार्येण संगृह्याभिधानाद्यथार्थ विनियोगमाहुः।

**अथ धृष्टिमादाय दक्षिणस्य पुरोडाशस्याङ्गारानपोहति 'इदमहं सेनाया अभीत्वर्यै मुखमपोहामि' (तै० ब्रा० ३।७।५।१-२) इति।**

अत्र धृष्ट्यादानममन्त्रकमादायेति क्रियान्तरशेषत्वेनाभिधानात्, स्फ्यमादायोद्धन्तीतिवत्।

**अथैनं विदर्शयति 'सूर्य ज्योतिर्विभाहि महत इन्द्रियाय' (तै० ब्रा० ३।७।५।२) इति।**

विदर्शयति प्रकाशयति, प्रकटयतीति यावत्।

**वेदेन विरजसं कृत्वाभिघारयति 'आप्यायतां घृतयोनिर-**

---

१. ग भ— व्राध्येत।

२. ङ१— 'इति' नास्ति।

३. ग— 'इति' नास्ति।

४. ग स— निनोहा०। भ— विनोहा०।

५. ग — °देव०। स— °देवत।

**ग्निर्हव्याऽनुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामि' ( तै० ब्रा० ३।७।५।२ ) इति ।**

वेदेन वेदवातेन विरजसं सूक्ष्मभस्मरहितं शुद्धं कृत्वेत्यर्थः । अभिघारयति स्रुवेणाज्यमाश्च्योतयति । एवं च सर्वत्राभिघारणस्य स्रुवसाधनत्वम् । औत्सर्गिकं प्रयाजानिष्ट्वा हविषामभिघारणेषु[1] सामर्थ्यात् स्रुचेति गम्यते ।

**यद्देवत्यो वा भवति-इति ।**

या देवता [2]यस्य पुरोडाशस्य तद्देवतानामानुद्रवेणा[3]भिघारणं विदधाति । यथा निर्वापे तथेहाप्यानुपूर्व्येणाभिघारणम् । ततश्चाभिघारणसम्बन्धिनो द्वितीयस्यैवाग्नि-शब्दस्योहः । तेन तद्देवतानुगुण्येन[4] **'इन्द्राय जुष्टमभि घारयामि अग्नीषोमाभ्याम्'** इत्यादि द्रष्टव्यम् । प्रकृतावपि वचनादूहस्याश्रितत्वाच्च वचनमिदमेव । यद्देवत्यो वा भवतीति । अत्र दामोदरस्त्वाह—यद्देवत्यो वा भवतीत्यग्निषोमीयाभिप्रायमिति केचिद्यथा प्रोक्षणादिष्विति । नैतदेवम् । [5]यद्देवत्ययथादेवतशब्दयोर्भिन्नार्थत्वात् । यथा यथा देवता स्थिता तथानुद्रुत्य प्रोक्षतीति [6]तस्य शब्दस्यार्थः[5] । यद्देवत्य इति तु-या देवता अस्येति, **'देवतान्तात् तादर्थ्ये यत्'** ( पा० अष्टा० ५।४।२४ ) इति यत् प्रत्ययः । यद्देवत्यो वा भवतीत्यय[7]माग्नेयः सम्बन्ध इति । [7]आग्नेयस्य देवता-विकल्पः, यथापशौ **'यद्देवत्यो वा भवति'** (बौ० श्रौ० ४।५) इत्युक्तम् । तद्वदिहा-

---

१. ग स— °धारणे ।

२. ग भ स— यस्य यस्य ।

३. इ१ स— °द्रवणेना ।

४. इ१ भ — °गुण्ये ।

५-५. स— 'यद्देवत्य....शब्दस्यार्थः' नास्ति ।

६. 'यथादेवतस्य' इति पाठ स्यात् ।

७-७. ग स— '°त्ययमा....इति । आ०' नास्ति ।

पीति चेत्, नैतदेवम् । पशौ तु [1]यद्युक्तो देवताविकल्पः, विद्यमानत्वात् । इह तु नित्यरूपस्याग्नेयस्य कथं[2] विकल्पनिर्देश इति । यद्यप्याग्नेयस्य विकल्पो न विद्यते, तद्विकृतिभूतः सौर्यश्चरुस्तु गृह्यते । तस्माददोषः । ननु, तस्य चोदकेनैव सिद्धत्वात् किमनेन यत्नेनेति । तत्संशयव्युदासार्थमेव यत्नः । अत्राम्नातत्वात् **'अग्नये जुष्टमभिघारयामि'** इत्येतावानेव श्रुत्याम्नातः । प्रकृतावूहाभावादितरेषां नास्ति मन्त्रः । तस्मादग्नीषोमीयादीनां तूष्णीमभिघारणम् । आग्नेयतद्विकाराणामेव मन्त्र इति ।

**अथैनमुद्वासयति 'शृत उत्स्नाति जनिता मतीनाम्' (तै० ब्रा० ३।७।५।२) इति ।**

उद्वासनं कपालेभ्य उद्धरणमपर्यावर्तयन् । अभ्रामदक्षिणोद्धृतं तथैव सव्ये स्थापयेत् । पर्यावर्तनादौ प्रत्यवायप्रायश्चित्तयोः श्रवणात्—**'उद्धृते तु पुरोडाशे वेपिते स्यन्दिते तथा । भिन्ने संसर्पणे चापि प्रायश्चित्तं कथं भवेद्'** इति । विज्ञायते **'उद्धृते तु कुलं हन्याद्वेपिते नश्यति प्रजा । भिन्ने संसर्पणे चापि यजमानः प्रमीयते'** इत्यारभ्य पतनकालनखण्डनाद्यनुक्रम्योक्तम् **'प्रसिद्धमुद्वास्य बर्हिषदः कृत्वा प्रभूतेन सर्पिषा प्रसिद्ध्याभिमन्त्रयते किमुत्पतसि०'** (बौ० श्रौ० २७।४) इत्यादि ।

**आज्येन सुसन्तर्पयति 'आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम्' (तै० ब्रा० ३।७।५।३) इति ।**

सन्तर्पणमभिवर्षणम् । एतदेव द्वितीयाभिघारणरूपम् । अतएव [3]स्रुचः करणं ततो नाति प्रतिष्ठिताभिघारणम् । अस्यैवानुवादः ।

**उपरिष्टादभ्यज्या[4]धस्तादुपानक्ति 'यस्त आत्मा पशुषु**

---

१. ग स— 'तु' नास्ति । भ— यत्तु । स— मुक्तो देवविकल्पः ।
२. भ— विकल्पान्निर्देशः ।
३. इ१ — स्रुवः ।
४. इ१ ग भ— 'अभ्यज्य' इत्यस्यानन्तरम् 'इति' ।

**प्रतितिष्ठ[1]तमङ्क्ष्व' (तै० ब्रा० ३।७।५।३) इति[2]।**

अधस्तादुपाञ्जनस्याभिधारणरूपत्वाभावात् परिवर्तनस्य चायुक्तत्वाद्धस्तकरणकत्वम्। तथा च सत्याषाढः 'अधस्ताद्धस्तेनोपानक्ति' इति। केचित्तूपरिष्टाद्बह्वाज्याभिवर्षणेनैव स्वयमेवाधस्ता।

**एवमेवोत्तरं पुरोडाशमुद्वासयति।**

आग्नेयपुरोडाशोद्वासनधर्माः सर्वेऽतिदिश्यन्ते। उद्वासितस्य हस्तस्थितस्य पुरोडाशस्य सदनकरणानुपूर्व्यात् पात्र्यां स्थापनमर्थसिद्धम्। उपांशुयाजस्य चरुपक्षे तत्राङ्गारापोहनाद्य[3]भावात्तन्मन्त्राणां लोपः। अभिघारणं तु यथादेवतं समन्त्रकमेव। द्वितीयाभिघारणं तु प्रतिष्ठतस्यैव। अत्र विशेषानादेशात्स्मार्तचरुधर्मातिदेशो युक्त इति। उत्तरत्वाविशेषाद्वैमृधादेरपि तद्धर्मातिदेशः। द्वैधे विशेषः '**हविषामुद्वासन इति। अग्रेणानुद्वासितानि जघनेनोद्वासितानीति बौधायनः। जघनेनानुद्वा[4]सितान्यग्रेणोद्वासितानीति शालीकिः। [5]अवच्छेदमित्यौपमन्यवः**' (बौ० श्रौ० २०।१२)। आग्नेयादीनामुद्वासने विषये हविरन्तराणामग्रेणानुद्वासितानि तेषां जघनेन प्रत्यग्भागेनोद्वास्य नीत्वोदक्स्थितायां पात्र्यां [6]स्थापयेदित्येकः पक्षः। एतद्विपरीतो द्वितीयः। औपमन्यवे तु पक्षे हविरन्तराणां जघनेनाग्रेण वोद्वासनमिति।

**अथ शृतमथ दधि।**

अत्रातिदेशाभावात्तूष्णीमभिघारणम्। पुरोडाशेभ्य उत्तरतः शृतं तदुत्तरतो दधि च पात्र्यामासाद्यापि तूष्णीमभिघारणम्।

---

१. तै० ब्रा०— 'तमङ्क्ष्व' नास्ति।

२. ङ१— 'तु' नास्ति।

३. ङ१— °रापनोदाद्य०।

४. ग— जघनेन तूद्वा०। स — उद्वा०।

५. ब श्र— अपच्छेद०।

६. ङ१— सादयेदिति।

**अथ सान्नाय्येऽलङ्करोति 'यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मवान्त्सोम घृतवह्हि भूत्वा देवान्गच्छ सुवर्विद यजमानाय मह्यम्' (तै० ३।७।५।३) इति।**

प्रातर्दोहसायंदोह्योरलङ्करणं सर्वतोऽभिघारणम्। एतदेव प्रतिष्ठिताभिघारणम्। अथवा स्मार्त्तन्यायेन तूष्णीं प्रतिष्ठितमभिघार्य तृतीयमिदं सर्वतोऽभिघारणमलंकरणाख्यमिति। उभयत्र मन्त्रावृत्तिः।

**प्रत्यज्य कपालान्युद्वासयति 'इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्' (तै० ब्रा० ३।७।५।३) इति।**

मन्त्रेण प्रत्यज्योद्वासयतीत्यन्वयः। अतः प्रत्यञ्जनं समन्त्रकं न तूद्वासनम्। ननु, प्रत्यज्येति प्रत्यञ्जनस्य गुणता प्रतीयते। उद्वासयतीति प्राधान्यमुद्वासनस्य स्नात्वा भुञ्जीतेतिवत् कर्तृरूपाधितयोक्तत्वात्, ल्यब्वाच्यतया प्राधान्यात्। नैतदेवम्। नात्र प्रत्यञ्जनं कर्तृरूपाधितयोक्तम्। न च गुणप्रधानभावः। अतो वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवल्ल्यब्वाच्यत्वेऽपि न प्राधान्यहानिः। आचार्याभिप्रायेणापि प्रत्यञ्जन एव मन्त्रः। कथमन्यथा द्वैधे चर्वाशय प्रत्यञ्जनमनेन मन्त्रेण विदध्यात्। तथा हि—**'प्रत्यञ्जनमनेन मन्त्रेण विदध्यात्। तथाहि—'प्रत्यञ्जन इति। स स्माह बौधायनः। उभयानि प्रत्यञ्ज्याच्चरूणां चाशयान् कपालानि चेति। कपालान्येवेति शालीकिः'** (बौ० श्रौ० २०।१२) इति। अत्र प्रत्यञ्जनस्य कपालसंस्कारत्वमङ्गीकृत्य कपालान्येवेति पक्षः। हविः श्रपणस्थानेत्यञ्जनस्य हविः संस्कारत्वमङ्गीकृत्य चर्वाशयप्रत्यञ्जनपक्षः। तत्राद्ये प्रतिकपालं मन्त्रावृत्तिः। प्रत्येकं कपालानां प्राधान्यात् द्वितीये तु प्रतिपणं हविः प्राधान्यात्। तथा च, सत्याषाढः **'कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्तिः। अपि ह व एकैकशः कपालानि'** इति। युज्यत इति योगः, समूहो गण इत्यर्थः।

**'संख्यायोद्वासयति यजमानस्य गोपीथाय' ( तै० ब्रा० २।६।३।१० ) इति ब्राह्मणम्।**

संख्याय परिगणय्य। अत्रैकं द्वे त्रीणि चत्वारीति शब्दोच्चारणं याज्ञिकप्रसिद्धम्। ब्राह्मणग्रहणं[1] तदुक्तप्रायश्चित्तसूचनार्थम्। नाशकालश्च प्रोक्षणादूर्ध्वमुद्वासनादर्वाक् प्रत्यवायहेतुः। सूत्रे तु 'यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येत्' (आप० श्रौ० ३।१३।१३) इति श्रवणात्। उपधानादूर्ध्वमर्वाक् पुरोडाशाधिश्रपणात् कपालनाशे प्रायश्चित्तपक्षोऽभियुक्तैः प्रत्याख्यातः। न तत्र युक्तिरुक्तेति। द्वैधे विशेषः '**कपालानामाध्वर्यवे**[2] **विमोक इति। उद्वास्य हवींषीत्याचार्ययोर्विमुञ्चेत्**[3]। [4]**अभक्षयन्नेव भक्षाणां पारेकपालानि विमुञ्चेदित्यौपमन्यवः**' (बौ० श्रौ० २०।१२)। कपालानां विमोकः तदर्थं '**यानि घर्मे०**' (तै० १।७।१२) इति मन्त्रजपः। आध्वर्यवः अध्वर्युकर्तृकः। एवं च यजमानप्रकरणे।'**कालेकपालान्युद्वासयति**' इति वचनादध्वर्युयजमानौ सह कुरुत इति गम्यते। काल इति वचनादनियमं द्योतयति। स एवानियम उक्तः। विमुञ्चेद् [5]अभक्षयन्नेव भक्षाणां पार इति वा। ऋत्विग्यजमानकर्तृकाणामिडाभक्षाणामन्त इत्यर्थः।

**अथैनं स्रुवमाज्यस्य पूरयित्वान्तरेण पुरोडाशाववदधाति।**

बहुपुरोडाशत्वेऽपि प्राथमिकयोरेव मध्येऽवदधाति। नियतत्वादेतयोरिति विकृतौ पुरोडाशैक्येऽपि पुरोडाशाभावेऽपि।

**अथैनानि सम्परिगृह्यान्तर्वेद्यासादयति 'भूर्भुवः सुवः' इत्येताभिर्व्याहृतिभिः।**

एनानि हवींषि सम्परिगृह्य सम्यग्गृहीत्वा। अनेनाधारभूताया पात्र्या [6]अप्राधान्यं द्योतितम्। तेन बहुहविष्कत्वेन पात्रान्तरासादनेऽपि सहैव ग्रहणं

---

१. **प इ१ भ**— ब्राह्मणम्।

२. **प इ१ ग**— °ध्वर्यवो०। **स**— °ध्वर्यावो०।

३. **ब श्र**— °त्यत्राचार्यौ विमुंचतः।

४. **ब श्र**— भक्ष०। **स**— अभक्ष्ययेन्।

५. **स**— अभक्षयन्।

६. **भ**— प्राधानम्।

द्योतयति। अतएव सोमे पुरोडाशधानाद्यासादने दारुपात्रीनियमाभावः समञ्जसः। भूर्भुवः सुवरित्येतावतैव पर्याप्ते यदाह एताभिर्व्याहृतिभिरिति। अनेन संवत्सराद्यन्तयोरेव व्याहृतिभिरासादनं च पक्षान्तरं ब्राह्मणप्रतिपादितं सूचयति। स्पष्टीकरिष्यति चेममेवार्थं दशाध्याय्याम् **'अथ भूर्भुवः सुवरित्यग्निहोत्रम्'** (बौ० श्रौ० ३।१७) इत्यादिना। अतः प्रतिदर्शपूर्णमासं व्याहृतिभिरासादनमाद्यन्तयोरेव वेति पक्षद्वयमप्याचार्याभिमतमिति सिद्धम्।

**मध्यतः पुरोडाशावासादयति दक्षिणतः शृतमुत्तरतो दधि।**

वेदिमध्ये पुरोडाशासादनम्। द्विवचनमविवक्षितमेकस्य बहूनां वा पुरोडाशानां वेदिमध्य एवासादनात्। तत्रापि क्रमो निर्वापक्रमानुरोधेन। अतएवोपांशुयाजस्य चरुपक्षे त्वाग्नेयानन्तरं चर्वासादनमेव। मध्यशब्दस्य वेदिमध्यत्वविवक्षायां च[1] दक्षिणतः शृतमुत्तरतो दधीति परस्परापेक्षम्। तेन च दोहयोर्देवतायागक्रमानुगुण्येन पुरोडाशोत्तरभागासादनपक्षोऽप्यविरुद्धः। तथा च सूत्रम्—**'अपरेण स्रुचः पुरोडाशावासादयति'** इति, **'उत्तरौ दोहौ'** (आप० श्रौ० २।११।७-८) इति। यदा तु, दक्षिणतः शृतमुत्तरतो दधीत्युत्तरवाक्यापेक्षया, मध्यतः पुरोडाशावासादयतीति। मध्यशब्दः सानाय्यमध्यवचनस्तद[2]भितो हविषां दक्षिणोत्तरत्वं दोहयोः। अस्मिन्नपि सूत्रम् **'दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां [3]दधि'** (आप० श्रौ० २।११।९) इति।

**अथैनं स्रुवमग्रेण स्रुचः पर्याहृत्य दक्षिणेन जुहूं प्रस्तरे सादयति 'स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके। दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः' (तै० ब्रा० ३।७।६।१०) इति।**

---

१. ग भ स— 'च' नास्ति।

२. ग भ स— तदा०।

३. आप० श्रौ०— दिवि।

तदेतदासादनं स्रुवाज्यस्यैव संस्कारः, सर्वहविः साधारण्यात् । केचित्तु जुह्वादिस्रुगाज्यसंस्कारत्वमाहुः ।

**अथैनं यथाहृतं प्रति पर्याहृत्य ध्रुवायामवदधाति 'ऋषभोऽसि शाक्वरो घृताचीनां सूनुः प्रियेण नाम्ना प्रिये सदसि सीद' ( तै० ब्रा० ३।७।६।१० ) इति ।**

एनत्स्रौवमाज्यं ध्रुवायामवदधाति आसिञ्चन्ति । अस्य ध्रुवाज्यसंस्कारत्वमेव न त्वाधारोपांशुयाजार्थता । अवभृथेष्ट्यामस्याभावेऽपि स्रौवाधारदर्शनात् । प्रकृतावुपांशुयाजस्य चरुपक्षे, विकृतौ चोपांशुयाजरहितायामस्य स्रौवाज्यानयनस्योपलम्भादिति ।

**अत्र प्रयोगक्रमः—**

अध्वर्युर्दक्षिणेन हस्तेनाज्यस्थालीं सस्रुवां सव्येन दारुपात्रीं [1]वेदमित्येत्समादाय, प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य, पश्चाद्गार्हपत्यस्योपविश्य हविषामुत्तरत उदगायतां दारुपात्रीं निधायाज्यस्थाल्या [2]आज्यं स्रुवेणोपहत्य पात्र्यां यावत्पुरोडाशमुदगपवर्गाणि पृथक् पृथक् सदनानि करोति **'स्योनं ते०'** इति । प्रतिसदनकरणं मन्त्रावृत्तिः । तूष्णीं धृष्टिमादाय दक्षिणस्य पुरोडाशस्याङ्गारानपोहति **'इदमहं'** इति । [3]स्थूलभस्मापोह्य प्रकाशयति **'सूर्यज्योति०'** इति । वेदवातेन सूक्ष्मभूतं पुरोडाशस्थं भस्मापोह्याभिघारयति **'आप्यायतां घृत० अग्नये जुष्टमभिघारयामि'** इति । पुरोडाशमादत्ते **'शृत उत्स्नाति०'** इति । आज्येनोपरिष्टात्सन्तर्पयति **'आर्द्रः प्रथस्नु०'** इति । अधस्ताद्धस्तेनोपानक्ति **'यस्त आत्मा०'** इति । तूष्णीं पात्र्यां दक्षिणे सदन आसादयति । एवं पुरोडाशान्तरेष्वपि घृष्ट्यादानाद्यासादनान्तं समानं यथादेवतमभिघारणम् । तूष्णीं शृतदधिनी अभिघार्योद्वास्य पात्र्यां दक्षिणतः शृतमुत्तरतो दध्यासाद्य पुनस्तूष्णींमभिघार्य सर्वतोभिघारयति **'यस्त आत्मा०'** इति । प्रतिदोहं मन्त्रावृत्तिः ।

---

१. **ग भ स—** वेदि० ।

२. **ग भ स—** आज्यात् ।

३. **ग भस—** स्थूलम् ।

स्रुवेण कपालानि प्रत्यनक्ति '**इराभूति**' इति। प्रतिकपालं प्रतिगणं वा मन्त्रावृत्तिः। '**एकं द्वे त्रीणि**' इत्यादिभिः संख्यायोद्वास्य जपति '**यानि घर्मे० विमुञ्चताम्**' इति। यजमानोऽप्यनेनाभिमन्त्रयते। आज्येन स्रुवं पूरयित्वा पुरोडाशा[1]वन्तरेणावधाय युगपत् सर्वाणि हवींष्यन्तर्वेदि जघनेन स्रुचः [2]आसादयति '**भूर्भुवः सुवः**' इति। तत्कालेऽपि यजमानः '**भूर्भुवः सुवः**' इति जपति[3]। स्रुचोऽग्रेण स्रुवं पर्याहृत्य दक्षिणेन जुहूं प्रस्तरे सादयति '**स्योनो मे०**' इति। यथाहृतं पुनराहृत्य ध्रुवायामवनयति '**ऋषभोऽसि०**' इति। यजमानः सर्वाणि हवींष्यभिमयतेऽन्त्र '**यन्मे अग्ने यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे**' ( तै० १।६।२।६ ) इति। अभिमन्त्रणं दृष्ट्वा जपः॥

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने द्वादशोऽध्यायः।

---

१. घ ग— '**नवान्०**' इति पाठः त्रुटितः।

२. ग ख— सादयति।

३. इ₁— यचेति।

# त्रयोदशोऽध्यायः

**अथेध्मात्समिधमाददान आह 'अग्नये समिध्यमाना-यानुब्रूहि'।**

होतारं प्रतीदं प्रैषवचनं नासन्निहिते होतर्युपपद्यते। तत्सन्निधानं च स्वकाल एवेति। तज्ज्ञापनाय **'होतरेहि'** प्रैषवचनमनाम्नातमप्यार्थिकं सिध्यति। अथवा, **'दर्शपूर्णमासयोर्हविष्वासन्नेषु होतामन्त्रितः'** (आ० श्रौ० १।१।४) इत्याश्वलायन-वचनाद्धवींष्यासाद्य होतारमामन्त्रयते। वक्ष्यमाणाचार्यवचनाच्च **'होतरेहि'** इति प्रैषवचनं स्वकाले विहितमेव। एवमाहूतो होता यदान्तरेण वेद्युत्करौ प्रत्यङ्मुख आगच्छति तदेवाध्वर्युः प्राङ्मुख इध्मसमीपं गच्छति। [1]एतयोः कस्यान्तरंगत्वमिति विचार्यते। प्रयोजनं चास्य विचारस्य होतुरन्तरङ्गत्वेऽध्वर्युं बहिष्कृत्य होतुर्वेद्यव्यव-धानेन प्रवेशः। अन्यथाध्वर्युणान्तरितस्य प्रवेश इति। किं तावत्प्राप्तम्?

**'यथाकर्मर्त्विजः'** इतिवचनाद्धोतुः कर्मेदानीमन्तरङ्ग तीर्थप्रपदनस्य विहित-त्वात् **'पूर्वेणोत्करमपरेण प्रणीताः। इध्ममपरेणाप्रणीताः'**[2] (आ० श्रौ० १।१।४-५) इत्याद्यनेकेतिकर्त्तव्यतासध्रीचीनस्य सर्वर्त्विजां नियतस्य तीर्थप्रपदस्येदानीं होत्रा क्रियमाणान्तरङ्गत्वं च। अध्वर्योऽस्त्विदानीं गमनस्य नतादृशत्वम्। अतोऽध्वर्योरेव बहिर्भाव इतीमामाशङ्कां स्वयमेवाचार्यः कर्मान्ते निराकरोति **'अथाध्वर्योश्च होतुश्च प्रपदनम्। अन्तरेण वेद्युत्करौ प्रागावृतोऽध्वर्युः प्रपद्यते प्रत्यगावृतो होता। अध्वर्युरनन्तरोऽग्नेः स्यात्'** (बौ० श्रौ० २४।२८) इति। अग्नेरनन्तरः अनन्यव्यवहितः। अत्र व्यवधानान्तरस्याप्रसक्तत्वाद्धोत्रा व्यवधानं निषेधति। तेन होतुरेव बाह्यत्वमिति।

---

१. ग— एनयोः।

२. इ१ स— °परेणप्रणीते।

एवमिध्मसमीपमागत्येध्मात् समिधमाददान आह—अग्नये समिध्यमानाया-नुब्रूहि इति। समिध्यमानः सम्यग्दीप्यमानः। तस्मा अग्नयेऽनुब्रूहीति। सामिधेनी-नामग्निसमिन्धने विनियुक्तानामग्निदेवताकत्वादग्नय इत्युक्तम्। तूष्णीमिध्माञ्जनं च स्मार्तन्यायेनात्राप्यविरुद्धत्वादनुष्ठेयम्। अस्य प्रैषवचनस्य सामिधेन्यङ्गत्वात्मध्य-मस्वरः, न मन्द्रक्रुष्टादयः। तथा च वक्ष्यति होत्रशेषप्रश्ने—'**अथ वै भवति मन्त्रो हीनः स्वरतो वर्णतो वा [1]मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्** ( पा० शि० ५२ ) **इति। अथ वै भवति-यत्क्रौचमन्वाहासुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत् सदेवम्**—(तै० २।५।१०।६) **इति। सप्त वाचः स्थानानि भवन्ति। उपांशुध्वाननि[2]मदोपलब्धिमन्मन्द्रमध्यम-ताराणीति। करणवदशब्द[3]मनः प्रयोगमुपांशु[4]। अक्षरव्यंजनानामनुपलब्धि-ध्वानः। उपलब्धिर्निमदः। सशब्दमुपलब्धिमत्[5]। उरसि मन्द्रम्। कण्ठे मध्यमम्। शिरसि तारम्** (तै० प्रा० २३।४-१२)**। मन्द्रादुच्चतरस्थानेन सामि-धेनीरनुब्रूयात्। समेन निहतस्वरेण निविदं दध्यात्। मन्द्रेण प्रागाज्यभागाभ्यां मध्यमेनास्विष्टकृतः स्विष्टकृच्चो[6]च्चैः***' इति।

अनुब्रूहीत्यत्रोकारस्य प्लुतत्वम्। '**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः**' (पा० अष्टा० ८।२।९१) इति स्मरणात्।

---

१-१. इ₁— 'मिथ्या...इन्द्रः' नास्ति।

२. इ[1] भ— निर्मदोपब्दिमन्।

३. इ₁ भ— °ममनः०।

४. भ— 'उपांशु' इत्यस्यानन्तरम् 'ओष्ठस्पन्दने च परैर्दृश्यते न शब्दः श्रूयते तादृशमुपांशुत्वमिति ऐतरेयभाष्ये विद्यारण्य'। भ— पुस्तकेऽयं भागः केनापि संयोजित इति प्रतीयते।

५. इ₁ भ— मुपब्दिमत्।

६. ग भ स— °चोच्चेन।

---

* स्विष्टकृच्चोच्चैः = स्विष्टकृत्प्रभृति पत्नीसंयाजादर्वागुच्चैः स्वरेण पत्नीसंयाजेषु मन्द्रस्वरेणापरिसमाप्तेः— इ₁।

**अथ यत्र होतुरभिजानाति 'प्र वो वाजा अभिद्यवः' (तै० ब्रा० ३।५।२।१) तत्प्रथमामभ्यादधाति ।**

'[1]प्र वो वाजा अभिद्यवः' [1]इत्येतद्वाच्यम्[2] । तत् तदा प्रथमां समिधमभ्यादधातीति । अत्रादधातीति चोदितत्वान्नोद्देशत्यागः ।

**प्रणवे प्रणवेऽभ्यादधाति—इति ।**

ऋगवसाने यः प्रणवो विहितः । प्रणवेनैव चाभिसन्धानमिति । तस्मिन् **'प्रणवे प्रणवे'** इति वीप्सया, ऋचामेकादशत्वेऽपि **'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्'** (आप० श्रौ० हौत्रकल्पे ११।६) इति वचनात् पाञ्चदश्यसिद्धिः । अतश्च-पञ्चदशसामिधेनीरनुब्रूयादिति प्राकरणिको विधिरनुसृतो भवति । यद्यपि सप्तदशचतुर्विंशत्यपरिमितादिपक्षाश्च प्रकृतावपि श्रूयन्ते तथापि साप्तदश्यस्य तावच्छाखान्तरे नारभ्याधीतत्वेनानुमानिक[3]प्रकृतसम्बन्धान्न पाञ्चदश्येन सह विकल्पार्हता, **'सप्तदशानुब्रूयाद्वैश्यस्य'** ( तै० २।५।१० ) इत्युपसंहाराच्च । केचित्तु साप्तदश्यविशेषविध्यनुरोधेन प्रकृतीष्टीतरविषयता[4]माहुः । तथा च सूत्रम् **'पञ्चदशसामिधेन्यो दर्शपूर्णमासयोः सप्तदशेष्टिपशुबन्धानां यत्र श्रूयन्ते'** आप० प० ३।२८-२९ ) इति । अत्र प्रकृतौ पाञ्चदश्यमेव नियतम् । तथा च वक्ष्यति हौत्रशेषप्रश्ने—प्र वो वाजा अभिद्यव इत्येकादश सामिधेन्यः समाम्नातास्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ताः पञ्चदश सम्पद्यते । अथ वै भवति—'**पञ्चदश सामिधेनीरन्वाह पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर [5]आप्यते । तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति**

१-१. ग भ— 'प्र वो० द्यव इति' नास्ति ।

२. प ६१— °वाक्यम् । स— °वक्यम् ।

३. ग भ स— °नानुमानि० ।

४. ग— 'विषयता०' नास्ति । स— 'विषय०' नास्ति ।

५. प स— 'आ०' इति पाठः त्रुटितः ।

(तै० २।५।८।२-३) इति **ब्राह्मणम्** इति। तत्रैव बहुयाजिनमधिकृत्यापरिमितपक्षोऽप्यभ्यनुज्ञातः—'**अथ वै भवति—सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिनः** (तै० २।५।१०।१४) इति। **सोमयाजिन इत्येवेदमुक्तं भवति**' इति।

अत्रेदं विचार्यते इध्माभ्याधानसामिधेन्यन्वाख्यानयोरङ्गाङ्गिभावो वा स्यात्। अथ वा [1]शङ्खध्वानभोजनयोरिव काललक्षकत्वमात्राभिप्रायेण। यत्र होतुरभिजानाति प्र वो वाजा अभिद्यव इति वचनमिति[2]। आद्येऽपि पक्षे किं सामिधेन्वाख्यानस्याङ्गत्वं प्राधान्यं वेति। यद्यङ्गता '**अष्टाचत्वारिंशतमनुब्रूयात्**' (तै० २।५।१०।१३), '**तिस्र एव सामिधेनीरनूच्य**' इत्येवमादिष्वपि पञ्चदशैव समिधः स्युः। न ह्यङ्गानुविधायि प्रधानं भवतीति न्यायात्। अथ प्राधान्यं सामिधेनिसंख्यानुविधानं समित्संख्यायां स्यात्। प्रधानानुविधायित्वादङ्गस्येति। काललक्षकत्वमात्रे तु नान्योऽन्यसंख्यानुविधानम्। तथा च-मन्त्रसंख्यान्यूनतायाम[3]तिरिक्तानां समिधामन्त्रर्क संख्यान्यूनतायामतिरिक्तानामृचां सामिधेनीशब्दो[4] गौणः स्यादिति। किं तावत् प्राप्तम्। '**सामिधेनीवृद्धौ काष्ठानि विवर्धन्ते**' (आप० श्रौ० २।१२।५) इति वचनात् सामिधेनीनामेव प्राधान्यम्। श्रुत्यन्तरं च '**ब्रह्मवादिनो वदन्ति प्रेध्ममुक्षति प्रभवतीध्मः। प्रथमं आहुतीनां हूयते। कथमत्र याज्यानुवाक्ये स्तः? अग्नये समिध्यमानायानुब्रूहीति। पुरोऽनुवाक्या[5]वै सामिधेन्यो[5] याज्या[6] वषट्कारः, उपवाकः प्रणवः**' इति। अन्या च श्रुतिः '**अग्नये समिध्यमानायानुब्रूहीति। पुरोऽनुवाक्या वै सामिधेन्यो याज्या वषट्कारः प्रणवः इध्म आहुतिः**' इति।

**अथ यत्र होतुरभिजानाति 'समिद्धो अग्न आहुतः (तै० ब्रा० ३।५।२।३)' इति तदन्ततोऽभ्यादधाति।**

---

१. ग भ— शंखाध्वान०।
२. इ₁— 'इति' नास्ति।
३. स— °मिति।
४. ग स— गुणः।
५-५. इ₁ भ— सामिधेनीरिव।
६. ए— याज्या च।

यदा होतुः सकाशादभिजानाति अवगच्छति **'समिद्धो अग्न आहुतः'** इत्यृचम्। तत् तदानीम् अन्ततोऽभ्यादधाति। यच्चरममभ्याध्यानं तस्यायं काल इत्यर्थः।

**परिसमिधं शिनष्टि।**

एकां समिधमवशेषयति। अयमर्थः—एकविंशतिः समिधः। तत्र त्रयः परिधयः, द्वे[1] आघारसमिधौ। प्रतिप्रणवमाधीयमानेषु पञ्चदशसु **'आ जुहोता दुवस्यत'** ( तै० ब्रा० ३।५।२।३ ) इत्यारभ्योत्तरप्रणवद्वयाधीयमानयोः पूर्वप्रणव एवाधीयमानेन सहाधानम्। आजुहोतेत्यस्य [2]कर्मान्तरावरुद्धत्वात्। एतदेवाह—

**अथ यत्र होतुरभिजानाति 'आ जुहोता दुवस्यत' इति तदेतेन वेदेन त्रिराहवनीयमुपवाजयति-इति।**

[3]वीजनमेव वाजनम्। तदेतददृष्टार्थमेव, न त्वग्निदीपनार्थम्। त्रिरिति नियमात्। एवमपि यदि स्याद् दृष्टार्थता, अवभृथेष्टयामुदकोपवीजनं न स्यात्। मास्त्विति चेत् सत्याषाढवचनविरोधः। उक्तं हि तेन **'अवभृथ उदकमुपवीज्य'** इति। अतो दृष्टार्थोपवीजनापरुद्धत्वात्, आजुहोतेति मन्त्रस्य तस्मात्प्रागेव समित्त्रयं सहैवान्ततोऽभ्यादध्यात् अथवा प्रणवे [3]प्रणवेऽभ्यादधातीति सिद्धेऽपि तत्प्रथमामभ्यादधातीति वचनस्यैतत् प्रयोजनम्। **'प्र वो वाजा॰'** इत्येतच्छ्रवणसमय एवं प्रथमां समिधमादध्यात्। एतदपेक्षया द्वितीयां प्रणव एव, [4]एवमावृत्तित्रयेऽपीति।

एतदुक्तं भवति—प्र वो वाजा अभिद्यव इत्येतस्याः त्रिरावृत्तौ ऋगुपक्रम एका [5]समिदाधेया। [6]तदन्ततः प्रणव एका। एवमनन्तरमेव। द्वितीयवारोपक्रमेऽप्येका,

---

१. भ— 'द्वे' नास्ति।

२. इ१— कर्मान्तरा॰।

३. ग— 'वीजनमेव' नास्ति। २ भ— 'प्रणवे' नास्ति।

४. ग स— एवमावृत्तावपीति।

५. भ— समिधा॰।

६. ग— एवं समन॰।

तदन्ततः प्रणव एका। एवं तृतीयेऽपीति षट् समिधः। अथवा अस्यामेवार्धर्चावसाने प्रणवे चेति षट् समिधः। अस्मिन् पक्षे—[1]यत्र होतुरभिजानाति-प्र वो वाजा अभिद्यव इत्येतत् प्रतीकोपादानपरमिति। अयं प्रथमायां षट्समित्पक्षो दामोदरस्वामिना प्रत्याख्यातः। प्रथमायामृचि यदि षट् समिध आदधीत, परिधिमेव तं परिदधाति यदत ऊर्ध्वमभ्यादध्यादिति च मन्दप्रयोजनं स्यात्। [2]तस्मादादित आरभ्य प्रणवे प्रणवेऽभ्यादध्यादित्ययमर्थः। चरमयोः प्रणवयोः सहाहितसमित् द्वयार्थत्वं वीजनत्वम-मन्त्रकं काललक्षणार्थमेव। **'अथ यत्र होतुरभिजानाति आजुहोतेति'** वचनमिति।

**अनूक्तासु सामिधेनीषु ध्रुवाज्यात्स्रुवेणोपहत्य वेदेनोपयम्य प्राजापत्यं तिर्यञ्चमाघारमाघारयति 'प्रजापतये स्वाहा' (तै० ३।४।२।१) इति मनसा-इति।**

सामिधेनीषु अनूक्तासु **'अग्ने महाँ असि'** (तै० ब्रा० ३।५।३।१) इत्येवमन्तमुक्तासु ध्रुवाज्यात् स्रुवेणोपहत्य आदाय। ध्रौवस्य सर्वार्थत्वे सिद्धेऽपि पुनर्ध्रुवाज्यग्रहणं क्वचिन्निवृत्त्यर्थम्। तथा च, पुरस्तादुपरिष्टाच्च स्रुवाहुतिषु, आगन्तुकप्रायश्चित्ताहुत्यादिषु[3] च ध्रौवनिवृत्तिः[3] सिद्धा [4]भवति। स्रुवग्रहणमनादिष्टे स्रुचैव होमो यथा स्यादिति। तथा च कर्मान्ते—**'अनादिष्टं पात्रम्। अपितु यथैतद् भवत्यञ्जलिना जुहोति, [5]शूर्पेण जुहोति[5], कृष्णाजिनपुटेन जुहोति, मध्यमेन पर्णेन जुहोति, [6]अन्तिमेन पर्णेन जुहोति, अर्कपर्णेन जुहोति, पर्णमयेन स्रुवेण जुहोति, औदुम्बरेण स्रुवेण जुहोति, अंगुष्ठाभ्यां जुहोति, विस्रंसिकाकाण्डाभ्यां जुहोति, गोमृगकण्ठेन जुहोति, अश्वशफेन जुहोति, [7]अयस्मयेन**

---

१. ग भ— 'पक्षे' इत्यस्यानन्तरम् 'अत्र'। स— 'पक्षे' इत्यस्यानन्तरम् 'अथ'।
२. ग भ— तस्मादित्.।
३-३. ग— अत्र एवं निवृत्तिः। स— न ध्रुवे निवृत्तिः।
४. स— सिद्धम्।
५. भ— 'शूर्पेण जुहोति' नास्ति।
६ ग व श्र स— अन्तमेन।
७. इ१ — अश्ममयेन।

कमण्डलुना जुहोति। **अनादिष्टे स्रुचैव होतव्यम्**' ( बौ० श्रौ० २४।८ ) इति। प्राजापत्यं प्रजापतिदेवताकम्। मनसा मनो व्यापारेण मन्त्रमुच्चार्य। अनेन सर्वत्र प्रजापतिस्तूष्णीमाघारमाघारयेदिति दर्शनेऽपि न मन्त्रनिवृत्तिः। करणव्यापारनिवृत्तिरेव। '**तस्मान्मनसा प्रजापतये जुह्वति**' इति दर्शनात्। तिर्यञ्चं दक्षिणपरिधिमारभ्य सन्ततमोत्तरपरिधिमध्यमाघारयति। वेदेनोपयम्य वेदमाधारीकृत्य तदेतद दृष्टार्थमेव। द्वैधे विशेषः '**आघाराविति सूत्रं बौधायनस्य। अभिसृतौ इति**[1] **व्यतिषक्तौ इति**[2] **शालीकिः**' ( बौ० श्रौ० २०।११ )। आघारौ-अभिसृतौ सर्वदिक् सम्बन्धिनौ। अनेन प्राञ्चौ तिर्यञ्चौ दक्षिणोत्तरपरिधिसन्धिमारभ्य यथाक्रममक्ष्णया च प्रसृतौ संगृहीतौ। व्यतिषक्तौ इति। शालीकिमतेन प्राजापत्यस्य दक्षिणपरिधिमध्यारभ्य ऐन्द्रस्य च मध्यमपरिधिमध्यारम्भः। यथोक्ता चाक्ष्णया प्रवृत्तिः संगृहीता।

**अथ सम्प्रैषमाह 'अग्नीदग्नीं स्त्रिस्त्रि सम्मृड्ढि' इति।**

अग्नीनिति बहुवचनं परिध्यपेक्षम्। तत्सन्निहितत्वात्परिधीनां गङ्गाशब्देन तटवत्। द्वैधे विशेषः—'**सम्प्रैष इति। अग्नीदग्नीनिति बौधायनः। अग्निमग्नीदिति शालीकिः। अग्नीत्परिधींश्चाग्निं चेत्यौपमन्यवः**' ( बौ० श्रौ० २०।११ )। शालीकिपक्षेऽग्निशब्दो मुख्यस्तत्राग्नेरेव सम्मार्गः, परिधीनामिति। न वाच्यमग्निमिति जात्यपेक्षयैकवचनमिति। परिधीनामप्युपसंग्रह इति। मुख्यलाक्षणिकयोरेकशब्दप्रवृत्तिनिमित्तकजातिसमावेशयोगात्। न हि [3]मञ्चत्वं पुरुषेषु समाविशत इति। तथात्वे लक्षणाभावप्रसङ्गादिति। अतः शालीकिपक्षेऽग्नेरेवसम्मार्ग इत्यौपमन्यवपक्षाद् भेदः।

**अथैष आग्नीध्र इध्मसन्नहनानि स्फ्य उपसङ्गृह्य परिधीन् सम्मार्ष्टि त्रिर्मध्यमं त्रिर्दक्षिणार्ध्यं त्रिरुत्तरार्ध्यम्। त्रिराहव-**

---

१. ब श्र— अमीषू इव।

२. इ१— व्यतिषिक्ताविति। ब श्र— व्यतिषक्तौ स्याताम्।

३. भ— पंचत्वम्।

**नीयमुपवाजयति 'अग्ने वाजजिद् वाजं त्वाग्ने सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितम् । वाजजित्यै सम्माज्र्म्यग्निमन्नाद-मनाद्याय' (तै० ब्रा० ३।७।६।१४-१५) इति ।**

एष एवं प्रेषितः । आग्नीध्र इत्येतावतैव पर्याप्त एष इति निर्देशः सम्प्रैषानुविधानद्योतनाय । अतएवानूबन्ध्यार्थं मैत्रावरुण्यामिक्षायां[1] सत्स्वपि परिधिषु प्रैषाभावान्न तत्सम्मार्गः । अवभृथेष्ट्यामसत्स्वपि परिधिषु प्रैषानुगुण्येन सम्मार्ग इति । स च परिधिषु मध्यमस्योदगपवर्गत्वेनान्यत्र प्रागपवर्गत्वेनेति विवेकः । तथा च सूत्रम्— **'परिधीन यथा[2]परिहितमन्वग्रं त्रिस्त्रिः सम्मृज्ये[3]ति त्रिरग्निं प्राञ्चम्'** ( आप० श्रौ० २।१३।१) इति च ।

**अथाग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति 'भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नमः' (तै० १।१।१२।१) इति ।**

अञ्जलिः सम्पुटितो नमस्कारविनियुक्तो गृह्यते मन्त्रलिङ्गानुरोधेन । मन्त्रलिङ्गेनेत्याहवनीयनमस्कारः प्रतीयते । तद्ब्राह्मणञ्च—**'तस्मा एव नमस्करोति'** इति । **'आहवनीयाञ्जलिं करोति'** ( भा० श्रौ० २।१३।१ ) इति भरद्वाजवचनाच्च । अतएवोक्तं प्राञ्चमिति । अनेनाञ्जलेराहवनीयाभिमुख्यमाह । अग्रेण जुहूपभृताविति देशनियमः ।

**अथादत्ते दक्षिणेन जुहूम् 'जुहूवेह्यग्निस्त्वा ह्वयति देवयज्यायै' ( तै० १।१।१२।२ ) इति । सव्येनोपभृतम् 'उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै' (तै० १।१।१२।३) इति ।**

सव्येनोपभृतोरुत्तराधरीभावः सिध्यति । तथा च सूत्रम् **'उपभृति जुहूमत्या-**

---

१. ग— °भिक्षार्थम् ।

२. आप० श्रौ०— °परिधित० ।

३. आप० श्रौ०— **'सम्मृज्य'** इत्यस्यानन्तरम् **'अग्ने वाजजिद्वाजं.... मन्नाद्याय'** ।

दधाति । मुखतोऽभिहृत्य मुखत उपावहरति । सर्वत्रैवमप्याधानोपावहरणे भवतः । न च संसिञ्जयति । नाभिदेशे च[1] स्रुचौ धारयति' (आप० श्रौ० २।१३।३-४) इति संसिञ्जनं परस्परसंयोगाच्छब्दकरणम् ।

**सव्येनात्याक्रामञ्जपति 'अग्नाविष्णू मा वामव क्रमिषं वि जिहाथां मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतम्' ( तै० १।१।१२।४) इति ।**

सव्येन चरणेन वेदिं लङ्घयन् जपति । अनेनोदङ्ङत्याक्रमणं दक्षिणेन चरणेनेति गम्यते । अत्राप्यात्याक्रमणदेशनियमः सौत्रोऽनुसन्धेयः । अविरुद्धत्वात् अग्रेण '[2]स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरम्' (आप० श्रौ० २।१३।५) इति । अनवक्राममिति । णमुलाभीक्ष्ण्यस्य प्रतीतेः । सर्वेष्वपि गमनागमनेष्वयमेव नियम इति दर्शयति । द्वैधे विशेषः 'अत्याक्रमण इति । सव्येन प्रदास्यन्नत्याक्रामेत् । हुत्वामुतो दक्षिणेनेति बौधायनः । दक्षिणेन प्रदास्यन्नत्याक्रामेत् । हुत्वामुत सव्येनेति शालीकिः' ( बौ० श्रौ० २०।१२ ) इति । प्रदास्यन् हविर्दातुमिच्छन् । अनेन दक्षिणातिक्रमणमुपलक्षयति अमृत इति अस्मात् स्थानात्, अवधिभूतादुदगातिक्रमण इत्यर्थः ।

**स्थानं कल्पयते 'विष्णोः स्थानमसि' ( तै० १।१।१२।५ ) इति ।**

तिष्ठन्त्यस्मिन्निति स्थानमाहवनीयाद् दक्षिणप्रदेशः । अनेन तिष्ठता हवनं सूचयति । विशेषतश्चाघारे प्रह्वतापि निषिद्धा । 'यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याघारयेत्' इति दर्शनात् ।

**अन्वारब्धे यजमाने मध्यमे परिधौ [3]संस्पृश्यर्जुमाघारमा-**

---

१. स— 'च' नास्ति ।

२. आप० श्रौ०— स्रुवो० ।

३. व श्र— संस्पर्श्यर्जु० ।

**धारयति सन्ततं प्राञ्चमव्यवच्छिन्दन् 'इत इन्द्रो अकृणोद्-वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपते रिन्द्रावान्त्स्वाहा' (तै० १।१।१२।६) इति ।**

अन्वारब्धे यजमाने । कर्त्तरि निष्ठा । यजमाने अन्वारम्भकर्त्तरि । आरम्भ एवान्वारम्भः स्पर्शः । समन्वारब्ध आधारयतीत्यन्वयः । अत्रान्वारम्भकर्मताध्वर्योः स्रुचामाज्यस्य वा स्यात् । अविशेषोपादानात् । अन्तरङ्गत्वात्तावदाज्यस्यैव, तथा च सूत्रम् [1]'**स्रुच्यमन्वारभ्य**' ( आप० श्रौ० ४।९।५ ) इति । एवं च सति यत्र विशेषोपादानं, तत्र तस्यैव संस्पर्शः । यथा-'**स्रुचः[2] सजा अभिमृशति**' इति, '**पशोरवदानानि सम्मृशति** ( बौ० श्रौ० ४।९ ) इति, '**तं [3]त्रिः संयतमन्वारभते**' इति च । यत्र [4]त्वान्वारब्धे यजमाने स्वाहेत्यादिषु न विशेषोपादानमस्ति, तत्रान्तरङ्गत्वाद्धविः संस्पर्शः सौत्रो वा विशेषोऽनुसन्धेय इति । मध्यमे परिधाविति पाठः, न तु परिधिसन्धाविति । प्राञ्चमित्यनेनानन्वयात् । ऋजुमवक्रम् । सन्ततमित्यनेनैव सिद्धे यदुक्तमव्यवच्छिन्दन्निति, तेन व्यवच्छिद्यापि [5]व्यवच्छेदस्थानात्सातत्यं निवारयति । अव्यवच्छिन्दन्नित्येतावतैवालमिति चेत् सत्यम् । ब्राह्मणानुसारेण सन्ततत्वमनूद्य तस्यैवोपव्याख्यानत्वादिति ।

**'बृहद्भाः' (तै० १।१।१२।७) इति स्रुचमुद्गृह्णाति ।**

उद्ग्रहणमुद्धृत्य ग्रहणम् । एतच्चादृष्टार्थम् '**सुवर्गो वै लोको बृहद्भाः**' (तै० ब्रा० ३।३।७।९) इत्यर्थवादात् ।

---

१. ग— स्रुच्या० । भ— स्रुच० ।
२. भ — स ता ।
३. ङ, भ— °तं निः सर्पन्त० ।
४. ग स— त्वनारब्धे ।
५. ग स— विच्छेद० ।

**अथासंस्पर्शयन् स्रुचावुदङ्ङत्याक्रामञ्जपति 'पाहि माऽग्ने दुश्चरितादा मा सुचरिते भज' (तै० १।१।१२।८) इति ।**

स्रुचौ जुहूपभृतौ असंस्पर्शयन्निति । अनेन यत्र संस्पृश्योदङ्ङत्याक्रमणं तत्र मन्त्राभावं द्योतयति । अथवा प्राथमिकानामेवाक्रमणप्रत्याक्रमणस्थानकल्पानां समन्त्रकत्वं नान्येषामिति नियमः । उपसदादिषु तु विशेषवचनात् [1]प्राथमिकेष्वप्य-मन्त्रत्वसिद्धिः । तथा च सूत्रम्—'एते एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवतः' इति । एते एव आदिभूते एव । अनेन स्थानकल्पनस्याप्यमन्त्रकत्वं द्योतयति, आदित्वाविशेषात् ।

**जुह्वा ध्रुवां समनक्ति 'मखस्य शिरोऽसि संज्योतिषा ज्योतिरङ्क्ताम्' (तै० १।१।१२।६) इति ।**

अत्रानक्तीति वचनाद्बिन्दुमात्रप्रक्षेपः, न तु धारारूपः । तथात्वे तु, अवनयतीति ब्रूयात् । अभिघारयतीति वा । अतः तदतिरिक्तमञ्जनं बिन्दुमात्रं सम्पाद्यमिति गम्यते ।

**अथ यथायतनं स्रुचौ सादयित्वा ।**

यथायतनं स्थानमनतिक्रम्य ।

**प्रवरं प्रवृणीते । उत्कर इध्मसन्नहनानि स्फ्य उपसंगृह्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति । अथाश्रावयति 'ओं श्रावय, अस्तु श्रौषट् । अग्निर्देवो होता देवान् यक्षद्विद्वांश्चिकित्वान्मनुष्वद्-भरतवदमुवद्ब्रह्मण्वदेह वक्ष्यद्ब्राह्मणा अस्य यज्ञस्य प्रावितारः' इति । असौ मानुष इति होतुर्नाम गृह्णाति ।**

---

१. ग स— प्राथमिकेऽप्यमन्त्रसिद्धिः ।

प्रवरः आर्षेयः, गोत्रप्रवर्तकानामृषीणां सन्तत्यविच्छेदन[1] सम्बन्धः तं वृणीते। वरणं नाम देवेज्यासम्बन्धप्रार्थनम्। यजमानविषये तत्सम्बन्धप्रकाशनम्। तथा चात्रार्षेयवरणं होतृवरणमित्युभयमङ्गाङ्गिभावेन वा पृथक् प्राधान्येन वानुष्ठेयमेकध्येनोच्यते। होतृवरणं च द्विरूपम्—दैवहोतृवरणम्, मानुषहोतृवरणमिति। तत्र **'अग्निर्देवो होता'** इत्यादिना दैवहोतृवरणम्। **'असौ मानुषः'** इति प्रकृतहोतुर्नामग्रहणं मानुषवरणमिति। **'देवं च मानुषं च होतारौ वृत्वा'** (आप० श्रौ० ७।१४।३) इति सूत्रोक्तेः। द्वैधे विशेषः **'प्रवर इति सूत्रं शालीकेः। अत्रो ह स्माह बौधायन उत्कर ऊर्ध्वाग्रं स्फ्यं निहत्य प्रवरं प्रवृणीयादत्रैव च स्फ्यमुदस्येदुपरिष्टाद्[2] वोपस्पृशेदिति। होतुर्वरण इति। स ह स्माह बौधायनो यद्यस्य पिता वाचार्यो वा ज्यायान् वा होता स्यादुपांश्वेतेषां गुरूणां नामानि गृह्णीयादिति। उच्चैरेव होतुर्नाम गृह्णीयादिति शालीकिः'** (बौ० श्रौ० २०।१२)।

अत्रैव काले वरणसमनन्तरकालमेव स्फ्यमुदस्येत् निरस्येत्। उपरिष्टाद्वा। यदा होता सम्मार्गोऽसीत्यादिनाध्यात्ममुख[3]मिध्मसन्नहनाग्रेणातिमार्ष्टि तदुत्तरकालमित्यर्थः। पित्रादिषु गुरुषु होतृषु सत्सु तेषां नामानि नीचैर्गृह्णीयादित्येकः पक्षः। शालीकिपक्षे तु यथाकर्मर्त्विज इति वचनादध्वर्योरन्तुरङ्गतया गुरूणामपि होतॄणां कर्मकाले नामग्रहणमविरुद्धमित्युच्चैस्त्व[4]मविरुद्धं नामग्रहणस्य। अन्यथा यजेत्यादिष्वेकवचनपक्षोऽ[5]प्यनुपपन्नः[6] स्यात्।

कर्मान्ते त्वन्यद्विचारितम्—**'आर्षेयमसंप्रजानानस्य प्रवरं ब्रूहीति मनुष्वद्भरतवन्मनुवदित्येव ब्रूयादिति। विज्ञा[5]यते [7]मानव्यो हि प्रजा इति ब्राह्मणम्।**

---

१. इ१ — °यवच्छेदेन।

२ ब श्र— °रिष्टाच्चो०।

३. इ१— °नाध्यात्मं मुख०। भ— °नाध्वात्मसुख०।

४. ग— °मित्युच्चैष्टूय०।

५-५. भ— 'प्यनुपपन्न........ब्रूयादिति वि' नास्ति।

६. ग — °प्युपपन्नः।

७. ग स— मानुष्यो०।

पुरोहितप्रवरो वा राज्ञोऽथाप्रज्ञातबन्धुराचार्यामुष्यायणमनुब्रवीत । आचार्य-प्रवरमु हैव प्रवृणीत । अथ होतारं प्रवरयेत्' (बौ० श्रौ० २४।२८) इति । पूर्वपक्ष-प्रश्नः आर्षेयमसंप्रजानानस्य प्रवरं ब्रूहीति । उत्तरम्-मनुष्वदित्यादि । तत्र प्रमाणोप-न्यासः विज्ञायत इत्यादि । अप्रज्ञातबन्धुः अपरिज्ञातपित्रादिः । आचार्यामुष्यायणम् आचार्यस्य पितृस्थानीयत्वे तत्सम्बन्धं ब्रूयात्—अमुष्यपुत्र इत्यादिषु ।

अविज्ञातप्रवरस्यायाज्यत्वमाशङ्क्य हौत्रशेषप्रश्ने परिहृतम् 'अत्रार्षेयं वृणीते । ऋषीणां हि देवाः पुरुषमनुबुध्यन्त इत्यृषिणैवार्षेयं वृणीते । अथ वै भवति आर्षेयं वृणीते बन्धोरेव नैति । अथो सन्तत्यै परस्तादर्वाञ्चो वृणीते । तस्मात्परस्ता-दर्वाञ्चो मनुष्यान् पितरोऽनुप्रपिबत-इति ब्राह्मणम् । इतः [1]पराचोऽध्वर्युर्वृणीते, अमुतोऽर्वाचो होतेति ब्राह्मणम् । एकं वृणीते द्वौ वृणीते त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति प्रवृणीत इति ब्राह्मणम् । एकं वृणीते द्वौ वृणीते त्रीन् वृणीते[2] यथर्षिमन्त्रकृतो वृणीत इति ब्राह्मणम् । आर्षेयमविद्वानयाज्य इति ब्राह्मणम् । [3]अथवाचार्यस्यार्षेयं विद्वान् याज्य इति ब्राह्मणम्' ।

इतः पराचोऽध्वर्युर्वृणीत इति सन्निहितमृषिं निर्दिशन्ति । पराच इति प्राक्तनान् । अयमर्थ—अध्वर्युः प्रातिलोम्येन । तद्यथा-भरद्वाजवद्बृहस्पतिवदङ्गिरो-वदिति वदन्ति । अमुतोऽर्वाचो होतेति । अमुत इति व्यवहितकूटस्थनिर्देश इति । अर्वाच इति ततोऽवरान् परस्तादारभ्येत्यर्थः । तद्यथा आङ्गिरसबार्हस्पत्यभारद्वाजेति । यथर्षि मन्त्रकृतो वृणीत इति संग्रहवाक्यम् । तस्यैवोपव्याख्यानम्—एकं वृणीत इत्यादि । तथा च, शौनकेति होता, शुनकवदित्यध्वर्युः । वासिष्ठेति होता, वसिष्ठ-वदित्यध्वर्युरित्यादि । तथा वैश्वामित्रपौरणेति होता, पुरणवद्विश्वामित्रवदित्यध्वर्युः । त्र्यार्षेयास्तूदाहृता भारद्वाजादयः । पञ्चार्षेयास्त्वाङ्गिरसबार्हस्पत्यभारद्वाजशैन्य-गार्ग्येतिहोता, गर्गवच्छिनिवदभरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युरिति । न

---

१. इ१— पराञ्चो० ।

२. इ१— 'वृणीते' इत्यस्यानन्तरम् 'मन्त्रकृतो वृणीते' ।

३. ग भ स — अपि ।

चतुरो वृणीते न पञ्चाति प्रवृणीत इति । एतद्द्व्यामुष्यायणविषयम् । द्व्यामुष्यायणस्य* गोत्रद्वयस्यापि [१]द्व्यार्षेयत्वे चतुर्णां वरणप्रसक्तिः त्र्यार्षेयत्वे तु षण्णां[२] पञ्चार्षेयत्वे द्व्यार्षेयादिसन्निपाते सप्तादीनामपि वरणप्रशक्ति । तन्निषेधार्थमुक्तम्-न पञ्चाति प्रवृणीत इति । तत्र द्व्यामुष्यायणस्य† जन्मगोत्राद् द्वयोर्वरणं [३]प्रविष्टगोत्रादेकस्य, जन्मगोत्रस्यैकार्षेयत्वे तु प्रविष्टगोत्रादेकस्यैव[३] वरणमिति । एवं याज्यस्य द्व्यामुष्यायणत्वेऽपि यागाधिकार उक्तः । एवमृत्विजामपि द्व्यामुष्यायणानां स्वीकारो [४]विवृतः । तथा च वक्ष्यति 'द्विप्रवरान् परिहार्य' इति । अयाज्ययाजने हि याजकस्यैव प्रत्यवायः, यष्टुरभ्युदय एव । [५]याजकवैगुण्ये तु नापूर्वसिद्धिः । अतएवायाज्यायाजने प्रायश्चित्ताम्नानमुपपद्यते । तथा च धर्मे—'अथ खल्वयं पुरुषो याप्येन कर्मणा [६]**लिप्यते । मिथ्या वा चरत्ययाज्यं वा याजयत्यप्रतिग्राह्यस्य वा प्रतिगृह्णात्यनाश्यान्नस्य वाऽन्नमश्नात्यचरणीयेन वा चरति ।** तत्र [७]प्रायश्चित्तं [८]कुर्यात् न कुर्यादिति[८] । न हि कर्म क्षीयन्त इति । [९]अपि तु कुर्यादेव'[९] (बौ० ध० ३।१०।२-६) इति ।

अयं पुरुष इति क्षेत्रज्ञं निर्दिशति, परमात्मनः कर्मलोपशङ्कानुदयात् । तस्याविद्यमानत्वे वा सुतरां क्षेत्रज्ञ एव तद्विचारविषयः । खल्वित्यवधारणे । याप्येन

---

१. ग — द्व्यार्षेयम् । स — द्वर्षेयम
२. ग — पञ्चर्षेयाद्० । स — पञ्चार्षेण ।
३-३. ग स — प्रविष्टगोत्रस्यैव ।
४. इ१ भ — निर्वर्तितः ।
५. गं स — याज्य० ।
६. बौ० ध०—'लिप्यते' नास्ति ।
७. स — प्रायश्चीतम् ।
८-८. प ग, बौ० ध०— कुर्यान्न कुर्यात् ।
९-९. बौ० ध०— कुर्यात्वेव ।

---

*द्व्यामुष्यायणस्य = दत्तपुत्रो द्व्यामुष्यायणः । तस्य जनकस्य प्रतिग्रहीतुश्च प्रवरद्वयं कर्त्तव्यम्— इ१ ।

†तत्र द्व्यामुष्यायणस्य = तत्र एक एकार्षेयः । अन्यस्त्र्यार्षेयः । तत्र त्र्यार्षेये एकमृषिं त्यक्त्वा वृणीते । अपि वा, उभयत्र त्र्यार्षेयत्वे एकत्रैकमृषिं त्यक्त्वा वृणीते— इ१ ।

कर्मणायं पुरुष एव लिप्यते, नान्यः परमात्मा। तदभावपक्षे त्वयं पुरुषो लिप्यत एव, न तु कर्तृत्वाभिमानत्यागादिना न लिप्यत इति पक्षः सम्भवतीत्यर्थः। यापयं कर्म पापरूपं तदेव विवृणोति मिथ्या वाचरतीत्यादिना। मिथ्याचरणं नाम पुण्यव्यपदेशेन-पापाचरणम्। यथाग्निष्टोमे एवं वर्तुलसुराचमसादिनाभिचारानुष्ठानादि। अयाज्यं वा याजयति। अयाज्यशब्दोऽयं यागप्रसक्तिमन्त्रं सदोषमाह। तथैवाप्रतिग्राह्योऽपि सदोषो दाता। अनाश्यान्नः अभोज्यान्न एवमादिषु। यष्टुर्भोजयितुरभ्युदय एव, याजकादिस्तु प्रत्यवायभाग् भवति। उपलक्षणं चैतत् सर्वेषां पापकर्मणामित्याह। अचरणीयेन वा चरति। वा-शब्दाद् विहिताननुष्ठानोपसंग्रहः। तत्र प्रायश्चित्तं कुर्यात्[4] न कुर्या[4]दिति। मीमांसत इति शेषः। विचार्यमाणानामितिप्लुतः। पूर्वपक्ष्याह—न हि कर्म क्षीयत इति। **'प्रारब्धकर्मणां भोगादेव क्षयः'** इति श्रुतेः। स्मृतिरपि—**नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्'** (ब्र० पु० ४।८५।३६) इति।

[1]सिद्धान्त्याह अपि तु कुर्यादेवेति। तुशब्दः पक्षं व्यावर्तयति। भोगप्रक्षयस्त[2]त्प्रायश्चित्तादपि। प्रक्षयस्यागमैकगम्यत्वात्। लोके च मरणफलस्य सर्पदंशनादिकर्मणो-मणिमन्त्रादिना निष्फलीकरणदर्शनात्। अतः पापस्य कर्मणः प्रायश्चित्तेनापि, विना नरकोपभोगं प्रक्षय इति। अलमतिप्रसगेन। प्रकृतमनुसरामः।

उत्कर इध्मसन्नहनानि स्फ्यं उपसंगृह्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति। इध्मसन्नहनानि स्फ्ये आधारभूते उपसंगृह्य अध्वर्युरुत्करदेशे तिष्ठति। तस्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति। उपश्लिष्यन्निवाव्यवहितस्तिष्ठतीत्यर्थः[3]। अथाश्रवयतीति। अनेनाश्रावणप्रत्याश्रावणयोरुभयोर[4]प्युपसंग्रहः। एतदेवोदाहरति—ओं श्रावय, अस्तु श्रौषट्—इति।

---

१. भ— सिद्धान्ततया।

२. ङ१— °प्रक्षयवत्।

३-३. ङ१— तिष्ठति।

४-४. ग स— 'उभयो०' नास्ति।

होत्रशेषप्रश्ने प्लुतस्थानानि दर्शितानि, तदनुरोधेन प्लावयेत् । **'अथ वै भवति आश्रावणे प्रथमं द्वितीयं चाक्षरं प्लवते, प्रत्याश्रवणे तृतीयं संयजनेऽप्याद्यं वर्धयेत् । याज्यान्तान् प्लावयेत् । प्लुतादिना वषट्कारेण वौषट्कारेण त्रिमात्रेणोरः कण्ठं चाभिप्लवते, उच्चैस्तरां वषट्कुर्यात्'** इति । अत्राक्षरशब्दः स्वरवचनः, व्यञ्जनस्य प्लुताभावात् । संयजने यजेत्यस्मिन् वचनेऽप्याद्यं स्वरं वर्धयेत् । द्विमात्रत्वेनोच्चारयेत् । वृद्धेर्द्विमात्रत्वनियमात् । **'वृद्धिरादैच्'** (पा० अष्टा० १।१।१) इत्यत्र तपरकरणेन तत्कालग्रहणात् । **तःपरो यस्मात् तादपि परस्तपर** इति च वृद्धिसंज्ञकानां त्रयाणामपि स्वराणां द्विमात्रत्वं नियमति । प्लुतादिना वषट्कारेणेत्यस्यैवोपव्याख्यानम्—**वौषट्कारेण** त्रिमात्रेणेति । अनेन प्लुतस्य सर्वत्र त्रिमात्रत्वं द्योतयति ।

**उपोत्थाय होता विमुञ्चति । [1]विमुक्तोऽध्वर्युरुपविशति[1] ।**

स्वकर्म कृत्वा होताध्वर्युं विमुञ्चति । तेन होत्रा विमुक्तोऽध्वर्युरुपविशति ।

**प्रसवमाकांक्षन्नास्ते ।**

प्रसवः [2]अभ्यनुज्ञानम् ।

**[3]अत्र प्रयोगक्रमः—**

उत्तरस्य वेदिश्रोणेरुत्तरतस्तृणानि संस्तीर्य **'होतरेहि'** इत्यध्वर्युणा हूते होतरि, यथोक्तनियमेन तीर्थप्रपदनं कुर्वाणे, अध्वर्युमन्तरंगीकृत्य होतरि होतृसदने तिष्ठति सति, इध्मात्समिधमाददानोऽध्वर्युः **'अग्नये समिध्यमानायानुब्रूहि'** इति ब्रूयात् । ब्रह्मणोऽपि वाग्यमनमाप्रवरप्रवरणात्[4] । यदा होता **'प्र वो वाजा०'** इति ब्रूयात्तदा प्रथमां समिधमभ्यादधाति । अत ऊर्ध्वं [5]प्रणवे प्रणवेऽभ्यादधाति ।

---

१-१. ङ१ भ— 'विमुक्तो...विशति' नास्ति ।

२. ग स— ह्यनुज्ञानम् ।

३. ङ१— तत्र ।

४. भ— °वरणात् ।

५. ग - 'प्रणवे' नास्ति ।

यजमान इध्ममभ्याधीयमानमनुमन्त्रयते 'उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्धमन्विद्ध मन्द्रजिह्व' (तै० १।६।२।१०) इति । यदा होता 'समिद्धो अग्न०' इति ब्रूयात्तदैकामवशिष्य समित्त्रयप्रक्षेपः । यदा होता 'आ जुहोत०' इति ब्रूयात्तदाध्वर्युरेतेन वेदेन त्रिराहवनीमुपवाजयति । अनूक्तासु सामिधेनीषु 'अग्ने महाँ असि' इत्युक्ते ध्रुवांज्यात्स्रुवेणोपहत्य तिर्यञ्चमाघारमाघारयति दक्षिणपरिधिमध्यमारभ्य सन्ततमोत्तरपरिधिमध्यात् 'प्रजापतये स्वाहा' इति मनसा । आघार्यमाणमनुमन्त्रयते यष्टा 'मनोऽसि प्राजापत्य मनसा मा भूतेनाविश' इति प्रजापतय इदं न मम' इति । याजमानपाठक्रमात् स्रौवाघारत्पूर्वं होतृप्रवरानुमन्त्रणमिति केचित् । अध्वर्युराग्नीध्रं संप्रेष्यति 'अग्नीदग्नीन् त्रि स्त्रिः संमृड्ढि' इति । आग्नीध्र इध्मसन्नहनैः [1]सह स्फ्यं गृहीत्वा परिधीन् सम्मार्ष्टि-मध्यमपरिधिमूलमारभ्याग्रात् त्रिरुदगपवर्गं प्राङ्मुख उपविष्य सम्मार्ष्टि, अग्रेणाहवनीयं परीत्य ब्रह्माहवनीययोर्मध्य उदङ्मुख उपविश्य दक्षिणपरिधिमूलमारभ्याग्रात् त्रिः प्रागपवर्गं सम्मार्ष्टि, यथागतमेत्य हवनीयस्योत्तरत उपविश्य दक्षिणामुख उत्तर-परिधि मूलमारभ्याग्रात् त्रिः प्रागपवर्गं सम्मार्ष्टि । आहवनीयस्य पश्चिमोत्तरे देशे प्राङ्मुख उपविश्याहवनीयं स्फ्याग्रेण [2]प्रागपवर्गं त्रिः सम्मार्ष्टि 'अग्ने वाजिजिद्' इति ।

अध्वर्युर्वेदेरुत्तरत उपविश्य जुहूपभृतोरग्रेण[2] प्राङ्मुखमञ्जलिपुटं करोति 'भुवनमसि' इति । आदत्ते दक्षिणेन हस्तेन जुहुम् 'जुहू वेहि०' इति । सव्यहस्तेनोपभृतमादत्ते 'उपभृद्वेहि०' इति । सव्येन पादेन स्रुचोऽग्रेण मध्यमं परिधिमपरेण प्रस्तरमवक्रम्य[3] दक्षिणात्याक्रम्य जपति अग्नाविष्णू' इति । आहवनीयस्य दक्षिणत उदङ्मुख ऊर्ध्वस्तिष्ठति 'विष्णोः स्थानमसि' इति । [4]यजमानो [5]जुहूपगतमाज्य-

---

१. ग— 'सह' नास्ति ।

२-२. भ— 'प्रागपवर्गं....रग्रेण' नास्ति ।

३ 'अनवक्रम्य' इति पाठः स्यात् ।

४. ग भ— यजमाने तु ।

५. प इ१ स— जुहूगत० ।

मन्वारभते। अध्वर्यु[1]र्जौहवाज्येन मध्यमपरिधिमध्यमारभ्य प्राञ्चमविच्छिन्दन्नवक्रमाघारयतीध्मकाष्ठपर्यन्तम् 'इत इन्द्रो०' इति। यजमान आघार्यमाणमाघारमनुमन्त्रयते 'वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविश' (तै० १।६।२।१३) इति, 'इन्द्रायेदं, न मम' इति। अध्वर्युः 'बृहद्भाः' इति जुहूमुद्गृह्णाति। जुहूपभृतावसंस्पर्शयन् दक्षिणेन पादेनोदङ्ङत्याक्रामन् जपति 'पाहि माग्ने०' इति। स्रुच्याघारे क्रमणप्रत्याक्रमणस्थानकल्पानामेव समन्त्रकत्वम्। जुह्वाज्यबिन्दुना ध्रुवाज्यं त्रिः समनक्ति 'मखस्य' इति। यथायतनं जुहूपभृतौ दक्षिणेन हस्तेनासादयति। 'दक्षिणं प्रतीयात्। अनादेशे' इति वचनात्।

इध्मसन्नहनैः सह स्फ्यं गृहीत्वोत्करदेश ऊर्ध्वाग्[2]रस्तब्ध्वाध्वर्युस्तिष्ठति। तस्य पश्चाद्भागमनुपश्लिष्यन्निवाग्नीध्रस्तिष्ठति। अध्वर्यु 'ओं श्रावय' इत्याग्नीध्रं ब्रूयात्। आग्नीध्रः 'अस्तु श्रौषट्' इति प्रति ब्रूयात्। अध्वर्युः प्रवरं प्रवृणीते— 'अग्निर्देवो होता०...प्रवितारः। यज्ञशर्मा मानुष' इति। होतुर्नाम प्रथमान्तं गृह्णाति। होत्रा विमुक्तोऽध्वर्युः स्फ्यं निधाय होतुरनुज्ञां कांक्षन्नास्ते।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने त्रयोदशोऽध्यायः।

---

१. ग — जुह्वाज्येन।

२. ग — तत्रा०।

# चतुर्दशोऽध्यायः

**अथ यत्र होतुरभिजानाति 'घृतवतीमध्वर्यो स्रुचमास्यस्व' ( तै० २।५।९।१३ ) इति तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह 'समिधो यज' इति वषट्कृते जुहोति। 'यज यज' इति। चतुर्थं यद्‌यन्नधर्ममौपभृतस्याज्यस्य जुह्वां समानयते।**

यत्र यस्मिन् काले होतुः सकाशात् 'घृतवती०' इत्यादिकं वाक्यं शृणोति। न चात्र काललक्षणा, अपि त्वङ्गाङ्गिभावः। मन्त्रः स्रुगादानयोर्मन्त्रलिङ्गानुरोधात्। तत्र स्रुचमित्येकत्वमविवक्षितम्। जुहूपभृतावादायेति द्वयोरादानविधानात्। अत्याक्रमणे पूर्वोक्त एव धर्मो मन्त्रवर्जितः। आश्राव्याहेत्यत्र प्रत्याश्रावित इति शेषः। द्वितीयादिप्रयाजेषु 'यज यज' इति वचनात् तत्तत्प्रयाजवाचकशब्दाभिधाननिवृत्तिः। न [1]त्वाश्रावणप्रत्याश्रावणयोरपि। 'समिधो यज' इति वाक्यान्तरितत्वात्। एतद्वाक्यैकदेशरूपत्वाच्च 'यज [2]यज' इत्यस्य तदेकदेशान्तरस्थानीयस्यैव निवृत्तिः।

चतुर्थं प्रयाजं यक्ष्यन्निति वचनाच्च चतुर्थपञ्चमयोरेवौपभृदाज्यार्धेन हवने सति, अवशिष्टजौहवाज्येन हविरभिघारणं विधास्यमानमुपपद्यते।

**पञ्च प्रयाजानिष्ट्वा-इति।**

द्वैधे विशेषः 'अभिक्रामं [3]जुहुयादिति। स ह स्माह बौधायनः सर्वेणाभि-

---

१-१. ग भ स— त्वाश्रावणयोरपि।

२. इ₁— 'यज' नास्ति।

३. ब श्र—जुहोति।

**क्रामेद् पद्भ्यामाहुतोभिः स्वरेणोत्तरामुत्तरामाहुतिं ज्यायसीं ज्यायसीं जुहुयादिति । पद्भ्यामेवाभिक्रामं समानत्राहुतीर्जुहुयादिति शालीकिः । समानत्र तिष्ठन्नाहुतिभिरेवाभिक्रामेदित्यौपमन्यवः । समानत्रैव तिष्ठन् प्रदक्षिणमनुदिशं हुत्वा मध्ये स्वाहाकारं जुहुयादित्याञ्जीगविः'** ( बौ० श्रौ० २०।१३ ) । अभिक्रामम् अभिक्रम्याभिक्रम्य । सर्वेणेत्यस्य विवरणं पद्भ्यामाहुतिभिः स्वरेणेति । पक्षं तावद्विवृणोति—उत्तरामुत्तरामाहुतिं ज्यायसीं ज्यायसीं जुहुयादिति । आहुतीनां ज्यायस्त्वं स्वरापेक्षम् । ततश्च प्रथमां मन्द्रेणोत्तरामुत्तरां ततस्ततोऽप्युच्चतरेणेत्यर्थः । समानत्र एकस्मिन् प्रदेशे । आहुतीभिरेवाभिक्रामेदित्यौपमन्यवपक्षे अभीति आभिमुख्यवचनः, न तु परित इत्यर्थः । आहुतीरेवाहवनीयाभिमुख्येन क्रामयन्नित्यर्थः । तथा च सूत्रम्— **'अपरेणाघारसम्भेदं पञ्चप्रयाजान्** [1]**प्राचो यजति'** ( आप० श्रौ० २।१७।९ ) इति । अनुदिशमिति । दिगानुपूर्व्येणानेन प्राच्यामुपक्रमः । प्रदक्षिणं च[3] सामान्यतः प्राप्तम् । अयमेवार्थः सूत्रे स्पष्टीकृतः **'समिधः पुरस्तात् तनूनपातं दक्षिणत इडः पश्चाद् बर्हिरुत्तरतः स्वाहाकारं मध्ये'** (आप० श्रौ० २।१७।२) इति ।

गोपालोऽपि **'प्रागादिषु**[4] **चतुर्दिक्षु प्रयाजमध्य उत्तमः'** इति । कर्मान्ते च देवता नियम उक्तः **'ऋतुदेवता उ खलु प्रयाजा भवन्ति'** (बौ० श्रौ० २४।३) इति । हेमन्तशिशिरयोरैक्येन पञ्चर्तवः **'हेमन्तशिशिरावत्र समासं गच्छतः'** (बौ० श्रौ० २४।२७ ) इत्युक्तत्वात् । अतो वसन्तादिक्रमेण यथायोगमृतवो देवताः । **'समिधो यजति वसन्तमेवर्तूनामवरुन्धे'** (तै० २।६।१।१) इत्यादिब्राह्मणानुसारेण द्रष्टव्याः ।

**उदङ्ङत्याक्रम्य-इति ।**

अत्र च स्विष्टकृत्यनूयाजान्ते चाभिधानात् सर्वत्रापि दैवविषय उदङ्ङत्याक्रम्यैव हविर्ग्रहणम् । दक्षिणातिक्रम्य च हवनमित्यनुसन्धेयम् ।

---

१. ग भ स— आहुतीर्ज्या० ।

२. इ१ भ— प्राञ्चो० ।

३. ग — पञ्च ।

४. ग भ — प्रागादि० । स— प्रागादि च ।

**संस्रावेणानुपूर्वं हवींष्यभिघारयति ध्रुवामेवाग्रेऽथ दक्षिणं पुरोडाशमथ शृतमथ दध्युपभृतमन्ततः ।**

ध्रुवायां द्वितीयाभिघारणमुपांशुयाजार्थम् । उपांशुया[1]जस्य चरुपक्षे तु तत्रैवाभिघारणं न ध्रुवाज्ये द्वितीयाभिघारणम् । उपांशुयाजरहितेषु च न ध्रुवायां द्वितीयाभिघारणमिति । उत्तरं [2]पुरोडाशमित्यत्रैकत्वमविवक्षितम् । द्वि[3]बहुपुरोडाशसंभवेऽप्यभिघारणात् । [4]अतएवोपभृतमन्तत इति । [5]उपभृतमिति न[5] तद्गतमाज्यं[6] लक्षयति ध्रुवामेवाग्र इतिवत् ।

**अथ चतुर[4] आज्यस्य गृह्णान आह 'अग्नयेऽनुब्रूहि' इति ।**

ग्रहणोपक्रमे निवृत्ते वा पुरोऽनुवाक्याचोदनं होत्रशेषप्रश्नेऽभिहितम्— 'सर्वञ्चावद्यन्नवत्ते वामुष्मा अनुब्रूहि' इति पुरोऽनुवाक्याचोदनमिति ।

**अत्याक्रम्याश्राव्य 'अग्निं यज' इति । वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग् जुहोति ।**

उत्तरार्धपूर्वार्धे [7]ऐशान्यां दिशि । प्रतिमुखमिति । उत्तराहुत्यपेक्षया । आहुतेर्मुखाभावेऽपि स्रुङ्मुखमपेक्ष्य प्रतिमुखत्वं दक्षिणविलत्वमित्यर्थः । एवमुत्तरत्रापि, उदग्बिलत्वेनाज्यभागयोः प्रतिमुखत्वसिद्धिः । प्रबाहुगिति आज्यभागयोरार्जवमाह । यथा चक्षुषोरार्जवं तथेत्यर्थः ।

---

१. ग— °याजचरु० । स— °याज्यचरु० ।

२. ग भ स— 'पुरोडाशम्' नास्ति ।

३. ह१ भ—तद्धि ।

४-४. स— 'अतएवोपभृत····अथ चतुरः' नास्ति ।

५-५. ह१ भ— 'उपभृतमिति न' नास्ति ।

६. ग— हुताज्यम् ।

७. ह१— ईशान्याम् ।

***चतुर एवाज्यस्य गृह्णन्न् आह 'सोमायानुब्रूहि' इति। अत्याक्रम्याश्राव्याह 'सोमं यज' इति। वषट्कृते दक्षिणार्धेऽर्धपूर्वे प्रतिमुखं प्रबाहुग्जुहोति।**

निगदव्याख्यातमेतत्। द्वैधे विशेषः 'आज्यभागयो र्होम इति। पूर्वार्धे प्रतिमुखं प्रबाहुग्जुहुयादिति बौधायनः। पूर्वार्ध एव प्रबाहुगिति शालीकिः' (बौ० श्रौ० २०।१३) इति। पूर्वस्यामेव [1]दिश्याज्यभागयोरन्योऽन्यपेक्षयोत्तरत्वं दक्षिणत्वमप्यवर्जनीयमेव, न त्वेकस्थाने हवनं 'प्रतिमुखं प्रबाहुक्' इति वचनात्।

**अथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्यन्नाह† 'अग्नयेऽनुब्रूहि' इति।**

उपस्तरणं ध्रौवाज्यादित्युक्तम्। अवदानेऽङ्गुलिनियमावदानप्रमाणे कर्मान्ते दर्शिते व्यतिषज्यैवांगुली अवद्येत्। अंगुष्ठपर्वमात्राणि [2]दैवान्यवदानानि भवन्ति ज्यायांसि सौविष्टकृतान्यैडानि च' (बौ० श्रौ० २४।२८) [3]अंगुलिशब्दोऽङ्गुष्ठस्यापि वाचकः। 'दशहस्त्या अंगुलयः' इति दर्शनात्। अंगुली अंगुष्ठतर्जनी व्यतिषज्य परस्परं व्याहतीकृत्य। तर्जन्यग्रमंगुष्ठमूलेऽनिधाय संहतीकृत्येत्यर्थः। एवं च तन्नखसंस्पर्शप्रसंगाभावः। अंगुष्ठपर्व अंगुष्ठोत्तरकाण्डः।

---

१. इ१ भ – दिश्याहुत्यो०।

२. ब श्र – दैवतान्य०।

३. इ१ भ – अंगुली०।

---

* चतुर = जमदग्नीनां पञ्चावदानम् — इ१।

† अवद्यन्नाह = दक्षिणातिक्रम्य 'अग्नयेऽनुब्रूहि' अवद्यन्नेव वा, 'इन्द्राय पुरोडाशानामवदीयमानाम्' (आप० श्रौ० २।१८।४, धूर्त०) इति दर्शनात्। 'ऐन्द्रस्यावद्यन्नि' ति च। 'ध्रुवामुपस्तीर्य, सोमाय पितृमतेऽनुस्वधेति' सम्प्रेष्यति (आप० श्रौ० २।१८।४ रुद्र०) सकृत्पुरोडाशस्यावद्यति — इत्येतद्धूर्तभाष्ये — इ१।

**अथैनमुपतिष्ठते 'मा भेर्मा संविक्था मा त्वां हिंसिषं मा ते तेजोऽपक्रमीत्' (तै० ब्रा० ३।७।५।५) इति। अथैनमभिमृशति 'भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिंसीः' इति।**

उपस्थानमुच्छ्रितहस्तेनाभिमर्शनमन्वग्भूतेन।

**पूर्वार्धादवदायापरार्धादवद्यति।**

द्वैधे विशेषः 'हविषामवदान इति। स ह स्माह बौधायनः पूर्वार्धादेवाग्रे प्रथमं मुख्यस्य हविषोऽवद्येदथापरार्धात्। एवमस्य प्रदक्षिणं हविषामवत्तं भवतीति। अथो ह स्माह शालीकिरपरार्धादेवाग्रे प्रथमं मुख्यस्य हविषोऽवद्येदथ पूर्वार्धात्। एवमस्य प्राक्संस्थानि हवींषि भवन्तीति। मध्यात् पूर्वार्धादपरार्धात्[1] पञ्चावत्तिनामित्यौपमन्यवः' (बौ० श्रौ० २०।१३)। मुख्यस्य प्रधानस्य हविषः प्रथममाग्नेयादिकम् अग्रे पूर्वं पूर्वार्धादवद्येत्। अथानन्तरमपरार्धादवद्येदिति शेषः। अयमर्थः प्रधानेषु हविष्षु यत् प्रथमं हविस्तस्य पूर्वार्धात् प्रथममवदायापरार्धादवद्येत्। द्वितीयादिकं त्वपरार्धात् पूर्वमवदायानन्तरं पूर्वार्धादवद्येदिति शेषः। अस्य प्रयोजनमाह-एवमस्य प्रदक्षिणं हविषामवत्तं भवतीति। एवं क्रियमाणे हविषामवत्तं प्रदक्षिणं भवति। प्रादक्षिण्येन हविरवदानसम्पत्तिरित्यर्थः। हविःष्वादौ पश्चादवदायानन्तरं पूर्वार्धादवदाने सति प्राक्संस्थत्वसिद्धिरिति[2]। पञ्चावत्त्यवदानेऽपि शालीकिपक्षे प्राक्संस्थतायै च मध्यात् पश्चार्धात् पूर्वार्धादित्यनुसंधेयम्।

**अभिघारयति। प्रत्यनक्ति-यदवदानानि तेऽवद्यन् विलोमाकार्षमात्मनः। आज्येन प्रत्यनज्म्येनत् तत्त आप्यायतां पुनः' (तै० ब्रा० ३।७।५।५-६) इति।**

---

१. व श्र— पश्चार्धात्।
२. ग भ स— 'हविःषु' नास्ति।
३. द१ — संस्थत्वम्।

अभिघारणं ध्रौवाज्येन। प्रत्यञ्जनमाज्यस्थाल्याज्येन। हविराप्यायनरूपत्वात्। ध्रौवाज्याप्यायनवत् प्रत्यवदानस्थान*माप्यायनावृत्तिर्मन्त्रावृत्तिर्मन्त्रावृत्तिश्चेति केचित्। अन्ये तु प्रत्यञ्जनस्य हविः संस्कारमात्रतया सकृदेवसमन्त्रकमञ्जनमिच्छन्ति।[1]

**अत्याक्रम्याश्राव्याह 'अग्निं यज' इति। वषट्कृते जुहोति।**

द्वैधे विशेषः 'आहुतीनामायतन इति। स ह स्माह बौधायनः त्रीण्येवतान्यादिष्टस्थानानि भवन्त्याज्यभागौ[2] स्विष्टकृत्। अथेतरा यथावकाशं जुहुयादिति।[3]प्रष्ठीरेवाहुतीर्जुह्वन् पूर्वार्धे पूर्वार्धे स्विष्टकृतं जुहुयादिति शालीकिः। स्रुच्यमाघारपथमभिजुहुयादित्यौपमन्यवः। मध्ये प्रदक्षिणं मण्डलकारमिति राथीतरः' (बौ० श्रौ० २०।१३) इति। [4]प्रष्ठीः. प्रधानभूता आहुतीर्जुह्वन् यथाप्रधानमानुपूर्व्येणाहुतीर्हुत्वा सर्वासामाहुतीनां पूर्वार्धे स्विष्टकृतं जुहुयादिति।

**अथ चतुर आज्यस्य गृह्णान आह 'प्रजापतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः†। अत्याक्रम्याश्राव्याह 'प्रजापतिम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते जुहोति।**

अथ प्रजापतिशब्द उपलक्षण उपांशुयाजदेवतान्तराणाम्। चरुपक्षे तु पञ्चावत्तिनां तद्धर्मतोऽवदानं नाज्यपक्षे। आज्यपक्ष एवायं चावदानधर्मो न चरुपुरोडाशा-

---

१. ग स— °मंजनमिति। भ—मार्जनमिच्छन्ति।
२. इ₁— °याघाराज्यभागौ।
३. ग ब भ श्र— 'प्रष्टी०।
४. ग भ— प्रष्टीः।

---

*प्रत्यवदानस्थान—अवदानद्वित्वैकत्वेन निवर्तते, नोह्यते— इ₁।
†उच्चैः=न माभेरिति, न प्रत्यभिघारणं शेषाभावात्— इ।

दिण्त्रति द्वैधे प्रतिपादितम्—'पञ्चमस्यावदानस्याभिवृद्ध्या इति । औषधस्य वर्धयेदिति बौधायनः । आज्यस्याभिवर्धयेदिति [1]शालीकिः' (बौ० श्रौ० २०।१३) इति ।

**अथोपस्तीर्योत्तरस्य पुरोडाशस्यापरार्धादवद्यन्नाह 'अग्नीषोमाभ्याम्' इति । पौर्णमास्याम् 'इन्द्राय वैमृधाय' इति च । 'इन्द्राग्निभ्याम्' इत्यमावास्यायामसन्नयत । 'इन्द्राय' इति सन्नयतः, 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति ।**

सोमयाजिनस्तावदग्नीषोमीयस्य पुरोडाशस्याग्नेयादुत्तरत्वं नियतम् । एवं वैमृधस्य तु समानतन्त्रत्वपक्षे तदुत्तरत्वमस्तीत्युक्तम् । **'इन्द्राय वैमृधाय इति च[2]।'** चशब्दादनियमं द्योतयति । अतो वैमृधस्य भिन्नतन्त्रत्वपक्षे न भवत्ययं प्रसङ्ग इति । असोमयाजिनस्त्वग्नीषोमीयस्य पुरोडाशस्यानित्यता । यदि [3]नाम सोमयाजिनो ब्राह्मणस्याग्नीषमीयः पुरोडाशो विद्यत इति [4]वचनान्नियतो निषेधः स्यात् तदा **'अग्नीषोमाभ्यामिति सोमयाजिन'** इति[2] ब्रूयात् । न [5]त्वेवमुक्तवान् । मन्त्रपाठे च नित्यवदाम्नायते—**'अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम् । अग्नेरहं देवयज्ययान्नादो भूयासम् । दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्या वृत्रहा भूयासम्'** (तै० १।६।२।१९-६२) इति । निषेधोऽप्याम्नायते **'आग्नेयो वै ब्राह्मणः स सोमेनेष्ट्वाग्नीषोमीयो भवति'** इति । अतो विहितप्रतिषिद्धत्वादसोमयाजिनो वैकल्पिकोऽग्नीषोमीयः पुरोडाश इति ।

---

१. ब श्र— आज्यस्यैवेति ।
२. ग भ— 'च' नास्ति ।
३. भ— नामन्वा ।
४. भ— 'वचना'''इति' नास्ति ।
५. इ१— चैव० ।

**समान उपस्थानः । समानोऽभिमर्शनः । अपरार्धादवदाय पूर्वार्धादवद्यति । अभिघारयति । समानः प्रत्यञ्जनः ।**

पुंल्लिङ्गनिर्देशश्छान्दसः । केषाञ्चित् पाठः—समानोपस्थानः समानाभिमर्शनः—इति । अस्मिन् पाठे समान उपस्थानो मन्त्रो यस्य पुरोडाशस्येति । एवं समानाभिमर्शन इति । समानः प्रत्यञ्जन इति च ।

**अत्याक्रम्याश्राव्याह 'अग्निषोमौ यज' इति । वषट्कृते जुहोति । अथोपस्तीर्य द्विः पुरोडाशस्यावद्यन्नाह 'इन्द्रायानुब्रूहि' इति महेन्द्र इति वा यदि महेन्द्रयाजी भवति । द्विः पुरोडाशस्यावद्यति, द्विः शृतस्य, द्विर्दध्नः । अभिघारयति । प्रत्यनक्ति ।**

अमावास्याविषयमेतत् । इन्द्रमहेन्द्रयोः पुनरुपादानं सह पुरोडाशेनैव सान्नाय्यहोमार्थम् । अन्यथा पुरोडाशस्य पूर्वमुक्तत्वात् सान्नाय्यस्य पृथग्घोमशंका स्यात् । उपस्थानाभिमर्शनप्रत्यञ्जनानि प्राथमिके पुरोडाशे विधाय पुरोडाशान्तरेऽतिदिष्टानि । न चैतेषां सान्नाय्ये प्रसक्तिः, द्रवरूपतयावदानेन विच्छेदाप्रतीतेः । अतएव चर्वादिष्वपि कठिनेषु पुरोडाशधर्म एव । ततश्च सान्नाय्यविशेषे प्रत्यनक्तीति विशेषाभ्यनुज्ञानाच्छेषनिषेधो*ऽवगम्यते । तच्च प्रत्यञ्जनममन्त्रकमेवावदाने मन्त्रानाम्नानादनतिदेशाच्च । द्रवत्वादेव न पूर्वार्धपरार्धप्रतिनियमः । कर्मान्ते विशेषः **'पयसा दैवतमभिवर्धयेद्दध्ना स्विष्टकृतम्'** (बौ० श्रौ० २४।२८) इति । दैवतं देवसम्बन्ध्यवदानं प्रधानमित्यर्थः । पयसाभिवर्धयेत् दध्यपेक्षया [1]पयोऽधिकमवद्यात् । स्विष्टकृद्विषये तु दध्न आधिक्यमित्यर्थः । अवदेयद्रव्यस्य परिमाणादिविशेषाः कल्पसारे दर्शिताः—

---

१. ग भ स— 'पयः' नास्ति ।

---

*शेषनिषेधः = स्रुङ्मुखेन होमः, पुरस्तादुपरिष्टाच्च न क्षरणं संसर्गिकत्वाद्द्रव्यस्य—इ० ।

'घृताहुतिः स्याच्चतुरङ्गुलोर्ध्वा त्वङ्गुष्ठपर्वप्रमितं तु दैवम् ।
ऐन्द्रं च सौविष्टकृतं च तस्माज्ज्यायस्तदेतत्त्रितयं [2]घृते तु ॥
अधस्तथोपर्यपि चाहुतिः स्यात् स्रुवेण होमेषु घृतेतरेषु ।
सर्वत्र हव्येऽनुदिते ध्रुवाज्यं स्रुचौ च[3] साद्यै न हि यावदुक्तिः ॥
स्थालीघृतं प्रत्यभिघारणेडाप्राशित्रकाग्नीत्षडवत्तकेषु ।
अन्यत्र च प्रागनलादनुक्ताववान्तरेडासु भवत्विडास्थम् ॥
अनामिकामध्यमयोः सहायं विधाय चाङ्गुष्ठकमौषधेषु ।
बहिर्नखैस्तैरवदेयमाज्यं स्रुवेण सान्नाय्यमपि प्रपूर्णम् ॥
विदाश्च वत्साश्च तथार्ष्टिषेणाः पञ्चावदाना अवदानमेषाम् ।
मध्यात्पुरस्तात् परतश्च मध्यात् पश्चात् [1]पुरस्ताच्च पुरोऽपवर्गे ॥
होमस्त्वनुक्तावनलस्य मध्ये प्राग्वा [2]प्रसव्यः परिमण्डलो वा' ॥ इत्यादि ।

अत्याक्रम्याश्राव्याह 'इन्द्रं यज' इति । 'महेन्द्रम्' इति वा यदि महेन्द्रयाजी भवति । वषट्कृते जुहोति । अथोपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यन्नाह 'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति सकृद्ध्रुवाज्यात्सकृदुत्तरस्य पुरोडाशस्य सकृच्छृतस्य सकृद्दध्नः । द्विरभिघारयति । न प्रत्यनक्ति* ।

---

२. इ१— घृतेन तु ।
३. इ१— त्व० ।
१. भ— परस्ता० ।
२. ग— °पसव्यः ।

---

*प्रत्यनक्ति = कात्यायनश्रौतसूत्रे प्रथमेऽध्याये 'मध्यात् पूर्वार्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानम् (का० श्रौ० १।९।६)' इत्युपक्रम्य अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः' (का० श्रौ० ६।६।११) इति स्विष्टकृदर्थत्वात्तस्य । अतः सौम्ये चरौ एकदेशावदानेषु च न प्रत्यभिघारणम्, त्र्यङ्गेषु भवत्येवामन्त्रकम् इति— इ१ ।

पश्चावर्त्तिनां तूत्तरार्धादेव द्विरवदानम्। उपस्तरणमभिधारणद्वयं च प्रतिहविरवदानापेक्षया चतुष्टयत्वपञ्चत्वपूरकमिति।

**अवत्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ जुहोति 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे। स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहा' (तै० ब्रा० ३।७।५।१३) इति पौर्णमास्याम्। 'अमावस्या सुभगा सुशेवा। धेनुरिव भूय आप्यायमाना। स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। अपानाय सुराधसेऽमावास्यै स्वाहा' इत्यमावास्यायाम्।**

स्रुवेण होमौ जुहोतीत्येतावतैव पर्याप्ते, अवत्ते स्विष्टकृतीति वचनं स्विष्टद्धवनात्[1] प्राक् स्रुचैवं पार्वणहोमपक्षद्योतनार्थम्। पार्वणौ होमाविति द्विवचनेन विकृतिषु तदभावं द्योतयति। विकृतीनां दर्शपौर्णमासयोरन्यतरप्रकृतित्वात् प्रकृतावपिपार्वणौ होमावित्यविशेषेण विधायापि दर्शपूर्णमासभेदेन मन्त्र भेदाम्नानादेकत्र न समुदितयोः होमप्रसंगः।

**अत्याक्रम्याश्राव्याह 'अग्निं स्विष्टकृतं यज' इति। वषट्कृतउत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति।**

पूर्वा आहुतीः अतिहाय पूर्वाहुतिस्थानमुल्लङ्घ्य। ऐशान्यां जुहोतीत्यर्थः। पूर्वा इति। स्थानपरित्यागश्च स्विष्टकृत्प्रधानाहुत्योः संसर्गे प्रायश्चित्तश्रवणात्।

**अत्रैतन्मेक्षणमाहवनीयेऽनुप्रहरति।**

एतदिति विशेषानिर्देशार्थं वचनम्। अन्यथा, मेक्षणमित्येव ब्रूयात्। तच्च

१. ह१— °कृदवदानात्।

विशेषनिर्दिष्ट[1]मुपांशुयाजस्य चरुपक्षे तत्पाकार्थं स्विष्टकृदन्ते [2]तत्प्रहर्त्तव्यम्। न तु पिष्टोद्वपन्या सहासादितं प्राकृतं मेक्षणम्। तस्य यावज्जीवं धार्यत्वात्। तदप्यन्ते[3] तत्प्रतिपत्तिदर्शनादवसीयते। वक्ष्यति हि-दक्षिणेंऽशे मेक्षणमिति। द्वैधे विशेषः 'मेक्षणस्यानुप्रहरण इति सूत्रं शालीकेः। अत्रो ह स्माह बौधायनो न मेक्षणन्यायेन वपाश्रपणी अनुप्रहरेदिति' (बौ० श्रौ० २०।१३)। वपाश्रपण्योः[4] स्विष्टकृदन्तेऽनुप्रहरणं न[5] भवति, अपितु वपाहोमानन्तरमेवेत्यर्थः।

**अथैनत्संस्रावेणाभिजुहोति।**

मन्त्रानाम्नानात्तूष्णीं होमः। एनत्सौविष्टकृतं हविः संस्रावेण जौह्वाज्यशेषप्रश्च्योतनेन। अत्र विशेषविधानात् [6]नाहुत्यन्तरेषु सूत्रान्तरन्यायेन प्रश्च्योतावश्च्योतने स्त इति।

**अथोदङ्ङत्याक्रम्य जुह्वामप आनीय संक्षालनमन्तःपरिधि निनयति 'वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम्। स नः पितरं पितामहं प्रपितामहं सुवर्गे लोके गच्छतु पिन्वमानं स्वधा नमः' (तै० आ० ६।६।१) इति।**

अस्यान्तः परिधिनिनयनस्य पित्र्यत्वे दक्षिणापवर्गत्वं प्राचीनावीतत्वं च। वैश्वानरत्वे त्वन्तः परिध्येकत्रैव निनयनं यज्ञोपवीतत्वं चेति पक्षद्वयम्। तत्र पित्र्यत्वपक्ष एव बहुयाज्ञिकादृतः। कर्मान्ते च 'हुत्वा स्विष्टकृतं स्रुचमद्भिः पूरयित्वान्तः परिधिः निनयेत् वैश्वानरे हविरिदं जुहोमि०' इति (बौ० श्रौ०

---

१. भ— °निर्देश्यम्।

२. ह₁— 'तत्' नास्ति।

३. ग स— °'प्यंसे'।

४. ह₁ ग— °श्रपण्याः।

५. ग— 'न' नास्ति।

६. ह₁— न०।

२४।२८) । अस्य पुनर्वचनं[1] सिद्धे सत्यारम्भो नियमायेति न्यायेन बहिः परिधिनिनयनस्यामन्त्रकत्वपक्षमपि सूचयति ।

**निर्णिज्य स्रुचं निष्टाप्याद्भिः पूरयित्वा बहिः परिधि निनयति 'इमं समुद्रं शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्' ( तै० आ० ६।६।१ ) इति ।**

निर्णिज्य प्रक्षाल्य निष्टप्य आहवनीये प्रताप्य बहि परिधिनिनयनमेकत्रैव-उदगपवर्गत्वेन वा ।

**अत्रैतदौपभृतमाज्यं सर्वश एव जुह्वां समानयते ।**

अत्र अस्मिन्काले, न त्वनुयाजप्रचरणकाले पृषदाज्यवदिति ।

**अथ यथायतनं स्रुचौ सादयित्वा ।**

यथायतनम्[2] आयतनमनतिक्रम्य प्रस्तरबर्हिषोरित्यर्थः । अनेन स्रुचोरादान-प्रभृत्येतावन्तं कालं धारणस्य नियमं द्योतयति । तथा च सूत्रम्—'**पूर्वमाज्यभागं प्रति स्रुचावात्ते न निदधात्यास्विष्टकृतः**' (आप० श्रौ० २।१८।८) इति ।

**प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्द्धाद्यवमात्रम् 'अज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मा रूरुपाम यज्ञस्य शुद्धं स्विष्टमिदं हविः ।' (तै० ब्रा० ३।७।५।६) इति ।**

अत्र दक्षिणस्योत्तरार्धादवदानं न पुरोडाशान्तरात् । अन्यथा दक्षिणस्येत्यानर्थक्यप्रसंगादिति । एकस्मादेव पुरोडाशात् प्राशित्रावदानमिति वदन्ति केचित् ।

---

१. ग— °वचनात् । ख— °उपर्वचनात् ।

२. ग— °यजनम् ।

अन्ये तु दक्षिणस्यैव पुरोडाशस्योत्तरार्धादिति देशनियमः। पुरोडाशान्तरेषु तु देशानियमेनावदानमिति वदन्ति कर्मान्तानुरोधेन। कर्मान्ते हि तन्त्रावापधर्म-निरूपणावसरे प्राशित्रस्यावदानत आवापत्वं, तन्त्रत्वं तु प्रदानत इत्युक्तम्—'कथमु खल्वेतज्जानीयादिदं तन्त्रमय आवाप इति। अन्वाधानप्रभृति-तन्त्रमाज्यभागाभ्यामन्यत्रौषधात्। तस्मिंस्तन्त्रे सत्यावापस्थानानि भवन्ति। यथैतद्धेनूनां दोहनं कपालानामुपधानं स्तम्बयजुषो हरणमाज्यग्रहा इति। यच्च किञ्चाभिनिवपति। ऊर्ध्वमाज्यभागाभ्यामेष मध्यत आवापो भवति यस्मिन्नेतद्धवींष्योप्यन्ते तस्मिन्नेवापानि तन्त्रस्थानं भजन्ते यथैतत् प्राशित्रं यजमानभागब्रह्मभागौ स्विष्टकृच्चेडा चेति। अवदानत आवापो भवति, तन्त्रन्तु प्रदानतः' ( बौ० श्रौ० २४।३ ) इति तन्त्रं साधारणं प्रत्येकमावापः। तन्त्रमन्वाधानाद्याज्यभागाभ्यामन्यत्रौषधात्। औषधधर्मा निर्वापादयः प्रत्येकमेव। एतस्मिन् तन्त्रे सत्यावृत्तिस्थानानि भवन्ति, यथैतद्धेनूनामित्यादि। यच्चान्यदप्यावर्तते प्रोक्षणोत्पवनादि तत्सर्वमावापस्थानमूर्ध्वमाज्यभागाभ्यामनूयाजेभ्यो न तन्त्रत्वम्। यथैतत्प्राशित्रमित्यादि। क्वावापत्वं क्व तन्त्रत्वमिति विशिनष्टि। अवदानत आवृत्तिः, प्रदानं युगपदिति। एवमेव यजमानब्रह्मभागयोरपि अवदानत आवृत्तिः, प्रदानतस्तन्त्रत्वमिति। सर्वपुरोडाशेभ्यः पृथक् पृथगवदाय सकृदेव प्रदद्यादिति। प्राशित्रे तूपस्तरणं न विद्यते। अभिघारणं त्वस्त्येव। अत्र विशेषमाह।

**अथैनत्स्रुवदण्डेनाभिघार्य जघनेन प्रणीताः सादयित्वा-द्भिः स्रुवदण्डं [1]संस्पर्श्यावदधाति*।**

अभिघारणन्यायेनैव प्राशित्रे सर्वपुरोडाशावदानपक्षे सांनाय्यस्यावदानमपि स्रुवदण्डेनैवेति[2] केचित्। अवदानरूपत्वात्स्रुवबिलेनैवेत्यपरे। पक्षद्वयेऽपि

---

१. ग ख— संस्पृश्या०।
२. ग भ— °दण्डेन णैव।

---

*अवदधाति = निदधाति—इ१।

मन्त्राभावः। तल्लिङ्गविरोधात्, न हि यवमात्रं सान्नाय्यावदाने सम्भवतीति। द्वैधे विशेषः '[1]**प्राशित्रस्यावदान इति सूत्रं बौधायनस्य। परिहरिष्यन्नेव प्राशित्रमवद्येदिति शालीकिः**' (बौ० श्रौ० २०।१३) इति। परिहरिष्यन् परिहर्तु-मिच्छन्। '**ब्रह्मणे प्राशित्रं परिहरेत्**' इति प्रैषमुच्चारयिष्यन्नित्यर्थः।

**अत्र प्रयोगः**[2]—

यदा[3] होत्रा '**घृतवतीमध्वर्यो स्रुचमास्यस्व**' इत्युक्तं[4] तदाध्वर्युर्जुहूपभृता-वादाय दक्षिणां [5]सकृदतिक्रान्तः उदङ्मुखस्तिष्ठन्नाश्राव्य प्रत्याश्रावित आह '**समिधो यज**' इति। प्रथमं होत्रा वषट्कृते जौह्वाज्यतृतीयभागेन पूर्वार्धे जुहोति। यजमानः (अनुमन्त्रयते) वसन्तायेदम्, न मम। '**वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु**' (तै० १।६।२।१४) [6]इति। अध्वर्युः पुनराश्राव्य प्रत्याश्रावितः '**यज**' इत्याह। वषट्कृते जौहवाज्यमध्यमभागेन दक्षिणार्धे जुहोति। यजमानः-ग्रीष्मायेदम्, न मम। '**ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु**' (तै० १।६।२।१५)-इति। अध्वर्युः[7] पुनराश्राव्य [8]'**यज**' इत्याह। वषट्कृते[8]ऽपरार्धे सर्वं जौहवं जुहोति। यजमानः-वर्षाभ्य इदम्०। '**वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु**' (तै० १।६।२।१६)-इति। अध्वर्युर्धमौपभृतस्याज्यस्य जुह्वामानीय पुनराश्रावणादिवषट्-कृते जौहवाज्यतृतीयभागेनोत्तरार्धे जुहोति। यजमानः-शरद इदम्०। '**शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु**' (तै० १।६।२।१७) इति। अध्वर्युः पुनराश्रावणादि-

---

१. ग— प्राशित्रावदान०। ख— प्राशिप्राशित्रावदान०।
२. इ१— प्रयोगक्रमः।
३. ग भ ख— होता।
४. ग भ ख— °युक्ते।
५. ग ख— सादति तत्र।
६. इ१ ग ख—'इति' नास्ति।
७. इ१— आश्राव्य।
८-८. भ— 'यज'....'कृते' नास्ति।

वषट्कृते जौहवाज्यमध्यम[1]भागेन मध्ये जुहोति। यजमानः-हेमन्तशिशिराभ्यामिदम्०। **'हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताम्'** (तै० १।६।२।१८ इति। प्रयाजानामग्निर्देवतेति केचिदाहुः।

अध्वर्युः प्रत्याक्रम्य वेद्युत्तरत उपविश्य जौहवाज्यशेषेण [2]ध्रुवामभिघार्य[2] दक्षिणपुरोडाशम[3]भिघार्य ध्रुवामभिघार्याग्नीषोमीयं पुरोडाशमभिघार्य वैमृध[3] [4]पुरोडाशमभिघारयति पौर्णमास्याम्। अमावास्यायां तु ध्रुवाभिघारणानन्तरमैन्द्राग्नमभिधारयत्यसंन्नयतः, सन्नयतस्त्वैन्द्रमभिघार्य प्रातर्दोहं सायं दोहं चाभिघारयति। उपभृतमन्ततः। स्रुवेण जुह्वां ध्रुवाज्याच्चतुर्गृह्णान आह **'अग्नयेऽनुब्रूहि'** इति। चतुर्गृहीत्वा दक्षिणातिक्रम्याश्राव्याह **'अग्निं यज'** इति। वषट्कृत उत्तरार्धपूर्वार्धे ज्योतिष्मत्युदग्दण्डया जुह्वा जुहोति। यजमानः- अग्नय इदम्, न मम।

अध्वर्युः प्रत्याक्रम्य पूर्ववच्चतुराज्यस्य गृह्णान आह **'सोमायानुब्रूहि'** इति। [5]'आदाया'त्यक्रम्याश्राव्याह **'सोमं यज'** इति। वषट्कृते दक्षिणार्द्धपूर्वार्धे दक्षिणदण्डया जुह्वां जुहोति। यजमानः-सोमायेद० **'अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम्'** (तै० १।६।२।१९) इति।

अध्वर्युः प्रत्याक्रम्योपविश्य ध्रुवाज्यात्स्रुवेण जुह्वामुपस्तीर्याङ्गुष्ठतर्जनीभ्यां दक्षिणपुरोडाशस्यावद्यन्नाह **'अग्नयेऽनुब्रूहि'** इति। अथैनमुपतिष्ठते **'मा भेर्मा०'** इति। एनमभिमृशति **'भरतमुद्धरे०'** इति। अंगुष्ठपर्वमात्रं संकुचिततर्जनीं मध्यांगुष्ठमूलप्रदेशेन पूर्वार्धादवद्यति। एवमपरार्धात्। ध्रुवाज्यादभिघार्याज्यस्थाल्याः[6] स्रुवेणावदाय पुरोडाशं [7]प्रत्यभिघारयति **'यदवदानानि'** इति पुनराज्यस्थाल्याः स्रुवेणोप-

---

१. इ१— °मध्य०।
२-२. ग भ स— 'ध्रुवामभिघार्य' नास्ति।
३-३. स— °'मभिघार्य''''वैमृधम्' नास्ति।
४. ग भ— 'पुरोडाशम्' नास्ति।
५. ग स— 'आदाय' नास्ति।
६. ग— °स्थाल्याम् स— °स्थाल्यात्।
७. ग स— अभि०।

हुत्याग्नेयप्रक्षेपस्थाने हुत्वात्याक्रम्याश्राव्याह 'अग्निं यज' इति। वषट्कृते मध्ये जुहोति। प्रत्याक्रम्याज्यस्थाल्याः स्रुवेणोपहत्य प्रक्षिप्तं हविरभिजुहोति। यजमानः—अग्नय इदम्०। 'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्' (तै० १।६।२।२०) इति स्रुवाहुत्याः 'प्रजापतय इदम्०'।

अध्वर्युर्ध्रुवाज्याच्चतुर्गृहीत्वा आह 'प्रजापतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। अत्याक्रम्याश्राव्याह 'प्रजापतिम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते मध्ये जुहोति। यजमानः-प्रजापतय इदम्०। 'दब्धिरस्यदब्धो भूयासमनुदभेयम्' (तै० १।६।२।२१)-इति। अपश्चोपस्पृशति।

अध्वर्युः पूर्ववदुपस्तीर्योत्तरस्य पुरोडाशस्यापरार्धात् पूर्ववदवद्यन्नाह 'अग्नीषोमाभ्यामनुब्रूहि' इति। पूर्ववत् [1]प्रत्यभिघार्यात्याक्रम्याश्राव्याह 'अग्नीषोमौ यज' इति। वषट्कृत आग्नेयस्य पुरस्ताज्जुहोति। पुरस्तादुपरिष्टात्स्रुवाहुती पूर्ववत्। यजमानः—अग्नीषोमाभ्यामिदम्०। 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' (तै० १।६।२।२३) इति। 'प्रजापतय इदम्'० स्रुवाहुत्याः।

अध्वर्युः पूर्ववदुपस्तीर्येत्यादि वैमृधस्य पुरोडाशस्य। अग्नीषोमीयवदवदानाभिघारेण। प्रत्यभिघारणाश्रावणादि समानम्। तत्र विशेषः 'इन्द्राय वैमृधायानुब्रूहि' इति 'इन्द्रं वैमृधं यज' इति। यजमानः 'इन्द्राय वैमृधायेदम्०। इन्द्रस्य वैमृधस्याहं देवयज्ययावृत्रहा भूयासम्' इति पौर्णमास्याम्।

अमावास्यायामुपांशुयाजानन्तरमसन्नयतो जुह्वामुपस्तीर्येत्यादि-अग्नीषोमीयवत्। तत्र विशेषः 'इन्द्राग्निभ्यामनुब्रूहि, इन्द्राग्नी यज' इति। यजमानः—इन्द्राग्नीभ्यामिदम्० 'इन्द्राग्न्योरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्' (तै० १।६।२३) इति। सन्नयतस्त्वैन्द्रं माहेन्द्रं वाग्नीषोमीयवदवदायात्र शृत[2]दध्नोपस्थानाभिमर्शनप्रत्यभिघारणमन्त्राः। स्रुवेण शृतस्य द्विरवदाय दध्नोरपि द्विरवदाय पूर्ववदभिघार्येत्यादि। 'इन्द्रायानुब्रूहि' 'महेन्द्राय' इति तद्याजिनः। आश्राव्याह 'इन्द्रं यज' इति

१. ग ख— अभिघार्य प्रत्याक्रम्य।

२. ग भ ख— 'शृतदध्नोः' नास्ति।

**'महेन्द्रम्'** इति तद्याजिनः। वषट्कृते जुहोति। यजमानः—इन्द्रायेदम्, [1]महेन्द्रायेदम्०। **'इन्द्रस्याहं देवयज्ययेन्द्रियाजी भूयासम्। महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम्'** (तै० १।६।२।-२५-२५) इति तद्याजिनः।

जुह्वामुपस्तीर्य **'अग्नये स्विष्टकृतेऽनुब्रूहि'** इति। अत्राप्युपस्थानाभिमर्शनमन्त्रौ न स्तः। दक्षिणस्य पुरोडाशस्योत्तरार्धाद्देवतादधिकं सकृत् [2]ध्रुवाज्यात् सकृदग्नीषोमीयस्य, सकृद्वैमृधस्येति पौर्णमास्याम्। अमावास्यायां तु सकृद् ध्रुवाज्यात्सकृदैन्द्राग्नादसन्नयतः। सन्नयतस्तु सकृद्ध्रुवाज्यात्सकृदैन्द्रस्य सकृच्छृतस्य सकृद्दध्नः। ध्रुवाज्याद् द्विरभिघारयति। न प्रत्यनक्ति। स्रुवेण ध्रुवाज्यमादायाहवनीये जुहोति **'ऋषभं पूर्णमासाय स्वाहा'** इति। पूर्णमासायेदम्०पौर्णमास्याम्। [3]अमावास्यायां तु **'अमावस्या सुभगा०'** इति। अमावास्याया इदम्०। अत्याक्रम्याश्राव्याह **'अग्निं स्विष्टकृतं यज'** इति। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति। यजमानः—अग्नये स्विष्टकृत इदम्०। **'अग्ने स्विष्टकृतोऽहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयम्'** (तै० १।६।२।२६) इति।

उपांशुयाजस्य चरुपक्षे मेक्षणानुप्रहरणम्। तत्संस्रावेणाभिजुहोति तूष्णीम्। यजमानः—प्रजापतय इदम्। प्रत्याक्रम्य जुह्वामप आनीय संक्षालनमन्त्रः परिधि निनयति **'वैश्वानरे०'** इति। यजमानः—**'अग्नये वैश्वानरायेदम्०'**। पित्रे पितामहाय प्रपितामहायेदमिति वा अस्मिन् पक्षे प्राचीनावीतत्वम्। स्रुचं प्रक्षाल्याहवनीये प्रताप्याद्भिः पूरयित्वा बहिः परिधि निनयति **'इमं समुद्रम्०'** इति। **'समुद्रायेदम्०'**। **'अग्नय इदम्०'**—इति वा। औपभृतमाज्यं जुह्वामानीय, यथायतनं स्रुचौ सादयित्वा, प्राशित्रमवद्यति दक्षिणस्य पुरोडाशयोत्तरार्धाद्यवमात्रम् **'अज्यायो**

---

१. भ— **'महेन्द्रायेदम्'** नास्ति।

२-२. भ— **'ध्रुवाज्यात्''''सकृत्'** नास्ति।

३. ग स— अमायाम्।

**यवमात्रा०'** इति । यजमानोऽवदीयमाने जपति **'अग्निर्मा दुरिष्टात् पातु सविताऽघशंसात्'** (तै० १।६।३।१) इति प्राशित्रं स्रुवदण्डेनाज्यस्थाल्यामङ्क्त्वाभिधार्य जघनेन प्रणीताः सादयित्वाद्‌भिः स्रुवदण्डं प्रक्षाल्य निदधाति ब्रह्मणोऽपि प्रयाजप्रभृत्याप्राशित्राद् वाङ्नियमनम् ।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने चतुर्दशोध्यायः ।

---

## पञ्चदशोऽध्यायः

**अथ कंसं वा चमसं वेडोपह्वनं याचति ।**

परिकर्मिणमिति शेषः। इडोपहूयतेऽस्मिन्निती़डोपह्वनं पात्रम् । तत्कंसं वा चमसं वा भवति । चमसशब्दो दारुमये पात्रे रूढः । पात्रासादनकाले त्वयं विशेषोऽनुसंधेयः । 'कंस वा चमसं वा प्रणीताप्रणयनं याचति' (बौ० श्रौ० १।४) इतिवत् ।

**तदन्तर्वेदि निधाय तस्मिन्नुपस्तीर्य ।**

तत्पात्रमुदगग्रं तिर्यञ्चं निधाय तस्मिन्नुपस्तरणमाज्यस्थाल्याज्येन होमानङ्गत्वात् ।

**दक्षिणस्य पुरोडाशस्य दक्षिणार्धात्प्ररुज्यावदधाति 'मनुना दृष्टां घृतपर्दीं मित्रावरुणौ समीरताम् दक्षिणार्धादसम्भिन्दन्नव द्यौम्येकतो मुखाम्' (तै० ब्रा० ३।७।५।६) इति ।**

प्ररुज्य ।भङ्क्त्वा । अत्रावदीयमानांशापेक्षयैव भङ्गः, न तु पिण्डसंभेदः। 'असंभिन्दन्' इति मन्त्रलिङ्गात् । द्वितीयावदाने सम्भिद्यैवेति विशेषविधानाच्च ।

**द्वितीयमवदानानि सम्भिद्यैवावदधाति ।**

द्वितीयम् अवदानमवद्यन् । अवदानानि-अवदानस्थानानि प्रधानयागाद्यर्थे[1] पूर्वार्धपरार्धादिभेदेन । यान्यवदानस्थानानि तानि सम्भिद्यैव मध्याद्भङ्क्त्वावदानेन सर्वावदानस्थाने सम्मिश्रणं यथा भवति तथेत्यर्थः। द्वितीयमवदानमन्त्रकं दक्षिणार्धादिति मन्त्रलिङ्गात् ।

---

१. ग भ स— °यागार्थम् ।

**अथ दक्षिणस्यैव पुरोडाशस्य पूर्वार्धात् त्र्यङ्गुलं वा चतुरङ्गुलं वाज्येन सुसन्तृप्तं सन्तर्प्याग्रेण ध्रुवां यजमानभागं निदधाति ।**

[1]दक्षिणस्यैवेत्यवधारणं पुरोडाशान्तरव्यावृत्त्यर्थम् । सर्वपुरोडाशेभ्यो यजमानभागावदानपक्षे देशनियमार्थम्[1] दक्षिणस्यैव पुरोडाशस्य पूर्वार्धादिति नियमः । पक्षद्वयेऽपि यजमानभागस्य त्र्यंगुलचतुरंगुलयोरन्यतरपरिमाणानतिरेक इत्यर्थः । आज्येन[2] सन्तर्पणमाज्यस्थाल्याज्यादेवाहोमार्थत्वात् । यजमानप्रवासे प्रस्तरेण सह तद्धोमपक्षेऽप्याज्यस्थाल्याज्यादेव सन्तर्पणम् । होमस्य तत्प्रतिपत्तिरूपत्वात् । ब्रह्मभागस्तु वैकल्पिकः अत्रानभिधानात्, [3]प्रदेशान्तरेऽभिधानाच्च । तथा हि दीक्षणीयायाम् 'तस्यै दशतयमुत्सीदति' इत्युपक्रम्य [4]**न यजमानभागं करोति, न ब्रह्मभागम्**' ( बौ० श्रौ० ६।३ ) इति वचनात्प्रकृतौ ब्रह्मभागसम्बन्धोऽवगम्यते । तत्कर्मान्ते च[4] '**न यजमानभागं करोति न ब्रह्मभागमित्याशीः संयोजनायैता**[5]**वुक्तौ भवतः । किमुपक्रममाणो यज्ञमाशिषं वदेदिति । अथापि सुभिक्षो व्रतोपायनीयस्य भवति । कस्मै किं सुभिक्षयावद्येत् । यजमानभागस्य खलूत्सादनाद् ब्रह्मभागमुत्सीदति । संयुक्तौ ह्येतौ यजमानब्रह्मभागाविति**' (बौ० श्रौ० २५।६) इति । एतौ यजमानब्रह्मभागौ आशीः संयोजनाय । यजमानभागस्य तावदाशिषा संयोजनम् '**यो मेऽन्तिदूरेऽरातीयति तमेतेन जेषम्**' (तै० १।६।३।२) इति एतदनुविद्धत्वाच्च ब्रह्मभागस्याप्याशिषा[6] संयोजनं भवति । एवं सति दीक्षणीयायामेतयोरभावं प्रतिपादयति । किमुपक्रमाण इति । यज्ञोपक्रमकाले ह्याशिषा भवितव्यम् '**देवा गातुविदो०**'

---

१-१. **ग**— 'दक्षिणस्यै'''देशनियमार्थम्' नास्ति ।
२. **ग भ स**— आज्ये ।
३. **भ**— 'प्रदेशान्तरे नास्ति ।
४-४. **भ**— 'न यजमान०''कर्मान्ते च' नास्ति ।
५. **ब श्र**— °नावेता ।
६. **ग भ स**— °स्याशिषा ।

इत्यादिना, अत्र तु [1]यज्ञदीक्षितस्य न दीक्षणीयार्थमासीरूपक्रमो भवति। यदापि दीक्षायाः पूर्वं दीक्षणीयां करोति तदाशीरूपक्रमोऽपि दीक्षाशेष एवेति। तस्यै दशतयमुत्सीदतीति विशेषवचनाद्यजमानब्रह्मभागयोर्निवृत्तिः।

युक्त्यन्तरमाह-अथापीति। व्रतोपायनीयस्य सुभिक्ष इति। यतोऽयं यजमानो व्रतोपायनीये सर्पिःपयोमिश्रितेन सुभिक्षस्तृप्तो भवति। अतो न यजमानभागप्रयोजनमिति। दीक्षाभोजनात् प्रागपि दीक्षणीयायां भाविप्रतिसन्धानात् सुभिक्षत्वम्। यजमानभागनिवृत्तौ ब्रह्मभागनिवृत्तिः किमर्थेत्यत उक्तम् यजमानभागस्य खल्विति। तत्रोपपत्तिमाह-संयुक्ताविति। संयुक्तौ अविनाभूतौ। यत्र यजमानभागस्तत्रावश्यं ब्रह्मभागेन भवितव्यमिति कर्मान्तोक्तो नियमः। पूर्वकल्पे तु ब्रह्मभागावचनाद्विकल्प इत्यभियुक्ताः। वयं तू ब्रूमः—न [2]ह्यनुक्तिमात्रं विकल्पं प्रयोजनति विहितेऽर्थे प्रतिषेध इव। तथात्वे पूर्वकल्पानुक्तस्य स्थानान्तरविहितस्य राकादियागस्यापि वैकल्पिकत्वप्रसंग इतीयं दिक्।

**द्विर्ध्रुवाज्यादवद्यति द्विरुत्तरस्य पुरोडाशस्य द्विः शृतस्य द्विर्दध्नः। अभिघारयति।**

द्विर्ध्रुवाज्यादि। एतदुपांशुयाजार्थम्। अतएव तच्चरुपक्षे तस्मादेव द्विरवदानम्। द्विरुत्तरस्य पुरोडाशस्यात्रैकत्वमविवक्षितम्। यावन्त्युत्तराणि पुरोडाशान्तराणि तेभ्योऽवद्यादित्यर्थः। द्विः शृतस्य द्विर्दध्नः। अनयोस्तूष्णीमवदानम्, असंभिन्दन्निति मन्त्रलिङ्गविरोधात्। अभिघारयति। एतदभिघारणमाज्यस्थाल्यां सकृदेव। पञ्चावत्तिविषये द्विरभिघारणस्योक्तत्वात्। तथा च सूत्रम् **'द्विरभिघारयेत् पञ्चावत्तिनः'** (आप० श्रौ० ३।२।८) इति। तद्विषये पुरोडाशादेवावदानत्रयम्, **'[3]पञ्चाधर्मासृतीयं पञ्चावत्तिनाम्'** (स० श्रौ० २।२, पृ० १९२) इति सत्याषाढवचनात्। अस्मिन्नपि

---

१. ग भ स— 'यज्ञ' नास्ति।

२. ग भ स— हि उक्ति०।

३. ग भ स— पश्चात्।

पक्षे सकृदेवाभिघारणम् । ध्रुवाज्यसान्नाय्ययोरमन्त्रकमवदानं दक्षिणार्धात् **'असंभिन्दन्'** इति [1]लिङ्गविरोधात् । अभिघारणमप्याज्यस्थाल्याज्यादेवाहोमार्थत्वात् ।

**अथ होतुर्द्विरङ्गुलावनक्ति ।**

पर्वणी इति शेषः । तथा चाश्वलायनः **'प्रदेशिन्याः पर्वणी [2]उत्तमे अञ्जयित्वा'** (आ० श्रौ० १।७।१) इति ।

**जिघ्रेण भक्षयित्वा ।**

भक्षणं कुर्वाणं होतारं प्रयोजयित्वा । अत्राघ्राणस्यैव भक्षत्वम् । अथवा जिघ्रेण संस्कृतं भक्षयित्वेति ।

**चतुरवान्तरेडामवद्यति ।**

[3]इडैकदेशं होतुर्हस्ते चतुर्वारमवद्यति[3] । अवदानप्रकारमाह ।

**उपस्तृणाति । द्विरादधाति । अभिघारयति ।**

'उपस्तरणाभिघारणयोरपीडांशत्वाविशेषात्' तयोराज्यान्तराप्रसक्ते राज्यराज्यस्थाल्यभिघारणपक्षोऽसमञ्जसः । अतएव सूत्रम् **'लेपादुपस्तरणाभिघारणे भवतः'** (आप० श्रौ० ३।२।७) इति । द्विरादधातीति । अत्रैकत्र कर्तृकत्वमितरत्र प्रयोजकत्वम् । होत्रैव द्वितीयादानस्य क्रियमाणत्वात् । तथा चाश्वलायनः **'स्वयं द्वितीयमाददीत'** (रा० श्रौ० १।७।३) इति । द्वितीयत्वं चोपस्तरणस्यावदानत्वाविवक्षायां प्राथमिकस्यैव पुरोडाशावदानस्य, पुरोडाशावदानापेक्षायां तु द्वितीयस्यैवेति विवेकः । तथा च सूत्रम् **'अध्वर्युः प्रथममवदानमवद्यति स्वयं होतोत्तरमेतद्विपरीतम्'** (आप० श्रौ० ३।२।६) इति ।

---

१. ग भ स — 'लिंग०' नास्ति ।

२. इ१ — 'उत्तमे' नास्ति ।

३-३. भ — 'इडैक····द्यति' नास्ति ।

**समन्वारभन्तेऽध्वर्युश्च यजमानश्च ब्रह्मा चाग्नीध्रश्च । अथ अत्र होतुरभिजानाति 'दैव्या अध्वर्यव उपहूता मनुष्याः (तै० ब्रा० ३।५।८।३) इति । इति तद्दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति ।**

यत्र यस्मिन् काले तत् तदानीं [1]दक्षिणपुरोडाशस्य चतुर्धा करणायेडान्वारम्भस्य त्यागः । व्यापृतव्यापारविरोधात् । न चापरित्यज्यैव वामहस्तेन चतुर्धाकरणं युक्तं तथानुपदेशात्, '**दक्षिणं प्रतीयात्, अनादेशे**' इत्याश्वालायनोक्तेश्च ।

**अथ अत्र होतुरभिजानाति 'उपहूतोऽयं' (तै० ब्रा० ३।५।८।३) इति तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेदिति ।**

पशुरूपाया इडाया वायुं वत्सरूपत्वेन मनसा ध्यायेत् । केचितु '**वायो**' इति सम्बुध्य '**तम्**' शब्दोच्चारणमपीच्छन्ति । अत्राध्वर्युयजमानौ '**उपहूतः पशुमानसानि**' इति जपतः । '**उपहूतः पशुमानसानीत्याह**' । (तै० ब्रा० ३।३।८।४) इति ब्राह्मणानुरोधात् ।

**उपहूतायामिडायामग्नीध आदधाति षडवत्तम् । उपस्तृणाति आदधाति, अभिघारयति, उपस्तृणाति, आदधाति, अभिघारयति ।**

अत्रोपस्तरणाभिघारण आज्यस्थाल्याज्यादेव । इडायाः [2]पञ्चमं भागं द्वेधा कृत्वावदानद्वयसम्पादनात् । तथा च गोपालः—'**इडायाः पञ्चमं भागं द्वेधा कृत्वा घृतैः सह षडवत्तं तदग्नीधः**' इति । अत्र घृतैः सहेति वचनान्न लेपतस्तत्प्रसक्तिः ।

**प्राश्नन्ति । मार्जयन्ते ।**

---

१. भ— दक्षिणे ।

२. इ१भ— पंचमभागस्य ।

यजमानपञ्चमा इति शेषः। तेन च, [1]इडायाः पञ्चमभागस्याग्नीध्रसात्कृतत्वादवशिष्टभागचतुष्टयस्य होत्रादयश्चत्वारो भागिन इति गम्यते। प्राशने च वाङ्नियम आमार्जनात्। तथा च सूत्रम् **वाग्यत आसत आमार्जनात्'** (आप० श्रौ० ३।३।१) इति। मार्जनं च यजमानस्य समन्त्रकम्। याजमानप्रकरणे मन्त्राम्नानात्। इतरेषां त्वमन्त्रकं तदनाम्नानात्। मार्जनं नाम बर्हिरन्तर्धानेन पाणावुदकासेचनं शिरसि वा तस्योक्षणमिति। यजमानस्तु प्रस्तरान्तर्धानेनेति याज्ञिकप्रसिद्धिः। होतुः परिस्तरणान्तर्धानम्। तथा चाश्वलायनः **'परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनम्'** (आ० श्रौ० १।८।२) इति।

**अथाह ब्रह्मणे-प्राशित्रं परिहरेति। परिप्राशित्रं हरन्ति।**

[2]प्राशित्रं परिहरन्ती[2]त्यन्वयः। बहुवचनेन परिहर्त्तुः परिकर्मिणोऽनियमं द्योतयति। परीत्य हरणम्, तेनाग्रेणाहवनीयं तद्धरणं द्योतयति।

**अन्वपोऽनुवेदेन ब्रह्मभागम्—इति।**

परिहरन्तीत्यनुत्कर्षः[3]। अन्वप इति आहरन्तीत्यर्थः। अथवा, अन्वपः उदकानामुपयोगानन्तरं ब्रह्मणा हि प्राशित्रप्राशनानन्तरमुदकपानेन तन्निगरणम्। उदकैश्च वागादिमार्जनमित्यादि क्रियते। तदनन्तरं वेदेन ब्रह्मभागं हरतीत्यादि क्रियते। तदनन्तरं वेदेन ब्रह्मभागद्वयमप्युपसङ्गृह्णाति। यजमानभागसहचरितं चतुर्धाकृतांशं च। अत्राध्वर्युणा चतुर्धाकरणे **'इदं ब्रह्मणे'** इत्यादिना निर्देशमात्रं यजमानकृतस्य पुरोडाशस्य दक्षिणारूपत्वात्। **'अथाध्वर्यवः'** इति स्रवणाच्च यजमानकर्तृकमित्याहुः।

अत्रेदं विचार्यते—किमेतच्चतुर्धाकरणं दक्षिणस्यैव पुरोडाशस्य अथाग्नेयस्यापि वा तद्विकाराणां वेति। तद्विकाराश्च किमष्टाकपालाः पुरोडाशा उतैकदेवत्या

---

१. इ१भ — इडायाम्।

२-२. ग— 'प्राशित्रं परिहरन्ति' नास्ति।

३. इ१— °नुकर्ष।

इति । यदि दक्षिणस्य, अन्वारम्भणीयायामाग्नावैष्णवस्यापि चतुर्धाकरणप्रसंगः । आग्नेयविकारत्वं चाष्टाकपालानां चेत्, 'आग्नावैष्णवमष्टाकपालं निर्वपेत्' (बौ० श्रौ० 'सावित्रमष्टाकपालं प्रातर्निर्वपेत्' ( बौ० श्रौ० २६।१० ) इत्यादिष्वपि तत्प्रसंगः । एकदेवत्यानामाग्नेयविकारत्वे त्वादित्यचर्वादेरपि तत्प्रसंग इति । सर्वत्रैतादृशेष्वस्तु चतुर्धाकरणको दोष इति चेत् । न । चतुर्धाकरणस्य दक्षिणारूपतया दक्षिणान्तराबन्धेषु चतुर्धाकरणस्य प्रसक्तेः । अतएव दीक्षाणीयादौ दक्षिणान्तराहित्येन चतुर्धाकरणाम-शंक्य 'न बर्हिषदं करोति' (बौ० श्रौ० ६।३) इत्युक्तम् । अतो न दर्शपूर्णमासव्यति-रिक्तेषु चतुर्धाकरणप्रसंग इति ।

## अन्वाहार्यं [1]याचति ।

परिकर्मिणमिति शेषः । अन्वाहार्यशब्दश्च सर्वर्त्विजां भोजनपर्याप्ते दक्षिणा-रूपेऽन्ने रूढः । तच्चान्वाहार्यपचने पक्वं दक्षिणाकाले यजमानो याचतीत्यर्थः । तथा च सूत्रम् 'दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति' (आप० श्रौ० ३।३।२२) इति । अथवा, अन्वाहार्यशब्दोऽयमन्वर्थः । दक्षिणान्तरप्रदानानन्तरमन्वा-हार्यत्वात् । अतएव चतुर्धाकृतस्य पुरोडाशस्यापि दक्षिणारूपत्वमविरुद्धम् । अतएव कर्मान्ते 'नित्योऽन्वाहार्यः' ( बौ० श्रौ० २४।२९ ) इत्युक्तम् । नित्यत्वं चास्य दक्षिणान्तराव्यावर्त्तनीयत्वम् । ततश्चतुर्धाकरणस्य नित्यत्वानुपदेशादन्वाहार्यव्यति-रिक्तदक्षिणावस्तुष्व्यावृत्तिः । दक्षिणादाता च यजमानः 'ब्राह्मणाः, अयं व ओदनः' इति ब्रूयात् । 'पुरोडाश इदं ब्रह्मणे' इत्यादिवत् । तथा च सूत्रम्—'तेभ्योऽन्वाहार्यं ददाति[2]—ब्राह्मणाः, अयं व ओदनः—इति' (आप० श्रौ० ३।४।३) । यद्यपि पुरोडा-शस्य देवतानिर्देशेन निर्वापस्तथापि हुतावशिष्टे यजमानाधिपत्यापरित्यागाद् [3]दक्षिणान्तरोपपत्तिः । तदाधिपत्ये च लिङ्गम् 'यो वा अस्य पशुमत्ति' (तै० ७।२।१०।९)

---

१. ग— याचते । स— याचित ।

२. इ१— ब्रह्मणा । भ – ब्रह्मणा ।

३. भ स— दक्षिणोत्वपपत्तिः । ।

इति। अत्र, अस्येति। यजमानसम्बन्धेन निर्देशः। प्रतिग्रहीतारश्च ऋत्विजः समन्त्रकं प्रतिगृह्णीयुः। स मन्त्रो ब्राह्मणाम्नातोऽनुसन्धेयः। **'छन्दसा ब्राह्मणेन'** (बौ० श्रौ० २४।१ ) इति परिभाषोक्ते। हौत्रशेषप्रश्ने च ब्राह्मणेन व्याख्यातो दक्षिणाप्रतिग्रह इति। एतत्प्रकरणं एवोक्तेश्च। समन्त्रः पुरोडाशान्वाहार्ययोः प्रतिग्रह आवर्तनीयः। **'वाचेऽन्नम्'** इति पुरोडाशे, **'ब्राह्मण ओदनम्'** इत्यन्वाहार्ये विशेषः।

न चैवमग्निहोत्रादावपि शरावदक्षिणादौ समन्त्रकं प्रतिग्रहप्रसंगः। तेषां जुहोति-चोदनायत्तत्वात्। ततश्च यजति-चोदनायत्तेष्वेव समन्त्रको दक्षिणाप्रतिग्रहः। **देवा वै वरुणमयाजयन्'** (तै० ब्रा० २।२।५।१) इति यजतिचोदनानुबन्धेषु प्रतिग्रहमन्त्राम्नानात्। तथा च सूत्रम्—**'दक्षिणानां प्रतीग्रहीष्यन् सप्तदशकृत्वोऽपान्य व्यावृत्य प्रतिगृह्णीयात्। देवस्य त्वा० हस्ताभ्यां प्रति गृह्णामि। राजा त्वा वरुणो नयतु, देवि दक्षिणेऽग्नये हिरण्यम्, तेनामृतत्वमश्याम्।...उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु इति। सोमाय वासः। रुद्राय गाम्। वरुणायाश्वम्। प्रजापतये पुरुषम्। मनवे तल्पम्। त्वष्ट्रेऽजमजामग्नये वा**[1]**। पूष्णेऽविम् निर्ऋत्या अश्वतरगर्दभौ। हिमवते**[2]** **हस्तिनम्। गन्धर्वाप्सरोभ्यः स्रगलंकरणे। विश्वेभ्यो देवभ्यो धान्यम्। वाचेऽन्नमुर्जे वा**[3]**। ब्रह्मण ओदनम्। समुद्रायापः। उत्तानायाङ्गीरसायनः। वैश्वानराय रथम्** (तै० आ० ३।१०)' वैश्वानर्यर्चा रथं प्रतिगृह्णीयाद् वैश्वानरः प्रत्नया नाकमारुहत्। दिवः पृष्ठं भन्दमानः सुमन्मभिः। स पूर्ववज्जन्तवे घने समानमज्मापरियाति जागृविः। यत्किञ्चाप्राणत्तत् सर्वमुत्तानस्त्वंगीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्। यद्वानाम्नातमन्त्रम्। सर्वत्र पुरस्तात्[4] सावित्र उपरिष्टादन्वाधिः। ग्रास्त्वाकृन्तन्नपसस्त्वातन्वन् वरूत्रस्त्वावयन्नित्येद्वसिस्यनुजाति पुरस्तादवैतात्। त इमे तान्त्रीणां दक्षिक्षानां प्रतिग्रहणा स्युः। विज्ञायते च। 'देवा वै **वरुणमयाजन्। स यस्यै यस्यै देवतायै**

---

१. तै० आ०— 'अग्नये वा' नास्ति।

२. तै० आ०, भ— हिमवतः।

३. तै० आ०, आप० श्रौ०— 'ऊर्जेवा' नास्ति।

४. ग भ स— सावित्रम्।

दक्षिणामयनत् । तामब्लीनात् । [1]ते ब्रुवन् व्यावृत्य प्रतिगृह्णाम । तथा नो दक्षिणा न ब्लेष्यति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तान् दक्षिणा नाब्लीनात्[1] । य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणा ब्लीनाति ( तै० ब्रा० २।२।५।१ ) इति । तान्त्रीरेवाधिकुरुते । बर्हिषा प्रतीय गां वाश्वं वा । अन्नेन पुरुषं हस्तिनं वा । गन्धेन प्रियवचेन च तल्पम्' (आप० श्रौ० १४।११।१-१२।६ ) ।

कर्मान्ते च—'किं दक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध इति । उपदोहदक्षिणमग्निहोत्रमित्येके । शरावदक्षिणमग्निहोत्रमित्येके । यत्सायं जुहोति रात्रिमेव तेन [2]दक्षिण्यां कुरुते । यत्प्रातरहरेव तेन दक्षिण्यं कुरुते । यच्चतो ददाति सा दक्षिणेति । यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवति । अथ दर्शपूर्णमासयोरन्वाहार्यश्च पुरोडाशस्य च[3] चतुर्धाकरणम् । विज्ञायते—दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपिदधाति—( तै० १।७।३।२ ) इति । यथैवादः सौम्येऽध्वर आदेशमृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । वासो दक्षिणाः काम्या इष्टयो [4]याश्चानादिष्ट-दक्षिणाः । गोदक्षिणः पशुबन्धः । नित्योऽन्वाहार्यः' ( बौ० श्रौ० २४।२९ ) इति । 'न बर्हिषदं करोति, नान्वाहार्यं याचतीति दक्षिणोक्तावेवैतावुक्तौ [5]भवतः । [6]अन्वाहार्या उ खल्विह दक्षिणाः प्रतिख्याता भवन्ति' ( बौ० श्रौ० २५।६ ) ।

इष्टिकल्पे च 'वासोदक्षिणाः काम्या इष्टयः[7] । गोदक्षिणाः पशुबन्धः । नित्योऽन्वाहार्य इति । यानि हवींषि कामेन वा दक्षिणया वा व्यपेतानि स्युर्नाना

---

१-१. ग स— 'ते ब्रुवन्...नाब्लीनात्' नास्ति ।

२. इ१ भ स— दक्षिण्यम् ।

३. ग भ स— 'च' नास्ति ।

४. ब श्र— या अनादिष्ट० ।

५. इ१— °वुभौ ।

६. ब— अन्याः ।

७. ब— 'इष्टयः' इत्यस्यानन्तरम् 'या अनादिष्टदक्षिणाः' ।

[1]हर्वीष्येव तानि जानीयात्। आदेशादेव दक्षिणाव्यपेतं समानबर्हिर्भवति[2]। नेष्टीरुपांशुयाजोऽनुसमेति' ( बौ० श्रौ० १३।१ )।

द्वैधे विशेषः 'आज्यहविःष्वन्वाहार्यस्य करण इति। कुर्यादिति बौधायनः। न कुर्यादिति शालीकिः' ( बौ० श्रौ० २०।१३ )। आज्यहविःष्विति। देविकाहविःष्वाञ्जीगविपक्षे 'आज्येनैव देविका यजेत' ( बौ० श्रौ० २१।२६ ) आञ्जीगविरित्युक्तत्वात्। 'अन्वाहार्यस्यासादन इति। अग्रेण यजमानं च ब्रह्माणं च पर्याहृत्य दक्षिणस्यां श्रोण्यामासादयेदि बौधायनः। अतएव दक्षिणस्यामिति शालीकिः' ( बौ० श्रौ० २०।१३ )।

सूत्रार्थस्तावत्। दक्षिणेति। दक्षतेधातोः समृद्धिकर्मणः, दक्षयति पुरुषं प्रतिग्रहीतारं वर्धयतीति दक्षिणा। सप्तदश कृत्वोऽपाननम् ऊर्ध्वं वायोर्नयनम्। व्यावृत्य पृथक्कृत्य, आत्मानं प्रतिग्रहीतारं चायमर्थः। न स्वयं प्रतिग्रहीता किन्त्वग्न्यादयो देवता एवेति द्रव्यविशेषेण [3]प्रतिग्रहीतृदेवतानिर्देशः। साधारण्येन कामस्य दातृत्वनिर्देशश्च व्यावर्त्तनमित्युच्यते। मनवे तल्पमिति। तल्पशब्दः शय्यावचन इत्येके। अन्ये तु स्त्रीवचन इति व्याचक्षते। प्रियवद्येन च तल्पमिति। प्रतिग्रहकाले प्रियोक्तिपूर्वकप्रतिग्रहः स्त्रियामेवोचित इति। त्वष्ट्रेऽजामिति। निर्ऋत्या अश्वतरगर्दभाविति। एवमादिषु च लिङ्गसंख्यानुण्येनोहो न कार्यः प्रकृतिवदेव। तेनामृतत्वमश्यामिति जप इति केचित्। अपरे तु यथार्थमूहनियमं मन्वाना विकृतावेवोपदिष्टत्वाच्च तयामृतत्वमश्याम्, ताभ्याम्—इत्याद्यूहनीयमित्याहुः। अश्वतरो [4]वेसरः। अश्वतरगर्दभयोश्च युगपत्प्रतिग्रहः सर्ववेदसदक्षिणे वा यथाश्रद्धदक्षिणे वा वैमृधे वा प्रसक्त इति।

गन्धर्वाप्सरोभ्यः स्रगलंकरण इति। अत्र यथासंख्यपक्षमपहाय द्वयोरपि

---

१. ब श्र— हवींष्येव।

२. ब— '°भवति' इत्यस्यानन्तरम् 'यथा विशामवेष्टिः'।

३. इ₁— प्रतिगृहीत्री०।

४. इ₁— वेशरः।

दक्षिणासमुच्चयपक्षेऽप्यूहो वैकल्पिकः। वाचेऽन्नमिति। अद्यत इत्यन्नम्। एतेन चतुर्धा-कृतपुरोडाशाद्युपसंग्रहः। एवं चापूपफलमूलशाकादि प्रतिग्रहे—वाचेऽन्नमित्यैव प्रतिग्रहः सिध्यति। ब्रह्मण ओदनमिति। यद्यप्यन्नशब्दोऽयमोदनवचनः तथापि देवता-भेदेन पृथगभिधानाद्विशेषशब्दसन्निधौ सामान्यशब्दस्तदितरविशेष वर्तत इति न्यायेन भवत्योदनातिरिक्तान्न[1]वचनत्वमन्नशब्दस्य। समुद्रायाप इति। अप्शब्देन कूपतटाकादीनुपलक्षयति। तद्दानं च सर्ववेदसदक्षिणे सम्भवति।

अनः शकटम्। रथश्चतुर्विधः—देवरथः सांग्रामिकः, सांयात्रिकः क्रीडारथ इति। देवतोत्सवादिषु प्रसिद्धो देवरथः, स च मनुष्यवाह्यो भवति। संग्रामोपयुक्तः स्त्वश्ववाह्य एवेति। यात्रादिषूपयुक्तः सांयात्रिकः, स त्वनडुद्वाह्यो वा भवति। क्रीडारथस्तु यथारुचिर्निर्मातव्यः एवं चतुर्विधस्यापि रथस्य प्रतिग्रहे वैश्वानराय रथमिति। अनाम्नातमन्त्राणां त्वप्राणिनां प्राणिनां च प्रतिग्रहे [2]ब्राह्मणोक्तेरनु-सन्धेया—'यत् किञ्च[3]प्रतिगृह्णीयात् सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्' इति। एवमाकारेण सावित्रान्वाध्योर्व्यावृत्तिः[4]। 'देवस्त्वा०' इत्यारभ्य 'देवि दक्षिणे' इत्यन्तः सावित्रः। 'तेनामृतत्वमश्याम्' इत्युपक्रम्य उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु' इत्यन्तोन्वाधिः। प्राण्यप्राणिसमुच्चयेऽप्य-नम्नातमन्त्रे प्राक्तन न एव न्यायः। 'ग्रास्त्वाकृन्तन्' इत्यारभ्य 'वरुत्रस्त्वावयन्' इत्यन्तो मन्त्रो वा[5] तस्यानुषञ्जनीय[5] इति सौत्रः पक्षः, न त्वस्माकं ब्राह्मणानुक्ते-रभियुक्तैरस्वीकाराच्च। [6]त इमे दक्षिणामन्त्राः।

तान्त्रीणां तन्त्रसम्बन्धिनीनां याज्ञिकीनामित्यर्थः, न तु लौकिकीनाम्। 'देवा

---

१. ग—°दनवचनात्र।

२. 'ब्राह्मणोक्तिरनुसन्धेया' इति पाठः स्यात्।

३. तै॰ ब्रा०— अप्राणत्तत्।

४. प ग स— निवृत्तिः।

५-५. ग स— वास्यनुषञ्जनीयः।

६. ग— दाने। स— 'त०' नास्ति।

**वै वरुणमयाजन्'** इत्याद्यर्थवादबलादित्यनुसन्धेयम् । बर्हिषा प्रतीयाद् वेत्यादि । सर्वदक्षिणानां दक्षिणहस्तेन प्रतिग्रहः । तत्र गवाश्वयोः प्रतिग्रहे वामहस्तेन तृणं प्रदर्शयन् दक्षिणहस्तेन प्रतिगृह्णीयात् । एवं पुरुषहस्तिनोः प्रतिग्रहे वामहस्तेनात्र [1]केवलं-प्रदर्शयन् । दासीप्रतिग्रहे तु सुगन्धहस्तः प्रियं ब्रुवाणः प्रतिगृह्णीयादिति । अत्र दर्शपूर्णमासयोः **'वाचेऽन्नं ब्रह्मण ओदनम्'** इत्येतावदुपयुक्तम् । अवशिष्टानां तु यथालिङ्गमग्निष्टोमे विकृतौ चोपयोगः । अग्निष्टोमस्य सर्ववेददक्षिणत्वं सहस्रदक्षिणत्वं च श्रूयते—**'सर्ववेदसे वा सहस्रे वावक्लृप्तोऽति ह्यप्रवत । य एवं विद्वानग्निष्टोमेन यजते'** ( तै० ७।१।१।२-५ ) इति ।

## उद्वासयन्त्येतद्धविरुच्छिष्टम् ।

एतदित्यन्वाहार्यं निर्दिशति । हविरुच्छिष्टमिति तु दारुपात्रगतं सान्नाय्यं च, न त्वाज्यम् । तस्योत्तरत्रोपयोगत्वेन हविष्ट्वाद्धविरुच्छिष्टशब्दवाच्यत्वाभावादिति । द्वैधे विशेषः—**'अन्वाहार्यस्योद्वासन इति । अग्रेण स्रुच उदञ्चमुद्वासयेदि बौधायनः जघनेन स्रुच उदञ्चमिति शालीकिः । हविरुच्छिष्टानामुद्वासन इति । अग्रेणस्रुच उदञ्च्युद्वासये[2]दिति बौधायनः । जघनेन स्रुच उदञ्च्युद्वासयेदिति शालीकिः'** ( बौ० श्रौ० २०।१४ ) । अत्र हविरुच्छिष्टोद्वासनममन्त्रकम् । अन्वाहार्यं तूद्वास्यमानं ब्रह्मानुमन्त्रयते **'यज्ञो दिवं रोहन्तु'** (१।६।३।३) इत्यादिना । तथा च ब्रह्मप्रकरणे **'[3]अथैनदग्रेण स्रुच उदञ्चं नीयमानमनुमन्त्रयते'** (बौ० श्रौ० ३।२५) इति । तदेतदुद्वासनमस्मिन् काल एव विधेयम् । अनुद्वासनेनानूयाजाश्रावणे प्रायश्चित्ताम्नानश्रवणात् । तथा च सूत्रम्—**'यदि हविः शेषाननुद्वासीतानूयाजेभ्याश्रावयेत्'** (आप० श्रौ० ९।१२।१) इत्यादि ।

**अत्र प्रयोगक्रमः[4]—**

कंस वा चमसं वा यत् सादितमिडापात्रं तदन्तर्वेद्यपरेण स्रुचः तिर्यञ्चं

---

१. ग भ – कम्बलप्रदर्शनम् ।

२. ब श्र— 'पासयेत्' नास्ति ।

३. ब श्र— अथैनमग्रेण । भ— अथैतदग्रेण स्रुवम् ।

४. ग भ— प्रयोगप्रयोगः ।

निधायाज्यस्थाल्या घृतेन तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य दक्षिणार्धाद् भङ्क्त्वावद्यति **'मनुना दृष्टां०'** इति। मध्यात्तूष्णीं द्वितीयावदानम् । एतस्यैव पूर्वार्धाद्यजमानभागमवदाय त्र्यंगुलमात्रं चतुरंगुलं वा कृत्वा वामहस्ते निधायाज्य-स्थाल्याज्येन समज्य, दक्षिणहस्ताग्रेण ध्रुवां निदधाति। यजमानो यजमानभागे-ऽवदीयमाने जपति **'यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषम्'** ( तै० १।६।३।२ ) इति । यदि ब्रह्मभागं करोति, एतस्मादेव ब्रह्मभागमपि यजमानभागवदवदाय सन्तर्प्य निदधाति । उभयमपीडावदानान्तेऽवदेयमिति केचित् । उपांशुयाजशेषा-दिडायां द्विरवद्यति। सर्वेषां पुरोडाशानां दक्षिणार्धान्मध्याच्च दानम् । दोहयोरप्य-मन्त्रकं द्विर्द्विरवदानम्।

ऐन्द्रस्थाल्यादज्यमभिघार्य स्थाल्याः स्रुवेणादाय होतुः प्रदेशिन्या, उत्तमे पर्वणी अनक्ति। होता जिघ्रेण भक्षयित्वोदकं स्पृशति। तस्य हस्त इडाज्यलेपाद्धस्तेनोपस्तीर्य तत्स्थहविषः सकृदवदधाति। होता द्वितीयमाददीत। अध्वर्युरवदानद्वयमिडास्थलेपात् पूर्ववदभिघारयति। इडां होत्रे प्रदायान्वारभन्ते ब्रह्माध्वर्युयजमानाग्नीध्राः। [1]इडा-माह्लियमाणामनुमन्त्रयते यजमानः **'सुरूपवर्षवर्ण एहीमान् भद्रान् दुर्याँ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमति-रसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं तेऽशीय सा मे सत्याशी-रस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवं रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवा अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञः मदन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्ति मघोनी'** (तै० १।६।३।३)। यदा होता **'दैव्या आध्वर्यवः'** इति ब्रूयात् तदाध्वर्युरिडां विसृज्य दक्षिणं पुरोडाशं चतुर्धाकृत्वः बर्हिषि निदधाति। यदा होता **'उपहूतोऽयं यजमानः पशुमानसानि'** इति ब्रूयात्तदाध्वर्युर्यजमानश्च **'उपहुतः पशुमान-सानि'** इति ब्रूतः। यजमान इत्येके । आग्नीध्रहस्तेऽध्वर्युः स्थाल्याज्येनोपस्तीर्य, इडायाः पञ्चमं भागं द्वैधा [2]विभज्यार्धमवदधाति । स्थाल्यज्यादभिघारयति ।

---

१. **ग स—** इडामाह्री० ।

२. **ग भ—** कृत्य । **स—** कृत्वा ।

पुनरप्येवं कृते षडवत्तं भवति । होत्रावान्तरेडां प्राश्यमानां यजमानोऽनुमन्त्रयते **'जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयम्'** ( तै० १।६।३।४) इति । होतृव्यतिरिक्ता यजमानादयस्तूष्णीं प्राश्नीयु । अन्तर्वेदि बर्हिषि यजमान-व्यतिरिक्तानामध्वर्युब्रह्माग्नीध्राणां तूष्णीं मार्जनम् । यजमानः **'मनोज्योति-र्जुषन्तामाज्यं विच्छिन्नं यज्ञं समिधं दधातु । बृहस्पतिस्तनुमिमं नो विश्वे देवा इह मादयन्ताम्'** (तै० १।६।५) इत्यनेन मन्त्रेण प्रस्तरस्याधस्ताद् दक्षिणं हस्तं निधाय सव्येन प्रस्तरस्योपरि जलमानीय तच्छिरस्यानयते ।

अध्वर्युर्ब्रह्मणे—**'प्राशित्रं परिहर'**—इति प्रैषमाह । आग्नीध्रेणाहवनीय-माह्रियमाणं प्राशित्रं ब्रह्मा प्रतिपश्यति **'सूर्यस्य त्वा चक्षुषा प्रतिपश्यामि'** (तै० २।६।८।१२) इति । प्राशित्रं हस्ताभ्यां प्रतिगृह्णाति **'देवस्य त्वा०'** इति । अन्तर्वेदि भूम्यां सादयति **'पृथिव्यास्त्वा नाभौ, सादयामि** ( वा० स० १।१ ) । प्राशित्रगतं हविरवेक्षते **'सुपर्णस्य त्वा गरुत्मतश्च चक्षुषावेक्षे'** इति । अङ्गुष्ठोपकनिष्ठिकाभ्यां हविर्गृहीत्वातिहाय दन्तान् जिह्वाग्रे निदधाति **'अग्ने त्वास्येन प्राश्नामि'** । तूष्णीमपः पीत्वाद्भिः सहपुरोडाश निगरणं करोति । तूष्णीमपः पीत्वाद्भिः सह पुरोडाशनिगरणं करोति **'ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा'** ( तै० २।६।८।४ ) इति । उच्छिष्टदोषो न न भवति विहितत्वात् । आचम्यान्तर्वेदि बर्हिष्यद्भिः तूष्णीं मार्जयित्वा, पुनस्तूष्णीं प्रत्यङ्गमपश्च स्पृष्ट्वा वक्ष्यमाणमन्त्रलिङ्गान्यङ्गानि सम्मृशति—**'वाङ् म आसन् नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाहु-वोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह, नमस्ते अस्तु मा मा हिंसीः'** ( तै० ५।५।९।७ ) इति । **'मयि प्राणाः मयि प्राणाः'** इत्यनेन वा प्रत्यङ्गमावृत्त्या [1]संस्पर्शनम् ।

एतस्मिन् काले यजमानो बर्हिषदं पुरोडाशमभिमन्त्रयते **'ब्रध्न पिन्वस्य ददतो मे मा क्षायि कुर्वतो मे मोपसत्'** ( तै० १।६।३।६ ) इति चतुर्धा कृतं निर्दिशति **'इदं ब्रह्मणः । इदं होतुः । इदमध्वर्योः । इदमग्नीधः'** (तै० ब्रा० ३।३।८।८) इति ।

---

१. ग— 'मार्जनम् ।

प्रथमाग्नीध्रभागं द्वेधा विभज्य तस्य हस्ते स्थाल्याज्यात्सकृदुपस्तीर्य, एकतरमवदाय, पुनरुपस्तीर्यान्यतरमवदाय द्विरभिघारयदि । वेदे भागद्वयं परिहरति ब्रह्माहुतौ प्राशित्रे निदधातीति । पात्रान्तराभ्यामितरयोः । अत्र पङ्क्तिचतुष्टयं[1] त्रुटितम् ।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने पञ्चदशोध्यायः ।

---

१. प— पङ्क्तिद्वित्रिचतुष्टयम् । स— पङ्क्तित्विचतुष्ठयम् ।
पाठोऽयं लिपिकारेण संयोजित इति प्रतीयते ।

## षोडशोऽध्यायः

**अथ संप्रैषमाह 'ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्नीन् सकृत् सकृत्संमृड्ढि' इति ।**

तदेतत् ब्रह्माणमाग्नीध्रं च प्रति संप्रैषवाक्यद्वयम् । **'ब्रह्मन् प्रस्थास्यामः समिधमाधाय'** इत्येकमुत्तरं चापरम् । प्रस्थास्याम इति बहुवचनमविवक्षितमेव । प्रस्थास्यामः अनूयाजार्थं प्रतिपद्यामहे । किं कृत्वा ? समिधमाधायेति[1] संबन्धः । अनूयाजेभ्यः समिधमतिशिनष्टि-इति दर्शनात् या समिदतिशिष्टा तामाधायेत्यर्थः । केचित् समिधमाधायेत्येतदुत्तरप्रैषवाक्यतया[1] व्याचक्षते । समिधमाधाय संमृड्ढीति । तन्मते 'ॐ प्रतिष्ठ' (बौ० श्रौ० ३।२६) इति ब्रह्मप्रसवो न संगच्छते । अस्य गमनानुज्ञानार्थत्वापत्तेः । ओमिति चेत् । नैतदेवम् । **'प्रतिष्ठेति समिधमनुजानीयात्'** (आ० श्रौ० १।१३।६) इत्याश्वलायनवचनविरोधात् । ततः समिदाधानस्याध्वर्युकर्तृ[३]कत्वेन तदनुज्ञानमेवोपपन्नम् । आग्नीध्रकर्तृकत्वेऽप्याश्वलायनवचनाविरोध[४] इति चेत् न । ब्रह्मन् प्रस्थास्यामः—इति प्रेषस्यानुत्तरत्वप्रसंगात् ।

**प्रसूनोऽत्रैतां समिधं मध्यतः आहवनीयस्य दधाति इति ।**

**'ॐ' प्रतिष्ठ'** इति ब्रह्मणानुज्ञातोऽध्वर्युः । एताम् अनूयाजाहुत्याधारभूतां समिधं मध्यत आहवनीयस्य । सप्तम्यर्थे तसिः । अत्रेति विशेषणात् । एतेन **'अग्रेणा-**

---

१. प— समिधायेति ।

१. ग भ— प्रेषैकवाक्यतया । स— प्रेषैतवाक्यतया ।

२. ग भ स — °ज्ञातार्थ० ।

३. ग भ— कर्तृत्वेन ।

४. इ१— °वचनविरोधः ।

धारसम्भेदं प्रतीचस्त्रीननुयाजान् यजति' ( आप० श्रौ० ३।५।१-) इति सौत्रः पक्षोऽनङ्गीकृत इत्यवगन्तव्यम् ।

**अथैष आग्नीध्रोऽस्फ्यैरेवेध्मसन्नहनैः परिधीन् सम्मार्ष्टि सकृन्मध्यमं सकृद्दक्षिणार्ध्यं सकृदुत्तरार्ध्यम् सकृदाहवनीयमुपवाजयति 'अग्ने वाजजिद्वाजं त्वा ससृवांसं वाजं जिगिवांसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय' (तै० ब्रा० ३।७।६।१७-१८) इति ।**

अस्फ्यैरेवेत्यवधारणेन सह स्फ्यैर्ऋतेस्फ्यैर्वेति विकल्पो नाश्रित इति द्योतितः[२] ।

**अथैतानीध्मसन्नहनान्यद्भिः '[३]संस्पृश्याहवनीयेऽनुप्रहरति' यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा' (तै० ३।३।२।५) इति ।**

इध्मसन्नहनानीति बहुवचनेन बर्हिसन्नहनवच्छुल्वरूपतापनयनेन दर्भरूपतया बाहुल्यं द्योतयति । प्रहर्त्ता त्वाग्नीध्र एव, नत्वध्वर्युः । पशौ 'सकृत्संमृड्ढि' (बौ० श्रौ० ४।१०) इति प्रैषानन्तरम् 'अथाध्वर्युः पृषदाज्यं विहृत्य' इति लिङ्गदर्शनात् । अन्यथा, इध्मसन्नहनान्यनुप्रहृत्य पृषदाज्यं विहृत्य-इत्येव ब्रूयात् । रौद्रत्वादुदकोपस्पर्शनमाग्नीध्रयजमानाभ्यां कार्यम् । न हि सविशेषणत्वं रौद्रन्त्वनिवर्तकं बहुवचनान्तवत् । तथा च प्राङ्निरूपितम् ।

---

१. ग— उद्धृतस्फ्यैः० । भ—'ऋते स्फ्यैः' नास्ति । स— उद्धृस्फ्यै० ।

२. इ, प— द्योतयति ।

३. ब श्र— संस्पर्श्य ।

**अथ[1] जुहूपभृतावादायात्याक्रम्याश्राव्याह 'देवान् यज' ( तै० २।६।९।६ ) इति। वषट्कृते जुहोति।**

देवान् यज' इत्ययं प्रैषः सर्वानूयाजार्थः। तथापि मध्यमोत्तमयोः। तथापि मध्यमोत्तमयोः पुनः 'यज यज'[2] इत्यभिधानात्तयोर्द्वियजत्वं सिध्यति। द्वियजत्वनियमे च मध्यमोत्तमयोर्लिङ्गं महापितृयज्ञेऽपवर्हिषावनूयाजौ यजतीति[3]। अत्र 'देवो यज' इति प्राथमिकं सम्प्रैषमुक्त्वा 'यज' (बौ० श्रौ० ५।१५, भा० श्रौ० ८।२१।१३, वै० श्रौ० १६।२५) इत्युत्तरस्य सूत्रोक्तिः। एतदनुसारेण कल्पव्याख्यातारो बहुत्र उत्तरयोर्द्वियजत्वपक्षमङ्गीकृत्य व्याख्यातवन्तः। तदेतदभियुक्तानामनभ्यर्हितं यतस्तैः 'देवान् यज' इत्ययं प्रैषः पूर्वानुयाजशेषतयोक्तः। देवशब्दस्य बहुवचनस्य सर्वानूयाजविषयत्वेन मध्यमोत्तमयोः 'यज यज' इति वचनमिति। प्राथमिकस्य यजशब्दस्याप्युत्तरयोरनुकर्षात् सर्वार्थत्वमुत्तरयोर्द्वियजत्वं च युक्तमिति चेत्। (न[4])। 'देवो यज[5]—इति वषट्कृते जुहोति' ( बौ० श्रौ० ५।१५ ) इति कल्पविरोधात्। अत्र ह्यनूयाजद्वयस्य 'यज यज' इति द्वयमेवाम्नातम् नोत्तरत्र 'पुनर्यज' इति। ततो यथासंख्येन मध्यमोत्तमयोरेकयजत्वमेवाचार्याभिमतमिति।

**"[6]यज यज' इति[6]। त्रीन् प्रतीचोऽनूयाजान् यजति।**

प्रतीचः प्रत्यगपवर्गान्। अत्र विशेषमाह।

**प्राचान्ततः सम्भिनत्ति।**

---

१. ग भ— 'अथ' इत्यस्यानन्तरम् 'तु'।

२. ग भ स — 'यज' नास्ति।

३. 'वैतानश्रौतसूत्रे (१।२५) 'अपबर्हिषावनूयाजौ यजति' इत्येतदुद्धरणमुपलभ्यते।

४. अर्थानुरोधेन 'न' इति पाठोऽत्र संयोजितः।

५. ग भ स— 'यज' इति पाठस्य द्वित्वम्।

६-६. पाठोऽयं भाष्यानुरोधेनाङ्गीकृतः।

अन्ततः प्रत्यग्भूयमानमनूयाजं सन्ततया धारया प्राथमिकेन संयोजयेत्। अवर्जनीयतया मध्यमेनापि संयोजनम्। तथा च सूत्रम्—'पूर्वार्धे प्रथमं [1]समिधि जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमं [2]संस्थाप्येतरावनु सम्भिद्य' (आप० श्रौ० ३।५।२) इति। द्वैधे विशेषः 'अनूयाजानां होम इति सूत्रं बौधायनस्य। प्रतीचीरेवैता आहुतीः संस्थापयेदिति शालीकिः' (बौ० श्रौ० २०।१४) इति। नास्मिन् पक्षे प्राचान्ततः संभेद इत्यर्थः। अत्र देवान् यजेति सम्प्रैषादेव देवतात्व[3]भ्रमं वारयितुमुक्तं कर्मान्ते 'किं देवत्या उ खल्वनूयाजा भवन्ति। आग्नेया इत्येव ब्रूयात्। विज्ञायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तत्समिन्धे (तै० २६।८।११) इति'। (बौ० श्रौ० २४।३)। एवं च देवशब्दोऽग्निवचनः। बर्हिरा[4]दिविशेषणेन [5]तद्भेदाद् बहुवचनम्। अग्निमिति जात्यैकवचनम्।

**अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति।**

'वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्' (तै० १।१।१३।१-२) इति वाजवतीत्यृग्द्वयस्य समुदायसंज्ञा, ऋगपेक्षया च द्विवचनम्। तेनोत्तरत्र वाजशब्दाभावेऽपि न दोषः। व्यूहनमिति च उद्ग्रहणादिकर्मचतुष्टयस्य समुदायसंज्ञा। तच्च कर्म चतुष्टयमृग्द्वयान्तर्गतमन्त्रचतुष्टयेन क्रमादनुष्ठेयमित्याह।

**'वाजस्य०' इति दक्षिणेन जुहूमुद्गृह्णाति।**

दक्षिणेन हस्तेन जुहूमुद्धृत्य गृह्णाति।

**'अथ सपत्नाँ इन्द्रो मे निग्राभेणाधरां अकः (तै० १।१।१३।१) इति सव्येनोपभृतं निगृह्णाति।**

---

१. ग भ— समिधम्। स— सनिध।
२. ब श्र— संस्थापयन्। ग स— संस्थाप्येते एव तु।
३. ग स— °देवत्व।
४. स— °रापिः।
५. ग भ स— तद्भेदा बहुत्वचनम्।

न्यक्कृत्य गृह्णाति । [1]अन्तः पीडयतीत्यर्थः । हस्तन्यक्करण जुहूद्ग्रहणेपि समानम् । न्यक्करणमवाक्करणम् ।

**'उदग्राभश्च निग्राभश्च ब्रह्मदेवा अवीवृधन्' (तै० १।१।१६।२) इति प्राचीं जुहूमूहति ।**

आ दक्षिणांसात् ।

**'अथासपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्' (तै० १।१।१३।२) इति प्रतीचीमुपभृतं प्रत्यूहति ।**

उत्तरां स्रोणिं प्रापयति । द्वैधे विशेषः 'वाजवत्योर्व्यूहन इति । स ह स्माह बौधायनोऽक्ष्णया [2]प्रतीचीमुपभृतं प्रत्यूहेदद्भिश्चैनां संस्पृशेदिति । अत्रो ह स्माह शालीकिः प्राचीनपुष्कर एवैने विकर्षेन्न चोपभृतमद्भिः संस्पृशेदिति' (बौ० श्रौ० २०।१४)। एतस्मिन् पक्षे प्राचीनपुष्करयोः जुहूपभृतोः प्राचीमाकर्षणं समानम् । उपभृदुपस्पर्शनतदभावयोर्विशेषः ।

**प्राच्या परिधीननक्ति 'वसुभ्यस्त्वा' इति मध्यमम्, 'रुद्रेभ्यस्त्वा' इति दक्षिणम्' 'आदित्येभ्यस्त्वा' इत्युत्तरम् ।**

प्राच्या जुह्वा । द्वैधपक्षे तु-जुहूपभृद्भ्यामुभयोरपि प्राग्देशसम्बन्धात् । एवं च वसाहवनीसम्भवे तथापि । उपभृतः प्राङ्नयनपक्षे पृषदाज्यधान्यापीति गम्यते । अन्यथा जुह्वा परिधीन् अनक्तीति ब्रूयात् । 'रुद्रेभ्यस्त्वा' इत्यत्रोदकस्पर्शनं प्रागेव सम्पादितम् ।

**अथोपभृतमद्भिः[3] संस्पृश्य ।**

---

१. ग भ स— अतः ।

२. ग स – प्राची० ।

३. ब श्र— संस्पर्श्य ।

न्यूनकाल एवाद्भिः संस्पर्शनाभावपक्षे त्वयं कालः।

**यथायतनं स्रुचौ सादयित्वा। स्रुत्तु प्रस्तरमनक्ति।**

प्रस्तरमेवानक्ति, न तु शाखापवित्रम्। प्रह्रियमाणत्वविशेषाच्च शाखापवित्रस्याप्यञ्जनमिति [1]चेत्। [2]तन्न। अञ्जनस्य प्रहरणानङ्गत्वात्। [3]यदि [3]स्यात्, प्रहरणाङ्गतायामञ्जनस्य प्रहरणाभावेऽञ्जनं न स्यात्। उपसदादौ हि न प्रस्तरप्रहरणम्, अञ्जनं त्वस्ति। अतः प्रहरणाङ्गत्वभ्रान्त्या शाखापवित्रस्याप्याञ्जनमुक्तं कैश्चिदिति। तदप्यञ्जनं जुह्वादौ प्रत्येकं त्रिस्त्रिर्वा स्यात्। प्रत्येकमेकवारमिति, समुदितेषु वा त्रिञ्जनम्। पक्षद्वयमपि 'त्रेधानक्ति' (तै० ब्रा० ३।३।९।२) इति ब्राह्मणस्यार्थ[4] इति। द्वैधे दर्शितम्—'**प्रस्तरस्य समञ्जन इति। त्रिस्त्रिरेकैकस्यां समञ्ज्यादिति बौधायनः। सकृत् सकृदिति शालीकिः**' (बौ० श्रौ० २०।१४) इति। समञ्जनक्रममाह—

**'अक्तं रिहाणा' इति जुह्वामग्राणि, 'वियन्तु वयः' (तै० १।१।१३।६) इत्युपभृति मध्यानि, 'प्रजां योनिं मा निमृक्ष' (तै० १।१।१३।७) इति ध्रुवायां मूलानीति। अथ प्रस्तरात्तृणं प्रच्छिद्य जुह्वामवदधाति।**

प्रस्तरस्यैकावयवत्वविवक्षया तदवयवभूततृणापादानं[5] प्रच्छेदनमित्युक्तम्। जुह्वामवधीयमानत्वं प्रस्तरस्यैव न तु तृणस्य तथा च सूत्रम् 'अक्तस्य [6]तृणमपादाय

---

१. ग भ स— केचित्।

२. ग स भ— 'तन्न' नास्ति।

३-३. इ१ भ — 'यदि स्यात्' नास्ति।

४. इ१ — °स्यार्थम्।

५. इ१— °तृणोपादानम्।

६. इ१— तृणमादाय।

प्रज्ञातं निदधाति' (आप० श्रौ० ३।५।५ ) स च प्रस्तरो दक्षिणोत्तराभ्यां ग्रहीतव्यः। 'दक्षिणोत्तराभ्यां [1]पाणीभ्यां [2]प्रस्तरं गृहीत्वा' इति सूत्रोक्तेः।

[3]पाणीभ्यामिति छान्दसो दीर्घः।

**अथाश्रावयति 'ओ श्रावय, अस्तु श्रौषट्'।**

यद्यप्याश्रावणस्य तिष्ठता कर्तव्यत्वम् 'तिष्ठन्नाश्रावयेदिति' ( बौ० श्रौ० १४।२ ) इति नियमदर्शनात् तथाप्यत्रासीनेनैवाश्रवणं कार्यम्। 'आसीन आश्राव्य' (आप० श्रौ० ३।६।५) इति सूत्रोक्तेः।

**'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि' इति।**

सम्प्रेष्यतीति शेषः। देवसम्बन्धिनो होतारः। अपेक्षिताः तत्स्थाने। भद्रवाच्याय प्रेषितोऽयं मानुषः प्राकृतो होता, त्वं सूक्तवाकाय सूक्ता ब्रूहि। सूक्तवाकाय यानि विनियुक्तानि सूक्तानि तानि ब्रूहि-इति। सूक्तवाक्शब्दः 'इदं द्यावापृथिवी' (तै० ब्रा० ३।५।१०) इत्यादीनां संज्ञा।

**तमुपरीव प्राञ्चं प्रहरति, नात्यग्रं प्रहरति, न पुरस्तात् प्रत्यस्यति, न प्रतिशृणाति, न विष्वञ्चं वियौत्युध्र्वमुद्यौति 'आप्यायन्तामाप ओषधयो मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेय' (तै० १।१।१३।८-६) इति।**

तं प्रस्तरम् उपरीव उपर्येवाङ्गाराघर्षणेन ज्वालानतिक्रमेण चेत्यर्थः। प्राञ्चं प्रागायताम्। नात्यग्रम्-अनेनैव प्रागग्रत्वं द्योतयति। अतिक्रान्तमग्रं यस्य तदत्यग्रं तथा

---

१. आप० श्रौ०— पाणिभ्याम्।

२. ग भ स— 'प्रस्तरम्' नास्ति।

३. प— पाणि०।

न प्रहरेत्। अनेनादग्धाग्राणां ज्वालातिक्रमं वारयति। न पुरस्तात्प्रत्यस्यति [1]प्राग्गतं न प्रतिकर्षति। न प्रतिशृणाति यथा [2]प्रस्तरमर्दिता अङ्गारा प्रतिशीर्णा न भवन्ति तथा प्रहरतीत्यर्थः' (आप० श्रौ० ३।७।१०, सूत्रदीपिका)। न त्रिष्वञ्चं वियौति तिर्यङ् न विचालयति। ऊर्ध्वमुद्यौति ऊर्ध्वमुद्दीपयति, आमूलं ज्वालयोर्ध्वं दीपयतीत्यर्थः।

अत्र सूक्तवाकस्य याज्यास्थानीयत्वं प्रस्तरस्य द्रव्यत्वं प्रहरणस्य हवनत्वमिति। प्रहरतीति। अनेन जुहोति-चोदितं सिध्यति। 'तेन आप्यायन्तामाप' इत्याध्वर्यवमन्त्रे स्वाहाकारः प्रयोक्तव्यः। अतएव सूत्रे 'न स्वाहा करोति, (आप० श्रौ० ३।६।७) इति [3]निषेधः कृतः। न ह्यप्रसक्तं प्रतिषेधयति[4]। प्रसक्तिश्च सौत्र्येव, रागादिकस्य तन्निमित्तस्याभावात्। सूक्तवाकस्य याज्यास्थानीयत्वाश्रवणात् किं स्वाहाकारेणेति चेत्, [5]न वपायागादिवदु[6]पपत्तेः। तत्र हि या याज्यायां वषट्कारानुप्रदानसम्भवेऽपि स्वाहाकारो दृष्टः। किमुतात्र वषट्कारानुप्रदा रहितायाज्यास्थानीयमात्रे सूक्तवाके स्वाहाकारप्रयोग इति। अनेनैव न्यायेन यत्र प्रहरति, आदधातीति वा चोद्यमानत्वं तत्र सर्वत्र समिदादौ स्वाहाकारः सिध्यति। [7]तत्तद्देवतोद्देशेन च द्रव्यत्यागः। एवं स्थिते सत्यत्र 'अग्निरिदं हविरजुषत' (तै० २।६।९।१७, तै० ब्रा० ३।५।९।१२) इत्यादिदेवताभेदेन याज्याहूयमानस्य प्रस्तरस्यैकद्रव्येऽपि तत्तद्देवतायै सूक्तवाकानुक्रान्तायै त्यागः कर्त्तव्यः।

'अग्नेरहमुज्जितिमनूज्जेषम्' (तै० १।६।४।४) इत्यपि हुतानुमन्त्रणभेद-

---

१. ग भ— प्रागन्तम्। स— प्रागातम्।

२. अत्र सूत्रदीपिकाकारः—'प्रस्तरप्रमर्दिताः'।

३. ग स— प्रतिषेधः।

४. ग स — प्रतिषेधति।

५. भ— 'न' वास्ति।

६. इ१— °यागवदु०।

७. ग — तत्र देवतो०।

दर्शनात्। शाखापवित्रसद्भावे तु पवित्रमपोह्य शाखाया एव प्रस्तरेण सह प्रहरणम्। अतएव सूत्रे—'सह शाखया प्रस्तरमाहवनीयेऽनुप्रहरति' (आप० श्रौ० ३।६।६) इत्युक्तम्। सौत्रस्य विधूननादिनिषेधस्याविरुद्धत्वात्। अस्माभिरप्याश्रयणीयम्। उपलक्षणत्वात् कल्पोक्तेरिति। प्रस्तरस्य जुह्वामवधानं हस्तद्वयसम्भाद्यमपि हवनं त्वेकेनैव हस्तेन कार्यम्। 'तिर्यञ्च हस्तं धारयन् कर्षन्निवाहवनीये प्रहरति' (आप० श्रौ० ३।६।९) इति सूत्रोः। जिह्ममिव हस्तं धारयति' इति च सत्याषाढभरद्वाजौ। स च हस्तो दक्षिणः, 'दक्षिणं प्रतीयात्। अनादेशे' (आप० श्रौ० १।१।१२-१३) इत्याश्वलायनवचनोक्तेः। द्वैधे विशेषः 'प्रस्तरस्यानुप्रहरण इति। सह[1]स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत् पौरोडाशिकैश्च याजमानैश्च। न[2] याजमानैर्यजमानोऽनुमन्त्रयेतेति। [5]अत्रोह स्माहशालीकिरध्वर्युरेवोभयैर्मन्त्रैर[3]नुप्रहरेत् पौरोडाशिकैश्च याजमानैश्च। न याजमानैर्यजमानोऽ[4]नुमन्त्रयेतेति[4]। अत्रो ह[2] स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्' (बौ० श्रौ० २०।१४) इति।

'अथाग्नीध्रमीक्षते' इति।

आग्नीध्रेक्षणं नियमार्थम्। अनेनैव यमुद्दिश्य सम्प्रैषं करोति सर्वत्र [6]तदीक्षणं कर्त्तव्यमिति द्योतयति। ततश्च, अनुब्रूहि यजेत्यादौ, होतारमाश्रावयेत्यादावाग्नीध्रमीक्षत इति सर्वविषयं द्रष्टव्यम्।

**तमाहाग्नीध्रः 'संवदस्व' इति।**

तमध्वर्युमग्नीदित्याह्वातारमाग्नीध्रः 'संवदस्व' इत्याह। अग्नीदित्यस्य

---

१-१. भ— 'स्माह....अत्रोह' नास्ति।
२. ग— 'न' नास्ति।
३. ग स— 'मन्त्रैः' नास्ति।
४. ग भ स—प्रहरेदिति।
५-५. इ१— 'अत्रो....येतेति' नास्ति।
६. प इ१ भ— तदवेक्षणम्।

साकांक्षत्वात् । लोके हि [1]'माठर' इत्युक्ते, ब्रवीति 'ब्रूहि किं करवाणि ?' इति । एवमत्रापि संवदस्वेत्युत्तरं युज्यते । तमेव संवादप्रकारमाह ।

**'अगानग्नीत्' ( तै० २।६।५।२५ ) इत्याहाध्वर्युः, 'अगन्' (तत्रैव) इत्याहाग्नीध्रः ।**

प्रस्तरः किमग्निमगमदित्यध्वर्युप्रश्नार्थः । अगमदित्याग्नीध्रोत्तरार्थः ।

**'श्रावय' इत्याहाध्वर्युः । 'श्रौषट्' इत्याहाग्नीध्रः ।**

श्रावयेत्येदप्याश्रावणमेव, श्रौषडित्येतदपि प्रत्याश्रावणम् । तदेतद् द्वयमप्यस्मिन्नेव नियतम् । अतएवान्यत्र पौनःपुन्येन ब्रवीति—'**अथाश्रावयति ओ श्रावय । अस्तु श्रौषट्**' इति । अनेन श्रावणविकल्पानामन्येषां सौत्राणामनादेयत्वं द्योतयति । द्वैधेऽपि तथानभिधानादिति ।

**'इदं ब्रूहि' इत्याहाध्वर्युः । 'अनुप्रहर' इत्याहाग्नीध्रः । अनुप्रहरति ।**

इदमिति । प्रस्तरात् पृथगुपात्तं तृणं निर्दिश्याह इदं किं करोमि ब्रूहीति । अनुप्रहरेत्याग्नीध्रोत्तरम् । अनु अस्य प्रस्तरस्य [2]प्रहरणानन्तरं प्रहरेत्यर्थः । अनेन प्रस्तरप्रहरणस्याध्वर्युकर्तृकत्वात् तदूर्ध्वोद्यमनमपि तत्कर्तृकमेवेति गम्यते ।

**'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शं यो ब्रूहि' (तै० ब्रा० ३।३।८।११) इति ।**

---

१. **ए ग भ स**— माहर । 'माहर' इत्यपि पाठः समीचीन-एव । लोकभाषायामद्यापि महर, महरिन'-इत्यादिशब्दाः परिचारकाणां सम्बोधने प्रयुज्यन्ते ।

२. **ग स**—प्रहरणादनन्तरम् ।

सम्प्रेष्यतीति शेषः। देवसम्बन्धिभ्य एव होतृभ्यः स्वगा अग्निप्राप्तिः। अतएव मानुष्येभ्यो होतृभ्यः स्वस्तिर्यजमानायास्त्वित्यर्थः। स्वस्तिशब्दः सुबन्तः क्षेमवचनः। शं यो ब्रूहीति। शंयुवाकं[1] ब्रूहीत्यर्थः। स्वगाशब्दस्याग्निप्राप्तिवचनत्वं [2]ब्राह्मणेऽभिहितम्—स्वगाकारेणेत्याह एषा वा अग्नेराप्तिस्तयैवैनमाप्नोति' इति।

**अथोपोत्थायाहवनीयमुपतिष्ठते 'आयुष्पा अग्नेऽस्यायुर्मे पाहि, चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि' (तै० १।१।१३।१०)।**

उपोत्थायैव, न त्वासीनः, सर्वत्रोपतिष्ठेतेति नियमः।

**अथेमामभिमृशति '[3]ध्रुवासि' (तै० १।१।१३।११) इति।[3]**

इमामिति पृथिवीमाह, सा चान्तर्वेदिरूपा। तथा सूत्रम्—'ध्रुवासि इत्यन्तर्वेदि पृथिवीमभिमृशति' (आप० श्रौ० ३।७।७) इति।

**मध्यमं परिधिमनुप्रहरति 'यं परिधिं पर्यधत्थ। अग्ने देव पणिभिर्वीयमाणः। तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै' (तै० १।१।१३।३) इति। अथेतरावुपसमस्यति 'यज्ञस्य पाथ उपसमितम्' (तै० १।१।३३।१३) इति।**

इतरौ दक्षिणोत्तरौ। मध्यमपरिधेः समीपे संसृष्टौ युगपदादधाति। समितमिति द्विवचननिर्देशात्। द्वैधे विशेषः 'परिधीनामभ्याधान इति सूत्रं बौधायनस्य। प्रस्थान एवैनानभ्यादध्यादिति शालिकिः' (बौ० श्रौ० २०।१४)। प्रस्थाने कर्मावसाने, समिष्टयजुर्होमानन्तरमित्यर्थः।

---

१. ग स— 'शंयुवाकम्' इत्यस्यानन्तरम् 'कम्'।
२. इ१— ब्राह्मणाभि०।
३-३. ग स— 'ध्रुवासि इति' नास्ति।

**अथैनान् संस्रावेणाभिजुहोति । जुह्वामुपभृतं [1]सम्प्रस्रावयति 'संस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वम्' (तै० १।१।१३।१४) इति ।**

अत्र जुहूपभृदाज्ययोरुभयोरप्युपयुक्तत्वादविशेषेण द्वयोरपि संस्रावः। स चैकरूप एव सम्पाद्यः। संस्रावेणेत्येकत्वनिर्देशात्। तथा च सूत्रम् 'जुह्वामुपभृतोऽग्रमवधाय संस्रावभाग इति संस्रावेणाभिजुहोति' (आप० श्रौ० ३।७।१४) इति। द्वैधे विशेषः 'अथैनान्संस्रावेणाभिजुहोतीति[2] कल्पो बौधायनस्य। प्रस्तरं चैव परिधींश्चाभिजुहुयादिति शालीकिः' (बौ० श्रौ० २०।१४) इति।

**अथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि स्रुचौ विमुञ्चति 'अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तम्। धुरि धुर्यौ पातम्' (तै० १।१।१३।१५-१६) इति। यद्यु वे ना नो भवत्युकर एवैने स्फ्ये विमुञ्चत्येतेनैव मन्त्रेण।**

एतेन जुहूपभृतौ विमुञ्चतीति। अनेनासादने ये नियमाः प्राग्बिलत्वादयस्तानपाकरोति। द्वैधे च[3] 'स्रुचो पूर्वः कल्पो बौधायनस्य। उत्तरः शालीकेः' (बौ० श्रौ० २०।१४) इति।

अत्र प्रयोगक्रमः—

अध्वर्युः 'ब्रह्मन्' 'प्रस्थास्यामः समिधमादायाग्नीदग्नीन् सकृत् सकृत् सम्मृड्ढि' इति। तदा ब्रह्मानुज्ञां करोति देव सवितरेतत्ते प्राह तत् प्र च सुव प्र

---

१. ए ग भ स— समानयति। तै०— सायणभाष्ये—संश्रावयति।

२. इ१— पूर्वःकल्पो। ब श्र— सूत्रम्।

३. ग भ स— 'च' नास्ति।

च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यजपतिं पाहि स मां पाहि ओं प्रतिष्ठ' (बौ० श्रौ० ३।२६) इति । अर्ध्युरनुयाजसमिधं तूष्णीमादधाति । आग्नीध्रः स्फ्यरहितैरिध्मसन्नहनैः 'अग्ने वाजजिद्' इति परिधीनामग्नेश्च सकृत् पूर्ववत्सम्मार्गं कृत्वा, इध्मसन्नहनान्यद्भिः संस्पृश्याग्नीध्रं आहवनीयेऽनुप्रहरति 'यो भूताना०' इति । (यजमानोऽनुमन्त्रयते) 'भूतानामधिपतये रुद्राय तन्तिचराय देवाय' । आग्नीध्र-यजमानयोरपामुपस्पर्शनम् । ततोऽध्वर्युर्जुहूपभृतावादायात्याक्रम्याश्राव्याह 'देवान् यज' इति । वषट्कृते समिधः पूर्वार्धे जुहोति । यजमानः 'अग्नय इदम्० । बर्हिषोऽहं देवयज्यया भूयासम्' । ( तै० १।६।४।१ ) इत्यनुमन्त्रयते च । अध्वर्युः पुनराश्राव्य, वषट्कृते समिधो मध्ये जुहोति । यजमानः 'अग्नये इदम्० नाराशंस्याहं देवयज्यया पशुमान् भूयासम्' ( तै० १।६।४।२ ) । 'अध्वर्युः पुनराश्राव्य वषट्कृते समिधो मूलादारभ्य सन्ततया धारया[1]ग्राज्जुहोति । यजमानः 'अग्नये स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयम्' (तै० १।६।४।३) इति ।

अध्वर्युः प्रत्याक्रम्य यथायतनं स्रुचौ सादयित्वा सह यजमानेन 'वाजस्य मा०' इति दक्षिणेन हस्तेन जुहुमुद्गृह्णाति । 'अथा सपत्नां' इति सव्येनोपभृतं निगृह्णाति । 'उद्ग्राभं च०' इति प्राची जुहुम् । आ दक्षिणांसात्प्रोहयति 'अथा सपत्ना०' इति । सव्येनोपभृतं प्रतीचीमोत्तरायै श्रोणेः प्रत्यूहति । अध्वर्युर्जुह्वा परिधीनर्नक्ति 'वसुभ्यस्त्वा' इति मध्यमम् । 'वसुभ्य इदं०' 'रुद्रेभ्यस्त्वा इति दक्षिणम् । 'रुद्रेभ्य इदम्०' । अध्वर्युयजमानयोरपामुपस्पर्शनम् । 'आदित्येभ्यस्त्वा' इत्युत्तरम् । 'आदित्येभ्य इदम्०' । उपभृतमद्भिः संस्पृश्य यथायतनं स्रुचौ सादयित्वा [2]शाखापवित्रं विना [3]विधृतीभ्यां सह प्रस्तरमनक्ति—'अक्तं रिहाणाः' इति जुह्वामग्राण्यनक्ति, 'वियन्तु वयः' इत्युपभृति मध्यानि ।

प्रस्तरात्तृणमपच्छिद्य तत्प्रज्ञातं निधाय सह शाखाया दक्षिणोत्तराभ्यां पाणिभ्यां जुह्वामूर्ध्वाग्रं प्रस्तरं निधायाश्राव्य प्रत्याश्राविते 'इषिता देव्या०' इति

---

१. इ१— अग्नौ ।

२. इ१ भ— 'शाखापवित्रम्' नास्ति ।

३. भ— 'विधृतीभ्याम्' नास्ति ।

सम्प्रेष्यति। यदा होता **'अग्निरिदं हविरजुषत'** इत्यादि ब्रूयात्तदा यजमानः **'अग्नये इदम्०'**। इति ब्रूयात्। अध्वर्युर्यजमानं वाचयति **'अग्नेरहमु०'** इति। एवमुत्तरत्रापि यथादैवतमुद्देशत्याग उज्जितिवाचनं च। तद्यथा—**'सोमायेदम्'**। **'सोमस्याहमु०'** (तै० १।६।४।५)। अग्नय इदम्०। अग्नेरहमु०। प्रजापतय इदम्०। प्रजापतेरहमु०। अग्नीषोमाभ्यामिदम्०। अग्नीषोमयोरहमु०। इन्द्राय वैमृधायेदम्०। इन्द्रस्य वैमृधस्याहमु०। देवेभ्य आज्येभ्य इदम्०। देवानामाज्यानामहमु०। अग्नये स्विष्टकृत इदम्० **'अग्ने स्विष्ट कृतोऽहमु०'** इति पौर्णमास्याम्। अमावास्यामसन्नयतः **'इन्द्राग्निभ्यामिदम्०। इन्द्राग्न्योरहमु०'**। सन्नयतः **'इन्द्राय'** इतीन्द्रयाजिनः, **'महेन्द्राय'** इति तद्याजिनः। अन्यत्समानम्।

यदा होता **'आशास्तेऽयं यजमानः'** इति ब्रूयात् तदाध्वर्युर्वाचयति **'एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम्'** (तै० १।६।४।१४) इति। अध्वर्युः सहशाखया प्रस्तरमाहवनीये[1] प्राञ्चं प्रहरति **'आप्यायन्ता०'** इति[2]। यजमानः प्रह्रियमाणं प्रस्तरमनुमन्त्रयते **'रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु'** (तै० १।६।४।१५-१७) इति। अध्वर्युरुपात्ततृणमादायाग्नीध्रमीक्षमाणः **'अग्नीत्'** इत्याह। तमाग्नीध्रः **'संवदस्व'** इत्याह। **'अगानग्नीत्'** इत्यध्वर्युराह। **'अगन्'** इत्याग्नीध्रः। श्रावयेत्यध्वर्युः, श्रौषडित्याग्नीध्रः। इदं ब्रूहीत्यध्वर्युः। अनुप्रहरेत्याग्नीध्रः। अध्वर्युस्तत्तृणमनुप्रहृत्य होतारं प्रत्याह **'स्वगादैव्या०'** इति। उपोत्थायाहवनीयमुपतिष्ठते **'आयुष्पा०'** इति। उपविश्यान्तर्वेदि भूमिमभिमृशति **'ध्रुवासि'** इति। मध्यमं परिधिं प्रहरति **'यं परिधिं०'** इति। दक्षिणोत्तरौ[3]परिधी उपसमस्यति **'यज्ञस्य०'**।

यजमानः परिधीन् विमुच्यमानाननुमन्त्रयते **'वि ते मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो**

---

१. भ— 'आहवनीये' नास्ति।

२. भ— 'इति' इत्यास्यानन्तरम् 'प्रेरयति'।

३. ग भ स —परिधीन्।

ब्रूताद् भागधान् देवतासु' ( तै० १।६।४।१८) इति। होत्रोक्तं शंयुवाकमनुमन्त्रयते यजमानः 'विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम्' (तै० १।६।४।१९) इति। अध्वर्युः जुहूमुख उपभृतं[1] सम्प्रस्रावयन् संस्रावेण परिधीनभिजुहोति 'संस्रावभागाः' इति। यजमानः 'वसुभ्यो रुद्रेभ्य आदित्येभ्यः इदम्०'। 'विश्वेभ्यः देवेभ्यः' इति केचित्। अध्वर्युः प्रदक्षिणमावृत्यानसोऽभाव उत्करे स्फ्यं निधाय तस्मिन् स्रुचौ विमुञ्चति 'अग्नेर्वाम०' इति।

इति बौधायनश्रौतसूत्रभाष्ये प्रथमप्रश्ने षोडशोऽध्यायः।

---

१. ख१—संस्रावयन्। ग—संस्रावयिष्यन्।

## सप्तदशोऽध्यायः

अत्र हौत्रत्वेनाप्रसक्तोऽपि बहूपयोगाद्धौत्रशेषप्रश्नोक्तो विशेषो निरूप्यते। **'आशास्तेऽयं यजमानोऽसौ'** इत्यत्र यजमानस्य नाम गृह्णाति। यज्ञनाम तृतीयं स्यात्। सोमयाजितः यज्ञकाम इति। असोमयाजिनः तत्रोदाहरन्ति-जन्मनक्षत्रनामाह पुंवद्भावमतद्धितम्। पुनर्वसूर्मघास्तिष्यो हस्तश्चात्र निदर्शनम्। तद्धितं केचिदिच्छन्ति मार्गशीर्षो निदर्शनम्। प्रोष्ठपादाश्विनाख्यौ च कार्तिको रौहिणस्तथा॥ कं[1] **'वदन्त्यपरे तज्ज्ञा मूलकोऽत्र निदर्शनम्—इति'।**

यज्ञनाम यज्ञनिमित्तकं[1] नाम। अग्निष्टोमयाजी, [2]उद्भिद्याजी, [3]बलभिद्याजी-इत्याह। असोमयाजिनः केवलाधानिनः। यज्ञकाम-इति तृतीयं नाम। देवदत्तादिनाम्नः प्राथमिकत्वात्तस्य ग्रहणं प्राथमिकम्। अत्रोदाहरन्ति—द्वितीयं नामेति शेषः। नक्षत्रनामेति द्वितीयम्। यस्य यज्जन्मनक्षत्रं [4]तन्नामैवास्य द्वितीयं [5]नाम [6]भवति। तद्ग्रहणे पुंवद्भावतद्धितकप्रत्ययान्तत्वं वैकल्पिकम्। सर्वनक्षत्रसाधारणमपि निदर्शनार्थम्। नक्षत्रविशेषेषु व्यवस्था दर्शिता जन्मनक्षत्रनामेत्यादिना। अत्र केचित् [7]तद्धितकप्रत्यययोर्व्यवस्थामाहुः— रोरेममूज्येचिषु वृद्धिरादौ,

---

१. इ₁ भ— 'कम्' इत्यस्यानन्तरम् 'न'।
२. ग स— निमित्तत्वकम्। ३. स— बलाभीद्याजी।
३. ग— 'उद्भिद्याजी' नास्ति।
४. ग— तत्र भवोऽस्य।
५. इ₁— 'नाम' नास्ति।
६. ग— 'भवति' नास्ति।
७. इ₁ ग भ— वद्धितप्रत्यययोः।

[1]ष्ठात्ये च, वान्त्यश्रवशाश्वयुक्षु शेषेषु मार्म्बोः कपरः स्वरोऽन्त्यः, **'स्वाप्वो[1]रदीर्घः सविसर्ग इष्टः'** । अस्यार्थः—रोहिणीरेवतीमघामृगशीर्षज्येष्ठाचित्रा इत्येषु नक्षत्रेष्वादिवृद्धिः । रौहिणः, रैवतः, माघः, मार्गशीर्षः, [2]ज्येष्ठः, चैत्रः [3]इति ।

[4]ष्ठात्ये च । ष्ठकारादुत्तरस्मिन् पकारे च वृद्धिः । यथा पूर्वाप्रोष्ठपादः, उत्तराप्रोष्ठपाद इति । वान्त्यश्रवशाश्वयुक्षु । अन्त्योऽपभरणी । श्रवः श्रवणः । शः शतभिषक् । अश्वयुक् अश्विनी । एतेषु विकल्पेनादिवृद्धिः आपभरणः, अपभरणः । श्रावणः, श्रवणः । शातभिषजः, शतभिषक् । आश्वयुजः, अश्वयुक् । शेषेषु न । अवशिष्टेषु नक्षत्रेषु वृद्धिर्नास्ति । कृत्तिक इत्यादि । अत्रापि विशेषमाह-आर्म्बोः चार्द्रामूलयोः । अन्त्यः स्वरः कपरः । ककारः परो यस्य [6]आर्द्रकः, मूलकः । स्वाप्वोः स्वातीपुनर्वस्वोः । अन्त्यः स्वरः इत्यनुवर्तते । अदीर्घः ह्रस्वः सविसर्गः यथा—स्वातिः पुनर्वसुरिति ।

**अथादत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन जुहूं होत्रे वेदं प्रदाय ।**

अत्र होत्रे वेदं प्रदाय आदत्त इत्यन्वयः ।

**प्रदक्षिणमावृत्य प्रत्यंचावाद्रवतः ।**

वेददातृप्रतिहीतारौ । अध्वर्युहोतारौ प्रत्यङ्मुखौगच्छतः । तत्र विशेषमाह ।

**दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता ।**

---

१. इ₁— ष्ठान्त्ये स— ष्ठान्त्येव । १. ए—'°प्वो॰' इति नास्ति ।
२. ग— ज्यैष्ठ्यः । भ— जैष्ठयः । स— ज्यैष्ठ्या ।
३. इ₁— इत्यादि ।
४. इ₁— ष्ठान्त्ये । ग— ष्ठान्ते ।
५. ग— तथापि । स— तत्रा ।
६. इ₁— 'कपरः' नास्ति ।

गार्हपत्यमेव परिक्रामति, नाग्न्यन्तरमिति । अनेनान्वाहार्यपचनगार्हपत्ययोर्मध्ये[1]ऽभिक्रमणं द्योतयति । द्वैधे विशेषः—**'पत्नीसंयाजेष्वृत्विजां परिक्रमण** इति सूत्रं बौधायनस्य। **सर्व एवोत्तरेण गार्हपत्यं परिक्रामयेरिति शालिकिः'** (बौ० श्रौ० २०।१५) इति । अत्र सर्वर्त्विजां परिक्रम विधानेऽपि ब्रह्मव्यतिरिक्तानामेव भवति परिक्रमणं न ब्रह्मणः । **'सो त्रैवास्त आसमिष्टयजुषो होमात्'** (बौ० श्रौ० ३।२६) इति वचनात् । पूर्वकल्पे तु द्वित्वमविवक्षितम् । आग्नीध्रपरिक्रमणस्याप्यपेक्षितत्वात् । कथमन्यथा - [2]ज्येष्ठादिषु तद्विनियोगः । कर्मान्ते तु [3]विशेषान्तरम्—**'यथैतच्चालीकेः कल्पं वेदयन्ते-पत्नीसंयाजेषु सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनस्याघृत्यैवात्र फलीकरणहोमो होतव्यो भवति'** (बौ० श्रौ० २४।२९) ।अत्राध्वर्योरप्युत्तरेण परिक्रमणपक्षे फलीकरणहोमकालेनापसलैः पर्यावर्तनं कर्त्तव्यमित्यर्थः ।

**तौ जघनेन गार्हपत्यं प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होता ।**

अत्रापि द्वित्वमविवक्षितम् । आग्नीध्रोपवेशनस्यापि युक्तत्वात् । तथा सूत्रम्—**'अपरेण गार्हपत्यमुर्ध्वज्ञव आसीनाः'** इति । **'दक्षिणोऽध्वर्युरुत्तर अग्नीधो मध्ये होता'** (आप० श्रौ० ३।८।८-९) च । अत्रेदं विचार्यते—किं पत्न्या अपि दक्षिणोऽध्वर्युरुत्तरो होतुरेवेति । सूत्रपर्यालोचनया तावद्धोतुरेवेति प्रतीयते, **मध्ये होता'** इत्यभिधानात् । **'तस्माद् देशादपक्रम्य, सुप्रजास्त्वा वयमिति दक्षिणत उदीच्युपविशति'** (आप० श्रौ० २।५।८) इति चाभिधानात् । न हि गार्हपत्यस्य दक्षिणत उदीच्युपविष्टा जघनेन गार्हपत्यमुपविष्टयोर्मध्ये भवितुमिष्टा[4] । तस्माद्धोतुरेव दक्षिणोऽध्वर्युर्न पत्न्याः । स्यादेतदेव, यद्याचार्यपक्षे भवेदिदं पत्न्याः स्थानम् । जघनेन गार्हपत्यमुप-

---

१. इ₁— अति० ।

२. भ— ज्येष्ठादिषु० ।

३. ग भ— कर्मान्तरे । प —विशेषान्तरे ।

४. ग— °मिष्टम् ।

सीदति' (बौ० श्रौ० ६।३) इति तस्याः स्थानं नियतम्। न च तामतिक्रम्याध्वर्यो-रुत्तरत्र स्थानं विहितम्। प्रत्युत 'दक्षिण एवाध्वर्युः' इत्यवधारणेन पत्न्यपेक्षमप्यु-त्तरत्वं वारयति। अतएव 'उत्तरो होता' इत्यत्र नावधारणं कृतम् तस्य ग्नीध्रापेक्षया दक्षिणत्वादिति ! वक्ष्यति च—'अथाग्रेण होतारमुपातीत्य' (बौ० श्रौ० १।२०) इति। अनेन पत्न्या अग्रेणातिक्रमणं वारयतीति गम्यते। 'पत्न्या अध्वर्योरन्तर-ङ्गत्वात् पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ'[1] इति वचनात्। [2]तत्सिद्धमेतत्-जघनेन गार्हपत्यमुपविष्टायाः पत्न्या दक्षिणोऽध्वर्युरुत्तरो होतेति[2]।

**अथाध्वर्युर्वेदमुपभृतं कृत्वा चतुराज्यस्य गृह्णन् आह।**

वेदमुपभृत्[3]स्थाने [4]विनियुज्य। होत्रे प्रत्तस्य वेदस्य पुनः स्वीकारमध्वर्युग्रहणेन द्योतयति।

**'सोमाय' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः।**

उच्चैः शब्दः तारवचनः। द्वैधे तु 'पत्नीनां संजायन इति सूत्रं बौधाय-नस्य। [5]ध्रौवाज्येन ध्वानेनैव पत्नीः संयाजयेदिति शालीकिः' (बौ० श्रौ० २०।१५) इति। तत्र च ध्वानेनैवेत्यवधारणे सोमायेत्यादिषु यजेत्यत्र च ध्वान एवाश्रितः। ध्वानश्चाक्षव्यञ्जनानामनुपलब्धिरूप इत्युक्तम्। अभियुक्तास्तु[6] उच्चैरित्यनेन मन्द्रं

---

१. भ— °न्तरतयात्।

२-२. भ—'तदेतत्सूत्रं विरुद्धम्। सूत्रे हि पश्चाद्ग्रहणं कृतम्। तच्च भवकेशवाभ्यां व्याख्यातम्। पश्चाद्ग्रहणं कोण निवृत्यर्थम्। तेन पत्न्या अप्युत्तरेऽध्वर्युस्तदुत्तरो होतेति। अव्यवाय पश्चादेवाध्वर्युः तस्या अन्तरंगत्वात्। तदेतच्चिन्त्यम्।'

३. ग स— °कार्ये।

४. इ१— नियुज्य।

५. इ१ भ— 'ध्रौवाज्येन' नास्ति। ग— ध्रौवाद् ध्रौवाज्येन।

६. इ१ भ— 'तु' नास्ति।

लक्षयन्ति। तत्र च हेतुरूपांशुतन्त्रत्वादिति। एवं च [1]यत्रोपांशुतन्त्रे भवत्युच्चैर्ग्रहणं तत्र सर्वत्र मन्द्र*त्वमेवार्थ इति तेषामभिप्रायः। कर्मान्ते तु सर्वत्रो[1]पांशुत्वमेव पत्नी-संयाजस्योक्तम्। उपांशुतन्त्राणां कर्मणां मध्ये पाठात्। तथा हि—**अथेमान्युपांशु-धर्माणि भवन्ति, यथैतदग्न्याधेयं पुनराधेयं पितृयज्ञो दीक्षणीया प्रायणयातिथ्योप-सदः प्रातरनुवाकः पत्नी[1]संयाजा अवभृथ उदयनीयोदवसानीया[2] चितिप्रणय नीयः त्वाष्ट्रो [3]यूपोविरोहणीयोऽ[4]ष्टापद्यै गर्भ इति। सहकारिप्रत्ययाद्भवन्ति'** (बौ० श्रौ० २४।१८) इति। [5]एतेषां स्वरूपं तत्तत्प्रकरणे वक्ष्यामः[5]। सहकारिप्रत्य-याद्भवन्तीति पक्षान्तरम्। सहकारिणो होत्रादयः तदनुरोधेन भवन्तीत्यर्थः।

**आश्राव्याह 'सोमम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते जुहोति। [6]'चतुर एवाज्यस्य गृह्णान आह 'त्वष्ट्रे' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याह' 'त्वष्टारम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते जुहोति[6]। चतुरएवाज्यस्य गृह्णान आह 'देवानां पत्नीः' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याह**

१-१. ग स— 'यत्रो'''सर्व' नास्ति। १. प स— अपत्नी०।
२. प स— चितः प्रायणीयप्रीयः। ग— चितिः प्राणयनीयः।
ब श्र— चितिप्रणनीश्रम्। अत्र पाठश्चिन्तनीयः।
३. ब श्र— यूपविरोहणीयः। प— संरोहणीयोष्टोपद्यं गर्भ, इति च।
४. इ१ भ— संरोहणीयोष्टापद्यं गर्भ इति च। प— संरोहणीयोष्टौपद्यं गर्भ इति च। ग— संरोहणीयोष्टौपद्यं गर्भ इति च। ब श्र— अष्टापदी गर्भवती च। अत्रापि पाठश्चिन्तनीयः।
५-५. भ— 'एतेषां'''वक्ष्यामः' नास्ति।
६-६. ग भ— 'चतुर एवाज्यस्य'''जुहोति' नास्ति।

*मन्द्रत्वम् = पत्नीसंयाजानामुपश्रुतादीनि मन्द्रेणैव, 'ऊर्ध्वं च शंयुवाकात्०' (आश्व० श्रौ० १।५।२८) इत्याश्वलायनवचनात्—इ१।

**'देवानां पत्नीभ्यः' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते परिश्रिते देवानां पत्नीर्यजति।**

परिश्रिते प्रच्छादिते गार्हपत्य इत्यर्थः। द्वैधे विशेषः 'अन्तर्धाय देवानां पत्नीः संयाजयेदिति बौधायनः। अनन्तर्धायैवेति शालीकिः' (बौ० श्रौ० २०।१५) इति।

**चतुराज्यस्य[1] गृह्णान आह 'अग्नये गृहपतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याह 'अग्निं गृहपतिम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृत उत्त[2]रार्धे पूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति[3]।**

आज्यस्यैवेत्यन्वयः। अनेन 'जाघन्या पत्नी संयाजयति' (आप० श्रौ० ३।८।१०) इति श्रौतपक्षो नादृत इति द्योतयति। कर्मान्ते च—'अथ हैके राकां च सिनीवालीं च कुहूं चानुमतिं च पत्नीहोमं च नारिष्ठौ च होमौ पुरस्ताद्गृहदुपजुह्वति—सं पत्नी पत्या सुकृतेन गच्छताम्। यज्ञस्य युक्तौ धुर्यावभूताम्। संजानानौ विजहतामरातीः। दिवि ज्योतिरजरमारमेतां [4]स्वाहा। दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् [5]स्वाहा। यं वां देवा अकल्पयन् ऊर्जो भागं शतक्रतू एतद्वां तेन प्रीणामि। तेन तृप्यतमंहहौ [6]स्वाहा (तै० ब्रा० ३।७।५।११-१२)' (बौ० श्रौ० २०।२९) इति। उपजुह्वतीति वचनाद्याज्यानुवाक्याप्रतिषेधं सूचयति।

---

१. ब श्र—चतुर एवाज्यस्य।

२. ब श्र— उत्तरार्धपूर्वार्धे।

३. ब श्र— जुहोति।

४. आप० श्रौ०— °यन्ति।

५. तै० ब्रा०— 'स्वाहा' नास्ति।

६. तै० ब्रा०— 'स्वाहा' नास्ति।

सोऽपि पक्षो होत्रशेषप्रश्ने दर्शितः ।'अथ हैके राकां च सिनीवालीं च कुहूं चानुमतिं च यजन्ति । राकामहं० । यास्ते राके०—( तै० ३।३।११।१५-१६ ) इति राकायाः । सिनीवालि० । या सुपाणिः (तै० ३।१।११।१५-१६) इति सिनीवाल्याः । कुहूमहं० । कुहूर्देवानां०—( तै० ३।३।११।१९-२० ) इति कुह्वाः । अनुनोऽद्यानुमति० । अन्विदनुमते०—(तै० ३।३।११।११-१२) इत्यनुमतेः' इति ।

द्वैधे विशेषः—'पत्नीसंयाजेषु शंयुवाकस्य करण इति । कुर्यादिति बौधायनः । न कुर्यादिति शालीकिः' (बौ० श्रौ० २०।१५) इति । पत्नीसंयाजविषये शंयुवाककरणे प्राक्तन एव प्रयोगक्रमः प्रैषादिरूपः । तत्र, कुर्यान्न कुर्यादिति पक्षद्वयेऽपि न [1]खण्डसंस्थापक्ष आचार्यस्याभिमतः । यदि स्यात् विकृतीष्टिषु किङ्कृता धर्मा स्युरतिदेश्याः[2]। [3]अतः पराभिप्रायेणैव [1]खण्डसंस्थापक्ष उदाहृत इत्यनुसन्धेयम् ।

**अथाग्रेण होतारमुपातीत्य होतुर्द्विरंगुलावनक्ति ।**

[4]अग्रेण होतारमिति वचनात्पत्न्या अग्रेण गमनं निषेधति । तस्या अन्तरङ्गतयाध्वर्योरग्निव्यवायनिषेधात् । द्विरङ्गुलावनक्तीति[4] । पर्वणोरिति व्याख्यातम् ।

**जिघ्रेण भक्षयित्वा ।**

अन्तर्गर्भितणिजर्थतया व्याख्यातम् ।

**चतुर्हस्तेडां सम्पादयित्वाज्यस्यैव ।**

हस्तशब्दात्पात्रीमपाकरोति ।

---

१. ग स— खण्डन० ।

२. ग— °देश्य स— °श्यादे ।

३. ग स— ततः ।

४-४. ग— 'अग्रेण''''वनक्तीति' नास्ति ।

**समन्वारभेतेऽध्वर्युश्चैव पत्नी च ।**

पत्नीत्येकवचनमविवक्षितम् । एवकारा[1]दन्यान्वारम्भणमपाकरोति । आग्नीध्रस्य सन्निहिततया प्रसक्तेः ।

**उपहूतायामिडायामग्नीध आदधाति षडवत्तम् । प्राश्नीतः । मार्जयेते ।**

अत्र [2]द्विवचनं विवक्षितम् । तेनान्वारम्भणकर्तृतया प्रसक्तयोरध्वर्युपत्न्योः प्राशनं निषेधति, [3]आग्नीध्रीये षडवत्तस्य तन्मात्रनियतत्वात् । होतुरप्यवान्तरेडा[4]-स्थानापन्नत्वाच्चास्यासाधारण्यम् ।

**अथ स्रुचि चतुर्गृहीतं गृहीत्वाऽपसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोति 'उलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले । अवप्रुषे विप्रुषः सन्ति विप्रुषः सन्ति बर्हीरग्नौ ता सर्वाः स्विष्टाः सुहुता जुहोमि ( तै० ३।७।६।२० ) स्वाहा' इति ।**

[5]निगदव्याख्यातमेतत् । एतद्व्याख्यानं कात्यायनीयसूत्रभाष्यादिषुद्रष्टव्यम्[5] ।

**अपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य फलीकरणहोमं जुहोति**

---

१. ग— 'दन्वा० ।

२. 'द्विवचनमविवक्षितम्' इति पाठः स्यात् ।

३. ग स— आग्नीध्रे ये ।

४. इ, भ— स्थानीयत्वाच्चास्य साधा० ।

५-५. ग स— निगद द्रष्टव्यम्' नास्ति ।

**[१]"अग्नेऽदब्धायो शीततनो पाहि माद्य 'दिवः पाहि प्रसित्यै पाहि दुरिष्टयै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनि स्वाहा' (तै० १।१।१३।१७) इति।**

अत्र केचिदामिक्षादिप्रयोगेषु फलीकरणाभावेन तत्प्रतिपत्त्यभावात्तदनुनिष्पाद्यतया[१] 'अग्नेऽदब्धायो०' इत्यनेन हूयमानस्य फलीकरणहोमस्य निवृत्तिमाहुः। तदयुक्तम्। इध्मप्रव्रश्चनप्रतिपत्त्यर्थत्वात्। अतएव-अन्वाहार्यपचन एव-इत्यवधारणम्-जुहोत्येव-इत्यन्वयेनानुगतार्थं भवति। अन्यथा तदानर्थक्यात्। अतएव सूत्रव्याख्यातृभिः पिष्टलेपाभावेऽपि 'उलूखले मुसले' इत्यनेन हूयमानं पिष्टलेपहोमतया व्यवहृतम्। तथास्माभिरपि फलीकरणाभावेऽपि [२]तत्स्थानापन्नत्वाद्धूयमानस्य फलीकरणहोम इति व्यवहारः कृतः। अतएव फलीकरणनोप्य फलीकरणहोमं जुहोतीत्युक्तम्।

**अथैतेनेव यथेतमेत्य। होत्रे वेदं प्रदाय [३]पत्नी विष्यति [४]"इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि' (तै० १।१।१०।६) इति।[४]**

होत्रे वेदं प्रदायाध्वर्युरास्ते। होतृप्रयोगपरिसमाप्तिपर्यन्तं वेदप्रदानार्थत्वाय[५] तत्प्रयोगकालप्रत्यवेक्षणं युज्यते। ततः पत्नी विष्यति योक्त्रं विमुञ्चति। 'इमं विष्यामि' इति मन्त्रलिङ्गाच्च पत्नीकृत एव विमोको मन्त्रजपश्च। 'पत्नीं विष्यति' इति क्वचित् पाठः। तत्रान्तर्भावितण्यर्थत्वामश्रयणीम्। तथापि मन्त्रजपोऽध्वर्यु-

१-१. भ- 'अग्ने…निष्पाद्यतया' नास्ति।

२. ग स— तत्स्थानहूय०।

३. ब श्र—'पत्नीम्।

४. ग भ स— 'इमं विष्यामि …इति' नास्ति।

५. इ१— °नार्थत्वाय।

कर्तृकः स्यात् । तथा च मन्त्रलिङ्गविरोधः । ततः 'पत्नी विष्यति' इत्येव पाठो युक्तः ।

**अथास्यै *योक्त्रमञ्जलावाधायोदपात्रमानयति ।**

अथ होतृप्रयोगानन्तरम् । अध्वर्युरुदपात्रममन्त्रकमानयति । पत्नी तु स्वाञ्जलावानीयमानमुदकमभिमन्त्रयते—

**'समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याहं गच्छे समात्मा तनुवा मम' ( तै० १।१।१०।१० ) इति । अथ मुखं विमृष्टे 'यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति' (तै० ब्रा० २।५।८।६) इति ।**

तथा च सूत्रम्—'इमं विष्यामीति पत्नी योक्त्रपाशं [1]विमुञ्चति । तस्याः संयोक्त्रे जलौ पूर्णपात्रमानयति । समायुषा संप्रजयेत्यानीयमाने जपति । निनीय मुखं विमृज्योत्तिष्ठति' (आप० श्रौ० ३।१०।६-९) इति । अयमेवाचार्यस्याभिप्रायः । अतएवाह—

**'[2]यो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठति' इति ब्राह्मणम् । अथैनां गार्हपत्ये समिध आधापयति 'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेराधि (तै० १।६।६।१३) स्वाहा । वायो व्रतपते···, आदित्य व्रतपते···, व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेराधि स्वाहा' इति । अथ यथाप्रपन्नं [3]निष्क्रामति ।**

---

१. ग स— विमुञ्चते ।

२. ब श्र— अपो० ।

३. ब श्र— निष्क्रामयति ।

---

*योक्त्रम्=पत्न्यनेकत्वेऽव्यावृत्तिः—द्र० ।

एतदन्तं पत्नीकर्तृकम् । प्रयोजककर्तुरप्यध्वर्योर्न मन्त्रजप इत्युक्तो न्यायः । होतुः सकाशादध्वर्योरागमनम्[1] । गार्हपत्यगतस्याप्यध्वर्योरुत्तरेण पथागमनमाह ।

**अथ प्राङेत्य ध्रुवामाप्याययति 'आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्' (तै० १।६।५।१) इति ।**

अत्र ध्रुवाप्यायनं स्रुवेणैव न त्वाज्यस्थाल्याः समन्त्रकत्वात् । द्वैधे विशेषः '**ध्रुवाया आप्यायन इति । स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेति । अध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः**' (बौ० श्रौ० २०।१५) इति । शालीकिपक्षे प्रायश्चित्तहोमानन्तरं समिष्टयजुर्होमात् प्राग्ध्रुवाप्यायनमिति विशेषः ।

**अथाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति ।**

आज्यस्थालीग्रहणादनादेशे ध्रौवाज्येन हवनमिति सूचयति । प्रायश्चित्तानीति वचनाद्दोषनिर्घातार्थत्वेऽपि नित्यत्वमविरुद्धम् । आनुषङ्गिकत्वाद्दोषनिर्घातस्य । स च मन्त्रलिङ्गादवगन्तव्यः[2] । यथा-सायं प्रातः संध्योपासनस्य नित्यत्वेऽप्यानुषङ्गिको दोषनिर्घातो मन्त्रलिङ्गादवगतः तथेहापीति द्रष्टव्यम् । स्रुवेणोपघातमिति वचनात् '**अनादिष्टे स्रुचैव होतव्यम्**' ( बौ० श्रौ० २४।८ ) इति कर्मान्तोक्तं [3]नियमं स्मारयति ।

**'आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति**

---

१. ग भ स— 'आगमनम्' नास्ति ।

२. ए ग — °दवगतः तथा ।

३. ए ग स— 'नियमम्' नास्ति ।

कल्पयन् । स्वाहा कृताहुतिरेतु देवान्त्स्वाहा' (तै० ब्रा० ३।७।११।३-४) इति ।

यज्ञसमृद्धिशब्दः 'इष्टेभ्यः स्वाहा' इत्यादीनां नवानां संज्ञा ।

'इष्टेभ्य स्वाहा, वषडनिष्टेभ्यः' स्वाहा, भेषजं दुरिष्ट्यै स्वाहा, निष्कृत्यै स्वाहा, दौराद्ध्यै स्वाहा, देवीभ्यस्तनूभ्यः स्वाहा, ऋद्ध्यै स्वाहा, समृद्ध्यै स्वाहा, सर्वसमृद्ध्यै स्वाहा (तै० ब्रा० ३।७।११।३-४) भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा, भुर्भुवः सुवः स्वाहा (बौ० गृ० सू० २।८।६)। इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वमग्ने (तै० ४।२।११।१७-२०) (तै० ब्रा० ३।७।११।३)। त्वमग्ने अयास्यासन्मनसाहितः। अयासन्हव्यमूहिषे या नो धेहि भेषजं स्वाहा, अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि। अयसा मनसा धृतोऽयसा हव्यमूहिषे या नो धेहि भेषजं स्वाहा। यदस्मिन् कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा। अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानां समर्धयित्रे स्वाहा। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् (तै० ३।२।५।२०) इति। अथ बर्हिषो धातूनां संप्रलुप्य ध्रुवायां समनक्ति 'समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः। समिन्द्रेण विश्वेभिर्देवेभिरङ्क्ताम्' (तै० ब्रा० ३।७।५।१०) इति।

'धातूनां बर्हिषः' इति धातुशब्दः स्तीर्णमुष्टिवाचकः, 'त्रिधातु पंचधातु वा' (आप० श्रौ० १।४।९) इत्यादिषु व्याख्यातः। धातूनां [1]संप्रलुप्य बर्हिषो ग्रहणमविशेषात्त्रित्वे पर्यवस्यतीति। प्रतिधातु त्रयाणां त्रयाणां दर्भाणां ग्रहणमिति गम्यते। अथवा विशेषणैकदेशग्रहणे तदवयवापेक्षया बहुवचनमध्याहार्यम्। बर्हिषः सकाशाद्दर्भानादायेति। अतएव संप्रलुप्येत्युक्तम्। सम्प्रलोपो नाम एकदेशाहरणेन मुष्टीनामवयवत्वच्युतिः ध्रुवायां समनक्तीति। ध्रुवाशब्दस्तद्गताज्यलक्षकः। समनक्तीत्येकवारमेवेति गम्यते।

**अथैनदाहवनीयेऽनुप्रहरति 'दिव्यं नभो गच्छतु यत्स्वाहा' (तै० ब्रा० ३।७।५।१०) इति।**

[2]गतार्थम्।

**अथोपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति 'देवा गातुविदोगातुं वित्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा। वाचि स्वाहा। वाते धाः [3]स्वाहा' (तै० १।१।१३।१८-२०) इति।**

द्वैधे विशेषः 'समिष्टयजुषो होम इति सूत्रमाचार्ययोः। अत्रोह स्माह गौतमः स्वाहावाचीति हुत्वा बर्हिषो धातूनां सम्प्रलुप्य ध्रुवायां समज्यानुप्रहृत्याभिजुहुयात् 'स्वाहा वाते धाः स्वाहा इति' (बौ० श्रौ० २०।१५)। स्वाहावाचीति मन्त्रान्तग्रहणम्। 'हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसानि' ( तै०

---

१. इ१ ग स — 'संप्रलुप्य' नास्ति।

२. ग भ गतार्थः।

३. तै०— 'स्वाहा' नास्ति।

४।७।१।५) इतिवत् स्वाहावाचीत्यनेन[1] [2]मन्त्रेण स्वाहाकारः। यथा परिवप्यहोमे 'स्वाहा देवेभ्यः' (तै० ३।१।४।१५) इति। बर्हिरञ्जनहवनमन्त्रौ प्रागुक्तावेव गौतमपक्षेऽप्यनुसन्धेयौ। 'स्वाहा वाते धाः स्वाहा इत्येको मन्त्र उभयतः स्वाहाकारः। यथोपांशुग्रहे 'स्वाहा त्वा सुभवः सूर्याय स्वाहा' (तै० १।४।२।५) इति।

**उदूहति स्रुचम्।**

स्रुचं क्षिपति।

**निनयति प्रणीताः।**

[3]प्रणीतानिनयनस्य याजमानत्वेऽप्यत्राभिधानमध्वर्योरपि सहकर्तृतां द्योतयति।

**उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान् क्रमते।**

विष्णुक्रमशब्दस्तन्मन्त्रलिङ्गानुसारेण पदविक्षेपाणां संज्ञा। ते च त्रय एव। 'तृतीये चतुर्थमनुवर्तयति। न चतुर्थाय प्रक्रामति' (बौ० श्रौ० ३।२१) इति वचनात्। दक्षिणेन पदेति। अस्यैव प्राक्प्रसरणं समन्त्रकत्वं तदनुविधायित्वं च वामपादस्येति द्योतयति। तथा च सूत्रम् 'अनतिहरन्सव्यम्' (आप० श्रौ० ४।१४।६) इति। अस्य याजमानत्वेऽप्यत्राभिधानमेतावन्तं कालमध्वर्युसन्निधानस्यावश्यकत्वं द्योतयितुम्। केचित्तु पूर्णपात्रनिनयनविष्णुक्रमणयोर्याजमानयोरप्यत्राभिधानस्यैवं प्रयोजनमाहुः—यजमानप्रवासेऽप्यमन्त्रकमेवानयोरनुष्ठानमध्वर्युकर्तृकं [4]यथा स्यादिति।

**संतिष्ठत आमावास्यं वा [5]पौर्णमासं वा हविः—इति।**

---

१. ड१— 'अनेन' नास्ति।

२. ग भ स— 'मन्त्रेण' नास्ति।

३. ग भ स— 'प्रणीता०' नास्ति।

४. ग भ— 'यथा' नास्ति।

५. ब श्र— पौर्णमास्यम्।

हविःशब्देन साङ्गकर्मोपलक्षयति । वाशब्दद्वयेन [1]वैमृधस्य भिन्नतन्त्रत्वपक्षे नैतावता पर्यवसानम् तस्या इष्टेः पूर्णमासाङ्गत्वात् । तथापि [2]दार्शमेव तन्त्रं सेन्द्रत्वापादकत्वादिति द्योतयति । अयमेवार्थस्तत्तत्प्रकरणे प्रपञ्चितः—"अथ वै भवति ब्रह्मवादिनो वदन्ति-सत्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति । वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति । तेन पूर्णमासः सेन्द्रः । ऐन्द्रं दध्यमावास्यायाम् । तेनामावास्या सेन्द्रेति । [3]केनास्मिन्ननूजातस्य सेन्द्रौ भवति इति । ऐन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयात् । अथ वै भवति देवा वै यज्ञं कुर्वत तदसुरा [4]अकुर्वत । ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादश कपालं सरस्वत्यै चरुं सरस्वते चरुम् । तां पौर्णमासं संस्थाप्यानुनिनिरवपन् । ततो देवा अभवन् परासुराः । यो भ्रातृव्यवान्त्स्यात् स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेत् । पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेत् । पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन [5]देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्त इति ब्राह्मणम् । स एष भ्रातृव्यवतो यथाकामप्रयोगः । मिथुनान् पशुन् सारस्वताभ्याम् । यावदेवास्यास्ति तत्सर्वं वृङ्क्त इति ब्राह्मणम् । अथवै भवति पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति । स पौर्णमासीं [6]पौर्णमासीमेव यजेत भ्रातृव्यवान्नमावास्याम् । हत्वा भ्रातृव्यं नाप्यायतीति ब्राह्मणम्, (बौ० श्रौ० १७।४७-४८) इति[7] ।

**अत्र प्रयोगक्रमः—**

होत्रे वेदं प्रदायादत्ते दक्षिणेन हस्तेनाज्यस्थालीं स्रुवं सव्येन जुहूं प्रदक्षिण-

---

१. ग— वैमृधस्याभिन्न० ।

२. ग भ स— दर्श० ।

३. ग स— केनोस्मिदनुजानस्य । भ - केनोऽस्मिन्ननूजातस्य ब श्र— केनोस्विदनीजानस्य ।

४. भ — अकुर्वन्त ।

५. भ— देवश्च ।

६. ग स— पूर्णमासीम् ।

७. इ१ ग भ— 'इति' नास्ति ।

मावृत्य, प्रत्यगेत्य, गार्हपत्यदक्षिणाग्न्योरन्तरागत्य' अतिक्रम्य गार्हपत्यस्य दक्षिण-प्रत्यग्देश उपविशति। होता गार्हपत्यस्योत्तरतो गत्वा पत्न्या उत्तरत उपविशति। आग्नीध्रोऽप्येवमेव गत्वा तस्योत्तरत उपविशति। अध्वर्युर्होतुर्हस्ताद्वेदं गृहीत्वा, उपभृतं तमेव कृत्वा जुह्वामाज्यस्थाल्याः स्रुवेणोपहत्य चतुर्वारं गृह्णान आह— **'सोमाय'** इत्युपांशु **'अनुब्रूहि'** इत्युच्चैः। आश्राव्य प्रत्याश्राविते आह **'सोमम्'** इत्युपांशु **'यज'** इत्युच्चैः। वषट्कृते मध्ये जुहोति। (यजमानोऽनुमन्त्रयते) **'सोमस्याहं देवयज्यया सुरेता रेतो धिषीय-(तै० १।६।४।२०)'** इति। पुनश्चतुर्गृहीत्वाह **'त्वष्ट्रे'** इत्युपांशु **'अनुब्रूहि'** इत्युच्चैः। [1]आश्राव्य प्रत्याश्राविते[1] **'त्वष्टारम्'** इत्युपांशु **'यज'** इत्युच्चैः। वषट्कृते मध्ये जुहोति। **'त्वष्ट्र इदं०। त्वष्टुरहं देवयज्यया** [2]**पशुमान् भूयासम्**[2]**—(तै० १।६।४।२१)** इति। पुनश्चतुर्गृहीत्वाह **'देवानां पत्नीभ्यः'** [3]इत्युपांशु **'अनुब्रूहि'** इत्युच्चैः। आश्राव्य प्रत्याश्राविते **'देवानां पत्नीः'** इत्युपांशु **'यज'** इत्युच्चैः। वषट्कृते मध्ये गार्हपत्यं परिश्रित्य जुहोति। **'देवानां पत्नीभ्य[3] इदम्०'**।

आज्यस्थाल्याः स्रुवेण जुह्वां सकृत् सकृदाज्यं गृहीत्वा [4]राकादीन् गार्हपत्ये जुहोति[4]—राकायै स्वाहा। राकाया इदम्०। सिनीवाल्यै स्वाहा। सिनीवाल्या इदम्०। कुह्वै स्वाहा। कुह्वा इदम्०। अनुमत्यै स्वाहा। अनुमत्या इदम्०। सं पत्नी पत्या० स्वाहा। दिवि ज्योतिवे जराय परमात्मन इदम्०। प्रजापतय इद-मितिवा। दशते तनुवो० स्वाहा। नारिष्टाभ्याम्० अग्निवायुभ्यामिदमिति वा। यं वां देवा० स्वाहा। नारिष्टाभ्यामग्नि[4]वायुभ्यामिदम्०।

चतुराज्यस्य गृह्णान आह **'अग्नये० गृहपतये०'** इत्यादि। वषट्कृत [5]उत्तरार्द्धपूर्वार्धे विहाय पूर्वा आहुतीर्जुहोति। **'अग्नये गृहपतय इदम्०। देवानां**

---

१-१. **ग भ स—** आश्राविते।

२-२. **तै०—** पशूनां रूपं पुषेय।

३-३. **ग स— 'इत्युपांशु....पत्नीभ्यः'** नास्ति।

४. **इ१—** इन्द्र०।

५. **ग स—** उत्तरपूर्वार्धे।

पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम्— (तै० १।६।४।२२)' इति। केचिद् राकां सिनीवालीं कुहूं चानुमतिं च प्राग्गृहपतेर्यजन्ति। पूर्ववद्द्रव्यत्यागः। 'दब्धिरसि०' इत्युपांशुयाजवत् सर्वेषामनुमन्त्रणम्। यजमानस्यापामुपस्पर्शनम् च।

अध्वर्युरपरेण पत्नीं गत्वाग्रेण होतारमतिक्रम्योत्तरतः प्रत्यङ्मुख आसीनः पूर्ववद्धोतुरंगुलीपर्वणी अनक्ति। पूर्ववत्कृतकार्यस्य होतुर्हस्ते चतुर आज्यस्य बिन्दूनिडामवद्यति। समन्वारभेतेऽध्वर्युश्च पत्नी च। उपहूतायामिडायाम् 'उपहूतः पशुमानसानि' (तै० ब्रा० ३।३।८।४) इति यजमानेनोक्ते स्थाल्याः षडवत्तमग्नीधे ददाति। सोऽपि पूर्ववत् प्राश्य [1]मार्जयते।

अध्वर्युः श्रुचि चतुर्गृहीतं प्रदक्षिणं पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोति 'उलूखले०' इति। विश्वेभ्यो देवभ्य 'इदम्०'। पुनश्चतुर्गृहीत्वान्वाहार्यपचनएवेध्मप्रव्रश्चनान्यभ्याधाय गृहीताज्ये पूर्वनिहितान् फलीकरणानोप्य फलीकरणं होमं जुहोति- 'अग्नेऽदब्धायो०' इति। 'अग्नय इदम्०'। यथेतमावृत्य पश्चाद्गार्हपत्यस्य[2] निहितवेदविषयं यजमानं वाचयति 'वेदोऽसि वित्तिरसि विदेयकर्मासि करुणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनम्' (तै० १।६।४।२।३) इति। होत्रे वेदप्रदानम्। पत्नी योक्त्रं विमुञ्चते 'इमं विष्यामि०' इति। अथास्या अञ्जलौ योक्त्रं निधायोदपात्रमानयति 'समायुषा सम्प्रजया०' इति। पत्नी स्वमुखं विमृष्टे 'यदप्सु ते०' इति। तां पूर्ववदाचामय्य [3]समिधो गार्हपत्य आधापयति मन्त्रैः। 'व्रतमचारिषं तदशकं तन्मे राधि' इति [4]विशेषः। उक्ता देवताः। सा यथाप्रपन्नं निष्क्रामति।

---

१. ग भ स— मार्जयेते।

२. प ग भ स— निहितं वेदं विषयम्।

३. प इ१ ग स — समिधश्च।

४. प ग भ स — शेषः।

अध्वर्युर्गार्हपत्यस्योत्तरेण प्राङेत्य स्थाल्याः स्रुवेणाज्यमादाय ध्रुवामाप्याययति 'आप्यायतां०' इति। ध्रुवायामाप्यायमानायामेतेनैव[1] मन्त्रेण यजमानोऽनुमन्त्रयते। ततो यजमानः स्वभागं प्राश्नाति '**प्रजापते*र्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन**' (तै० १।६।५।२) इति।

अध्वर्युः स्थाल्याः स्रुवेणोपघातमविज्ञातदोषनिर्घातार्थानि प्रायश्चित्तानि जुहोति-आश्रावितमत्याश्रावितं''''। यज्ञायेदम्० इष्टेभ्यः स्वाहा। वषनिष्टेभ्यः स्वाहा।''''सर्वसमृद्धयै स्वाहा '**इष्टेभ्य स्वाहा**' इत्यादीनां '**सर्वसमृद्ध्यै स्वाहा**' इत्यन्तानां नवानां 'प्रजापतय इदम्०'। भूः स्वाहा। अग्नय इदम्०। भुवः। स्वाहा। वायव इदम्०। [2]सुवः स्वाहा। सूर्यायेदम्०। भूर्भुवः सुवः स्वाहा। प्रजापतय इदम्०। इमं मे०, तत्वा०। उभयोर्वरुणायेदम्० त्वं नो०, स त्वम०। उभयोरग्नी-वरुणाभ्यामिदम्०। त्वमग्ने०, अयाश्चाग्ने०। एतयोरग्नय इदम्। यदस्मिन् कर्मण्य०। देवेभ्य इदम्०। यदस्य कर्मणोऽत्य०। अग्नये स्विष्टकृत[3] इदम्०। प्रजापते न त्वदेता०। प्रजापतय इदम्०।

ध्रौवात् स्रुवेणोपहत्य '[4]**ब्रह्मप्रतिष्ठा मनसः**' ( तै० ब्रा० ३।७।११ ) इत्येतेनानुवाकेन प्रतिमन्त्रं [5]प्रायश्चित्तानि जुहोति[6]।

---

१. इ१— मनेनैव।
२. ग स— स्वः।
३. ग — 'स्विष्टकृते' एत्यस्यानन्तरम् स्व 'कतर०'।
४. ग भ ए— *ब्रह्मप्रतिष्ठमनसः*।
५. ए ग भ स— 'प्रायश्चित्तानि' नास्ति।
६. भ— जुहोति' इत्यस्यानन्तरम् 'सप्तदश'।

---

* प्राश्नाति प्रजापतेः – प्रोषित यजमानस्य प्रजापतेरिति यजमानभागं ध्रुवायामवधाय समिष्टयजुषा सह योगः— इ१।

[1]अध्वर्युर्बर्हिषो धातूनां सम्प्रलुप्य ध्रुवायामनक्ति समङ्क्तां बर्हिर्हविषा' इति। अवतं बर्हिराहवनीयेऽनुप्रहरति 'दिव्यं नभो०' इति। दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समष्टियजुर्जुहोति 'देवा गातुविदो०' इति। ध्रुवां निधाय प्रणीताः पात्रमादायान्तर्वेदिनिधायाभिमन्त्रयते **'सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मामेक्षेष्ठा'** तै० १।६।५।३) इति। प्रतिदिशमुत्सिञ्चति **'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदिच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम्'** ( तै० १।६।५।४-८ ) इति। प्रणीता बर्हिषि निनयति **'समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः'** (बौ० श्रौ० ३।२०) इति। प्रणीतामन्त्रणादि यजमानेन सह—इति[1]।

[2]इति श्री बौधायनचार्यप्रणीतसूत्रभाष्ये विद्यारण्यश्रीपादविरचिते
प्रथमप्रश्ने [3]सप्तदशोऽध्यायः।[2]

---

१-१. प ग भ स— 'अध्वर्युर्बर्हिषो····सह इति' नास्ति।

२-२. प ग भ स—'इतिश्रीबौधायनचार्य०···ध्यायः' नास्ति।

३. इ१— अष्टादशो०।

## परिशिष्टम् १

# ससंकेता प्रयुक्तग्रन्थानुक्रमणी

अत्राङ्लाविभाषामु लिखितानां ग्रन्थानामुल्लेखोऽपि देवनागर्यामेव कृतः, तेषामुल्लेखे जातानि स्खलितानि विद्वरेण्यैः परिमार्जनीयानीति ।


१—अ० को० — अमरकोशः, पं० हरगोविन्दशास्त्री, हरिदाससंस्कृतग्रन्थमाला ३०, द्वितीयावृत्तिः, १९५७ ।

२—आप० प० — सव्याख्यम् आपस्तम्बमहर्षिप्रणीतं परिभाषासूत्रम् । 'दर्शपूर्णमासप्रकाशे' प्रकाशितम् ।

३—आप० श्रौ० — आपस्तम्बीयं श्रौतसूत्रम्-श्रीरामाग्निचिद्वृत्तिनासह-धूर्तस्वामिभाष्यभूषितम्, सी० नरसिंहाचार्य, यूनिवर्सिटी आफ मैसूर, १९४४-६० ।

४—आप० श्रौ० धू० — आपस्तम्बश्रौतसूत्रीयं धूर्तस्वामिभाष्यम्, पं० ए० चिन्नस्वामी शास्त्री, ओरियण्टल इंस्टीट्यूट बड़ौदा, १९५५-६३ ।

५—आप० श्रौ० रु० — आपस्तम्बश्रौतसूत्रम्-रुद्रदत्तभाष्यसहितम्, डा० रिचार्ड-गार्बे, एशियाटिक सोसाइटी कलकत्ता, १८८२ ।

६—आ० ब्रा० — आर्षेयब्राह्मणम्-श्रीसायणाचार्यकृतवेदार्थप्रकाशेन समन्वितम्, डा० बे० रामचन्द्रशर्मा, केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-८, तिरुपति, १९६७ ।

७—आ० श्रौ० — आश्वलायनश्रौतसूत्रम्-गार्ग्यनारायणीयवृत्तिसहितम्, एशियाटिक सोसाइटी आफ बंगाल, कलकत्ता, १८७४ ।

८—आ० श्रौ० सि० आश्वलायनश्रौतसूत्रम् सिद्धान्तिभाष्यसहितम्, डा० मंगलदेवशास्त्री, बनारस, १९३८।

९—इ० वे० क० इण्डिया आफ वैदिक कल्पसूत्राज, डा० रामगोपाल, नेशनल पब्लिसिंग हाउस, दिल्ली, १९५९।

१०—ऋ० ऋग्वेदसंहिता। श्रीपादशर्मणा दामोदरसूनुना सातवलेकरकुलजेन सम्पादिता, स्वाध्यायमण्डल, पारडी, द्वितीयं संस्करणम्, १९५७।

११—ऋ० प्रा० ऋग्वेदप्रातिशाख्यम्, डा० मंगलदेवशास्त्री इण्डियनप्रेस लिमिटेड, इलाहाबाद, १९७७।

१२—ऋ० भा० ऋग्वेदसंहिता-श्रीसायणाचार्यविरचितभाष्यसमेता, वैदिकसंशोधनमण्डलेन प्रकाशिता प्रथमो भागः, द्वितीयावृत्तिः १९७२।

१३—ऋ० भू० ऋग्वेदभाष्यभूमिका, डा० वीरेन्द्रकुमारवर्मा, भारतीय-विद्याप्रकाशनम्, वाराणसी, प्रथमं संस्करणम्, १९६९।

१४—ऐ० ब्रा० ऐतरेयब्राह्मणम्, निर्णयसागरप्रेस, बम्बई, १९२५।

१५—क० हे० इ० द कल्चरल हेरिटेज आफ इण्डिया, वाल्यूम० १, राम-कृष्णमिशन, इंस्टीट्यूट आफ कल्चर, कलकत्ता, द्वितीय संस्करणम्, १९५८।

१६—का० काशिका-विद्वद्वरवामनजयादित्यविरचिता, चौखम्बा संस्कृतपुस्तकालय, बनारस—१, तृतीयं संस्करणम् १९५२।

१७—का० गृ० काठकगृह्यसूत्रम् भाष्यत्रयसारयुतम्, डा० विलेम कालण्ड, दयानन्दमहाविद्यालयसंस्कृतग्रन्थमाला, लाहौर, १९२५।

१८—का० प्र० काव्यप्रकाशः

१९—का० मा० कालमाधवः, श्रीचन्द्रकान्ततर्कालङ्कारः, लक्ष्मीवेंकटेश्वर मुद्रणालयः, कल्याण, मुम्बई, वि० सं० १९७३।

२०—का० श्रौ० कात्यायनश्रौतसूत्रम् श्रीविद्याधरशर्मणा सरलाख्यया वृत्त्या समेतम्, अच्युतग्रन्थमाला, काशी, संवत् १९८७।

२१—का० श्रौ० क० कात्यायनश्रौतसूत्रम्-श्रीकर्काचार्यविरचितभाष्यसहितम्, चौखम्बा संस्कृत-सीरीज, बनारस, १९०८।

२२—का० श्रौ० या० कात्यायनश्रौतसूत्रम्-याज्ञिकदेवभाष्यसहितम्, चौखम्बा संस्कृतसीरीज १९०८।

२३—की० ऋ० ब्रा० ऋग्वेद ब्राह्मणाज् द; ऐतरेय एण्ड कौषीतकिब्राह्मणाज् आफ द ऋग्वेद, अनु०-ए०बी० कीथ, हार्वर्ड ओरियण्टल सीरीज २५, मोतीलाल बनारसीदास दिल्ली, प्रथमं भारतीयं पुनर्मुद्रितं संस्करणम्, १९७१।

२४—की० तै० सं० I दि वेद आफ ब्लैक यजुस् स्कूल इण्टाइटिल्ड तैत्तिरीय-संहिता, पार्ट I, अनु० ए० बा० कीथ, हार्वर्ड ओरियण्टल सीरीज १८, मोतीलाल बनारसीदास, दिल्ली, द्वितीयावृत्तिः १९६७।

२५—की० रि० फि० दि रिलीजन एण्ड फिलोसफी आफ दि वेद एण्ड उपनिषद, पार्ट I, ए० बी० कीथ, मोतीलाल बनारसीदास, दिल्ली, प्रथमं भारतीयं मुद्रणम् १९७०।

२६—कै० कै० कैटलागस् कैटलोगोरुम्, आउफरेल्ट थ्योडोर, फ्रान्स स्टाइनर फर्लाग, १९६२।

२७—कै० स० वे० II ए कैटलाग आफ संस्कृत मैन्युस्क्रिप्ट्स वाल्यूम I, वैदिक मैन्युस्क्रिप्ट्स-पार्ट II, एशियाटिक सोसाइटी, १९७१।

२८—कौ० सू० द कौशिक सूत्र आफ अथर्ववेद, रामेण बुष्पक्षेत्रेण श्रोत्रा संशोधितम्, मोतीलाल बनारसीदास, पुनर्मुद्रणम् १९७२।

२९—गृ० सू० II दि गृह्यसूत्राज्, पार्ट II, एफ० मैक्समूलर, मोतीलाल बनारसीदास, १९६४।

३०—गै० वै० सा० वैदिक साहित्य और संस्कृति, वाचस्पति गैरोला, संवर्तिका प्रकाशन, इलाहाबाद, प्रथमसंस्करण १९६९।

३१—गै० सं० इ० संस्कृत साहित्य का इतिहास, वाचस्पति गैरोला, चौखम्बा विद्याभवन वाराणसी, प्रथम संस्करण १९६०।

३२—गो० ब्रा० गोपथ ब्राह्मणम्, राजेन्द्रलालमित्र, इण्डोलाजिकल बुक हाउस, १९७२।

३३—च० वै० सा० वैदिक विज्ञान और भारतीय संस्कृति, म० म० गिरिधरशर्मा चतुर्वेदी, बिहारराष्ट्रभाषापरिषद्, पटना, १९६०।

३४—जै० गृ० जैमिनिगृह्यसूत्रम्, सम्पा०-डा० कालण्ड, पंजाब संस्कृत सीरीज II, लाहौर, १९२२।

३५—जै० श्रौ० जैमिनीय श्रौतसूत्रम्, डी० खास्ट्रा, लिडेन, १९०६।

३६—जै० श्रौ० वृ० जैमिनीयश्रौतसूत्रवृत्तिः—श्रीभवत्रातविरचिता, प्रेमनिधिशास्त्री, इण्टरनेशनल एकेडेमी आफ इण्डियन कल्चर, नई दिल्ली, अप्रेल, १९०६।

३७—डे० सु० दि देहली सुलतानेट, भारतीयविद्याभवनाज् हिस्ट्री एण्ड कल्चर आफ दि इण्डियन पीपुल, वाल्युम VII, बम्बई, प्रथमं संस्करणम्, मई १९६०।

३८—ता० ब्रा० ताण्ड्यमहाब्राह्मणम्-सायणाचार्यविरचितभाष्यसहितम्, श्रीचिन्नस्वामिशास्त्रिणा सम्पादितम्, काशीसंस्कृत सीरीज ग्रन्थमाला १०५, वाराणसी, १९३५-३६।

३९—तै० तैत्तिरीयसंहिता—श्रीपादशर्मणा दामोदरसूनुना सातवलेकरकुलजेन सम्पादिता, स्वाध्यायमण्डलम्, पारडी, द्वितीयं संस्करणम्, १९५७।

४०—तै० आ० तैत्तिरीयारण्यकम्—श्रीमत्सायणाचार्यविरचितभाष्यसमेतम्, आनन्दाश्रमसंस्कृतग्रन्थावलि ३६, तृतीयं संस्करणम् १९६७।

४१—तै० प्रा० (१) तैत्तिरीयप्रातिशाख्यम्–महीषेयपदक्रमसदनाख्यभाष्योपेतम्, सम्पा०-पं० वेंकटरामशर्मा, मद्रपुरीय-विश्वविद्यालयसंस्कृतग्रन्थावलिः, १९०३।
(२) तैत्तिरीय प्रातिशाख्यम् त्रिभाष्यरत्ननामटीकासहितम्, सम्पा०-राजेन्द्रलालमित्र, एशियाटिक सोसाइटी आफ बंगाल, कलिकाता, १८७२।

४२—तै० ब्रा० तैत्तिरीयब्राह्मणम्- श्रीमत्सायणाचार्यविरचितभाष्यसमेतम्, सम्पा०-नारायणशास्त्री, आनन्दाश्रमग्रन्थावलिः ३७ १९३८।

४३—तै० सं० भा० तैत्तिरीयसंहिता — भट्टभास्करसायणाचार्यविरचितभाष्याभ्यां समेता, प्रथमखण्डस्य प्रथमो भागः, वैदिकसंशोधनमण्डलम्, पुणे, १९७०।

४४—थि० स० ब्रा० सैक्रिफाइस इन द ब्राह्मणटेक्स्ट्स, गणेश उमाकान्त थिटे, पूना विश्वविद्यालय, १९७५।

४५—द० प्र० दर्शपूर्णमासप्रकाशः—वामनशास्त्रिभिः कृतः, तस्य प्रथमोभागः, आनन्दाश्रम-संस्कृतग्रन्थावलिः ९३, १९२४।

४६—दे० ब्रा० देवताध्यायब्राह्मणम्—श्रीसायणाचार्यकृतवेदार्थप्रकाशेन समन्वितम्, डा० बे० रामचन्द्रशर्मणा सम्पादितम्, केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-२, तिरुपतिः, १९६५।

४७—दे० सं० वं० देवताध्यायसंहितोपनिषद्वंशब्राह्मणानि।

४८—द्रा० श्रौ० द्राह्यायणश्रौतसूत्रम्, जे० एन० रीटर, लन्दन, १९०४।

४९—न्यू० के० के० न्यू कैटलागस् कैटलोगोरुम्, डा० वी० राघवन्, मद्रास-विश्वविद्यालयः। भाग १-५, १९६६-१९६७।

५०—पा० अष्टा० पाणिनिमुनिप्रणीतः अष्टाध्यायीसूत्रपाठः श्रीरामलाल-कपूर ट्रस्ट ग्रन्थमाला २४, सप्तमं संस्करणम्, १९७१।

५१—पा० व्या० पाणिनीयं व्याकरणम्, पं० हरिशंकरपाण्डयेन संकलितम्, यूनाइटेड प्रेस, पटना, वि० सं० १९५। ग्रन्थोऽयमनुद्धृतोऽपि प्रायः शब्दावबोधे प्रयुक्तः।

५२—पा० शि० पाणिनिशिक्षा। पाणिनीये व्याकरणे प्रकाशितम्।

५३—पी० के० गो० प्रोफेसर पी० के० गोडे कोमेमोरेशन वाल्यूम, सम्पा०-डा० एच० एल० हरियप्पा तथा डा० एम० एम० पटकर, पूना ओरियण्टल सीरीज ९३, १९६०।

५४—वै० सं० वैदिकसाहित्य और संस्कृति, डा० बलदेव उपाध्याय, शारदामन्दिर, काशी, तृतीयसंस्करण, १९६७।

५५—बो० गृ० बोधायनगृह्यसूत्रम्, आर० यस० शास्त्री, ओरियण्टल लाइब्रेरी पब्लिकेशन्स सीरीज ३२५५, मैसूर विश्व-विद्यालय, १९२०।

५६—बो० गृ० प० बोधायनीयगृह्यपरिभाषासूत्रम्, बोधायनगृह्यसूत्रान्तर्गतं प्रकाशितम्।

५७—बो० गृ० शे० बोधायनीयगृह्यशेषसूत्रम्, तत्रैव प्रकाशितम् ।

५८—बो० पि० बोधायनीयपितृमेधसूत्रम्, तत्रैव प्रकाशितम् ।

५९—बो० पि० शे० बोधायनीयपितृमेधसूत्रम्, तत्रैव प्रकाशितम् ।

६०—बो० ब्र० बोधायनीयब्रह्मकर्मसमुच्चयः, श्रीमेधादक्षिणामूर्ति-संस्कृत-विद्यापीठः। गोकर्ण (उ० कानडा) मैसूरराज्यम् ।

६१—बौ० पू० बोधायनपूर्वप्रयोगादर्शः, सम्पा० सुब्रह्मण्यम् शास्त्री, साउथ इण्डिया अर्चकर एसोसियेशन मद्रास, प्रथमं-संस्करणम् ।

६२—बौ० ध० बोधायनधर्मसूत्रम्—श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । सम्पा०—चिन्नस्वामी शास्त्री, काशी संस्कृत-सीरीज ग्रन्थमाला १०४, बनारस, १९६९ ।

६३—बौ० श्रौ० बोधायनश्रौतसूत्रम्, सम्पा०—डा० डब्ल्यू कालण्ड, बिब्लिओथिक इण्डिका सीरीज, कलकत्ता, १९०४-१९२३ ।

६४—ब्र० पु० ब्रह्मवैवर्त्तपुराणम् (श्रीकृष्णजन्मखण्डात्मकम्), गुरुमण्डल, ग्रन्थमालायश्चतुर्दशं पुष्पम्, कलकत्ता, प्रथमं संस्करणम्-१९५५ ।

६५—भ० ओ० री० ऐनल्स आफ भाण्डारकर ओरिएण्टल रिसर्च इंस्टीट्यूट, वाल्यूम XXIX, १९४८ ।

६६—भ० वै० इ० वैदिक वाङ्मय का इतिहास—ब्राह्मण तथा आरण्यक ग्रन्थ, स्वर्गीय पं० भगवद्दत्त, प्रणवप्रकाशन, नई दिल्ली, प्रथमं संस्करण, फरवरी, १९७४ ।

६७—भा० प० भारद्वाजपरिशेषसूत्रम्—भारद्वाजश्रौतसूत्रे प्रकाशितम् ।

६८—भा० श्रौ० भारद्वाजश्रौतसूत्रम्—पैतृमेधिकपरिशेषसूत्राभ्यां सहितम्, काशीकरोपाह्वेन गणेशसूनुना चिन्तामणिशर्मणा सम्पादितम् वैदिकसंशोधनमण्डलम्, पुणे, प्रथमं संस्करणम् १९५८

६९—भा० ज्यो० भारतीय ज्योतिष (स्वर्गीयबालकृष्णदीक्षितस्य 'मराठी' इति भाषया लिखितस्य पुस्तकस्यानुवादः), अनु०—शिवनाथ भारखण्डी, हिन्दी समिति ग्रन्थमाला ९, प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश, प्रथमं संस्करणम १९५७।

७०—भा० ज्यो० इ० भारतीय ज्योतिष का इतिहास, डा० गोरखप्रसाद, हिन्दीपरामर्शसमिति ग्रन्थमाला—१, प्रकाशन ब्यूरो, उत्तरप्रदेशसरकार, लखनऊ, प्रथम सस्करण १९५६।

७१—मा० ध० मानवधर्मशास्त्रम्, सम्पा०—डा० जे० जालीट्रबनर्स ओरिएण्टल सीरीज, लन्दन, १८८७।

७२—मा धा० माधवीया धातुवृत्तिः, सम्पा० स्वामीद्वारिकादासशास्त्री, प्राच्यभारतीयग्रन्थमालायाः प्रथमं पुष्पम, वाराणसी, १९६४।

७३—मा० पा० माधवपाराशरः—पाराशरस्मृतिव्याख्या, सम्पा०—चन्द्रकान्ततर्कालङ्कारः, श्री लक्ष्मीवेंकटेश्वरमुद्रणालयः, कल्याण—मुंबई, संवत् १९७३।

७४—मा० श्रौ० मानवश्रौतसूत्रम्, शतपिटकस्य वेदपिटके, डा० य० एम० फान् खेल्डरदेव्या सम्पादितम्, नई देहली, १९६१।

७५—मैक्० हि० लि० ए हिस्ट्री आफ संस्कृत लिटरेचर, ए० ए० मॅक्डानलः, मुंशीराममनोहरलाल, देलही, द्वितीयं संस्करणम् १९६१।

७६—मै० ए० लि० — ए हिस्ट्री आफ एन्शेण्ट संस्कृत लिटरेचर, मैक्समूलर, १८५९ ।

७७—मै० सं० — मैत्रायणीसंहिता, जनविक्रमिणा श्रोत्रा लीवोध्य-देशोद्भवेन शोधिता पुश्यनाम्नि राष्ट्रे वेर्लीणाख्यां राजधान्यां मुद्रिता संवत्सरे १८८५ ।

७८—य० प्र० — यज्ञतत्त्वप्रकाशः, श्रीचिन्नस्वामी शास्त्री, मद्रास, १९५३ ।

७९—य० मी० — यज्ञमीमांसा ( प्रथमभाग ), पं० वेणीरामशर्मा गौड़ः, वैदिकपुस्तकालय, वाराणसी, तृतीयं परिवर्द्धितं संस्करणम् १९७० ।

८०—या० नि० — यास्कप्रणीतं निरुक्तम्, सम्पा०-प्रो० उमाशंकरशर्मा 'ऋषिः', चौखम्बा विद्याभवन, वाराणसी, १९६६ ।

८१—या० स्मृ० — याज्ञवल्क्यस्मृतिः—'मिताक्षरा'—'प्रकाश' संस्कृत-हिन्दीव्याख्यासहिता, व्याख्याकारः—डा० उमेशचन्द्र-पाण्डेयः, काशीसंस्कृतग्रन्थमाला १७८, वाराणसी, प्रथमं संस्करणम् १९६७ ।

८२—ला० द्रा० श्रौ० — द श्रौतसूत्राज् आफ लाट्यायन एण्ड द्राह्यायण एण्ड देअर कामन्टरीज्, अनु—अस्को परपोला, हेलसिन्की, १९६८-६९ ।

८३—ला० श्रौ० — लाट्यायनश्रौतसूत्रम्—अग्निस्वामिविरचितभाष्यसमेतम्, सम्पा०—आनन्दचन्द्रवेदान्तवागीश, कलिकाता, १९७२ ।

८४—लौ० गृ० — लौगाक्षिगृह्यसूत्राणि देवपालभाष्योपेतानि, पं० मधुसूदनकौलशास्त्रिणो, काश्मीरसंस्कृतग्रन्थावलिः १९२८ ।

८५—व० ब्रा० वशब्राह्मणम्, श्रीसायणाचार्यविरचितेन वेदार्थप्रकाशेन च समन्वितम्, डा० बे० रामचन्द्रशर्मणा, केन्द्रीय संस्कृतविद्यापीठग्रन्थमाला ४, तिरुपतिः, १९६५।

८६—वा० वाचस्पत्यम्, तारानाथवाचस्पति, भाग १-६ चौखम्बा संस्कृतसीरीज ९४, वाराणसी-६, १९६२।

८७—वा० प० वाक्यपदीयम्, श्रीभर्तृहरिमहावैयाकरणविरचितम्, बनारस संस्कृत सीरीज, १८८७।

८८—वा० श्रौ० मैत्रायणीयं वाराहश्रौतसूत्रम्, सम्पा०-डा० डब्ल्यू कालण्ड तथा डा० रघुवीर, मेहरचन्द लक्ष्मणदास, देहली-६।

८९—वा० सं० वाजसनेयिमाध्यान्दिनशुक्लयजुर्वेदसंहिता, मोतीलाल बनारसीदास, प्रथमसंस्करणम्, १९७१।

९०—वि० इ० लि० हिस्ट्री आफ इण्डियन लिटरेचर, एम० विन्टरनित्स, ओरिएन्टल बुक्स कारपोरेशन, नई दिल्ली, द्वितीयं संस्करणम् १९७२।

९१—वे० ए० द वैदिक एज, भारतीय-इतिहाससमितिः वाल्यूम १, लन्दन, १९५१।

९२—वे० नि० वेदकालनिर्णय, श्री दीनानाथ शास्त्री चुलेट, हिन्दी—साहित्यसमित्या प्रकाशितम्।

९३—वे० भू० वेदभाष्यभूमिकासंग्रहः, बलदेव उपाध्यायः, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९५८।

९४—वै० बि० वैदिक बिलिओग्राफी, द्वितीयो भागः, डा० आर० एन० दण्डेकर, यूनिवर्सिटी आफ पूना, १९६१। तृतीयो भागः १९७३।

| | |
|---|---|
| ९५—वै० को० | वैदिककोश, सूर्यकान्त, बनारस हिन्दू यूनिवर्सिटी, १९६३। |
| ९६—वैता० श्रौ० | वैतान श्रौतसूत्रम्, सोमादित्यकृताक्षेपानुविधिसंज्ञक—भाष्योपेतम्, विश्वबन्धुना सम्पादितम्, वुल्नरभारत—भारती ग्रन्थमाला-१३, विश्वेश्वरानन्दसंस्थानम्, होशिआरपुरम्, प्रथमं संस्करणम्, १९६७। |
| ९७—वै० प० | वैदिकपदानुक्रमकोषः, विश्वबन्धुना, चतुःखण्डात्मकः, शान्तकुटी वैदिकग्रन्थमाला-८, विश्वेश्वरानन्दवैदिक—शोधसंस्थानम्, होशियारपुर, १९५८-६१। |
| ९८—वैखानसश्रौतसूत्रम् | डा० कालण्ड, एशियाटिक सोसाइटी आफ बंगाल, कलकत्ता, १९४१। |
| ९९—व्या० म० | व्याकरणमहाभाष्यम्, चतुर्थो भागः सम्पा०—वेदव्रत-स्नातक सिद्धान्तशिरोमणिः, हरयाणा साहित्य संस्थान, गुरुकुल झज्जर (रोहतक), प्रथमं संस्करणम्। |
| १००—श० ब्रा० | शतपथब्राह्मणम्— सायणाचार्यकृतवेदार्थप्रकाशाख्य-भाष्यसहितम्, 'श्रीवेंकटेश्वर' स्टीममुद्रणालयः, बम्बई, १९५६। |
| १०१—शा० भ० | बृहतीप्रभाकरमिश्र प्रणीता (शाबरभाष्यव्याख्या), सम्पा०-शे० कृ० रामनाथशास्त्री, मद्रपुरीयविश्वविद्यालयग्रन्थावलिः ३, मद्रपुरीयविश्वविद्यालयः, १९३४। |
| १०२—शा० श्रौ० व० | शाङ्खायन श्रौतसूत्रम्, वरदत्तसुतआनर्तीयभाष्योपेतम्, सम्पा०—अल्फ्रेड हिलेब्रांड्ट, कलकत्ता, १८८८-९७। |
| १०३—श्रौ० को० | श्रौतकोशः, प्रथमो ग्रन्थः, संस्कृतविभागः, वैदिक—संशोधनमण्डलम्, पुणे, प्रथम संस्करणम् १९५८। |

१०४—श्रौ० नि०　श्रौतपदार्थनिर्वचनम्. विश्वनाथशास्त्रिणा सम्पादितम्, मेडिकलहाल-प्रेस, बनारस, द्वितीयावृत्तिः, १९१९।

१०५—सं० ब्रा०　संहितोपनिषद्ब्राह्मणम्, भाष्यद्वयसमन्वितम्, डा० बे० रामचन्द्रशर्मणा, केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-८, तिरुपति, १९६७।

१०६—स० प०　सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः, भिक्षुगौरीशंकरः, ज्योतिषप्रकाश मुद्रणालयः, सप्तमं संस्करणम्, वि० स० २०१६।

१०७—स० श्रौ०　सत्याषाढश्रौतसूत्रम्, १-१० भागाः, आनन्दाश्रम—संस्कृतग्रन्थावलिः, पुण्यपत्तनम्, १९०७-१९३२।

१०८—सा० मा०　आचार्य सायण और माधव—डा० बलदेव उपाध्याय, हिन्दी साहित्य सम्मेलन, प्रयागः, प्रथमसंस्करणम् २००३ वि० सं०।

१०९—सा० वि० ब्रा०　सामविधानब्राह्मणम्, श्रीसायणाचार्यकृतवेदार्थप्रकाशेन श्रीभरतस्वामिकृतपदार्थमात्रविवृत्या च समन्वितम्, डा० बे० रामचन्द्रशर्मणा सम्पादितम्, केन्द्रीयसंस्कृत-विद्यापीठग्रन्थमाला १, तिरुपति, १९६४।

११०—सा० सु०　सारस्वतीसुषमा, त्रयोदशवर्षे १-४ अंकाः, वि० स० २०१७, वाराणसेयसंस्कृत-विश्वविद्यालयपत्रिका (त्रैमासिकी)।

१११—सु० सु०　सायणग्रथितः सुभाषितसुधानिधिः, सम्पा०-डा० के० कृष्णमूर्ति, कर्णाटक विश्वविद्यालयः, धारवार, १९६८।

११२—हि० ध०　हिस्ट्री आफ धर्मशास्त्र लिटरेचर, पाण्डुरंग वामन

काणे, गवर्नमेन्ट ओरिएण्टल सीरीज क्लास बी ६, पूना, १९४१ ।

११३—हि० सं० लि० ए हिस्ट्री आफ संस्कृत लिटरेचर, डा० वी० वरदाचार्य, रामनारायण बेनीप्रसाद, इलाहाबाद, द्वितीयं संस्करणम्, १९६० ।

११४—का० प्र० काव्यप्रकाशः, मम्मटाचार्यविरचितः झलकीकरोपनाम्ना रामभट्टात्मजेन भट्टवामनाचार्येण विरचितया बालबोधिन्यख्यटीकया समन्वितः, भाण्डारप्राच्यविद्यासंशोधनमन्दिरम्, पुण्यपत्तनम्, षष्ठीयमङ्कनावृत्तिः, १९५० ।

## अन्ये संकेताः

| | | |
|---|---|---|
| अनु० | = | अनुवादकः |
| भा | = | भाष्यम् |
| वि० सं० | = | विक्रमीयः संवत्सरः |
| सू | = | सूत्रम् |
| सम्पा० | = | सम्पादकः |
| पृ० | = | पृष्ठांकः, पृष्ठम् |
| रु०, रुद्र० | = | रुद्रदत्तभाष्यम् |

# मन्त्रानुक्रमणिका


अंक्तं रिहाणा २८७, २९४
अगानग्नीत २९१, २९५
अग्नये काव्यवाहनाय ९६
स्विष्टकृते स्वधा नमः
अग्नये त्वा ५४, १६६, १९०
अग्नये समिध्यमानायानु- २३१, २४६,
ब्रूहि अग्नये स्विष्टकृते ३०७
अग्नाविष्णू मा वामव २४०, २४८
क्रमिषाम्
अग्निं गृह्णामि सुरथम् ७२
अग्निं होतारमिह १५०
अग्निरिदं २८९, २९५
अग्निरिव २९४
अग्निर्देवो होता देवान् २४२, २४८
अग्निर्मा दुरिष्टात् पातु २६६
अग्निस्ते तेजो मा विनैत् २०५
अग्नीषोमयोरहं २५५, २६३, २६४
देवयज्यया
अग्नीषोमाभ्यां त्वा ५४
अग्ने गृहपते १९८, २०८, ३०२, ३१२
अग्ने त्वास्येन २८०
अग्नेऽदब्धायो शीततनो ३०५, ३१२
अग्ने महाँअसि २४७
अग्नेरहं देवयज्यया २६४, २९४
अग्नेरहमुज्जितिमनूज्जेषम् २८९, २९५
अग्नेर्जिह्वासि २०३, २०८
अग्नेर्वामपन्नगृहस्य २९३, २९५
अग्ने वाजजिद्० २३८, २४८, २९३
सरिष्यन्तम्
अग्ने वाजजित्० ससृवांसम्
अग्ने व्रतपते व्रतम् ७३, ७८, १९८
अग्ने व्रतपते व्रतमचारिषम् ३०६
अग्नेस्तनूरसि १४१
अग्नेः स्विष्टकृतोऽहम् २६५, २९४, २९५
अग्ने हव्यं रक्षस्व १३४, १७४, १९१,
१९४
अज्यायो यवमात्रादा २६०, २६५
अत्र पितरो यथाभागम् ९६
अथ सपत्नान् २८५, २८६, २९३
अथा सपत्नानिन्द्राग्नी २८६
अदस्तमसि ११०
अदित्यास्त्वगसि १५३
अदित्यास्त्वोपस्थे १३३
अदित्यै रास्नासि ८५, ९४
अद्भ्यः परिप्रजाता स्थ १९९, १९४
अद्रिरसिवानस्पत्यः १४१, १५७
अधिषवणमसि १४१, १५७
अनुनोऽद्यानुमनि ३०३
अन्तरिक्षाय त्वा २११, २१८
अन्तरितं रक्षोऽन्तरता-
अरातयः १७३, १९१
अपहता असुरा रक्षांसि ९६
अपहतोऽररुः १८०, १८१, १९४, १९६
पृथिव्यै
अपाग्नेऽग्निमामादम् १६०, १६५
आपोदेवीरग्रे १३६, २१८
अभिभूरसि २१९
अभ्यंजतां पितरः ९७

अमावास्या सुभगा २५८, २६५
अयं वेदः पृथिवीम् १७६, १६१
अरघ्नस्ते १७८, १८२, १६२
अर्चिस्त्वा २०४, २०६
अर्वाञ्चमिन्द्रम् ७७
अवधूतं रक्षोऽवधूता अरातयः १३६, १५३, १५७,
अहं भूपतिरहम् १४८
अहे दैधिषव्योदतस्तिष्ठ १४८
आकूत्यै त्वा कामाय त्वा ६६
अच्छेत्ताते ८२, ६४
आजुहोता दुवस्यत २३५, २४७
आज्यमसि २०८
आञ्जतां पितरः ६७
आदित्य व्रतपते १६८, ३०६
आदित्यास्त्वा १४०, १८२
आदित्येभ्यस्त्वा २८६, २६४
आदेवयजं वह १६०, १६६
आपो देवीरग्रेपुवः १५०, २१०
आपो हिष्ठा मयोभुवः ६६, ६७
आप्यायतां घृतयोनिः २२३, २२६
आप्यायतां ध्रुवा ३०७, ३१२
आप्यायन्तामापः २८८, २६५
आयुष्पा अग्ने २६२, २६५
आर्द्रः प्रथस्नुः २२४, २२६
आशासाना सौमनसम् १६६, ३०८
आशास्तेऽयम् २६५
आश्रावितमत्याश्रावितम् ३०७, ३१३
आसनं शयनं चेमे ६६
इडा देवहूः ६६, ७७
इत इन्द्रोऽकृणोत् २४०, २४८
इदं देवानाम् १३२, १४२
इदं ब्रह्मणः २८०
इदं द्यावापृथिवी २८८
इदमहं सेनायाः २२२, २२६
इदमुनः १५०
इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे ८७, ६४
इन्द्रस्य बाहुरसि १७६, १६२, २१४, २१६
इन्द्रस्य वैमृधस्याहम् २६५, २६५
इन्द्रस्याहं देवयज्यया २६५
इन्द्राग्निभ्याम् १२६, १५०, २५५
इन्द्राग्नियोरहम् २६४, २६५
इन्द्राण्ये संनहनम् ८७
इन्द्राय वैमृधाय १२८, १५०, १५७, २२५
इन्धानास्त्वा २१६
इमं विष्यामि ३०५, ३१३
इमं समुद्रम् २६०, २६५
इमं मे वरुण ३०८, ३१३
इमां नराः कृणुत १८३, १६२
इमौ प्राणापानौ १२०, १४६
इरा भूतिः पृथिव्यै २२६, २३०
इषमा वदोर्जमा १४२, १४३, १५१
इषिता देव्या होतारः २८८
इषे त्वा ५१, ७४, ७८, ११३
इष्टेभ्यः स्वाहा ३०८, ३१३
इह बर्हिरासदे ८०, ६३
उग्रोऽस्युग्रोऽहम् २१६
उच्छुष्मो अग्ने २४७
उत्तिष्ठत पितरः प्रेत ६७
उद्ग्रामञ्च २८६, २६४
उदीरतामवर उत्परासः ६६
उदीराणा इह ६६
उन्निवत उदुद्वतश्च १४८
उपभृदसि २१७, २२०
उपमृदेहि देवस्त्वा २३८, २४७
उपहूतः पशुमानसानि २७६, २८७
उपहूतोऽयं यजमानः २७१, २७६

उरु प्रथस्वोरुते १७०
उरु वाताय १२४, १२६, १४२, १५५
उर्वन्तरिक्षमन्विहि ८८, ९४, १३३, १५०
उलूखले मुसले यच्च ३०४, ३०४
ऊर्जे त्वा ७४
ऋतमसि १९३
ऋतश्रीरसि १८६, १९३
ऋतसदनमसि १८६, १९३
ऋषभं वाजिनम् २५८
ऋषभोऽसि शाक्करः २२९, २३०
एकताय स्वाहा १७५, १९१
एतत्ते तत ये च ९६
एता असदन् २१७, २२०
एता आचरन्ति १०२, ११२
एतानि वः पितरो वासांसि ९७
एमा अग्मन्नाशिषो दोहकामाः २९५
कर्मणे वां देवेभ्यः ११५, १४७
कस्त्वा युनक्ति स त्वा युनक्तु १५१
कामधुक्षः प्र १०४, १०५
कामाय त्वा २०९
कुहूमहम् ३०३
कृष्णोऽस्याखरेष्ठः २१०, २१८
किमुत्पतसि २२४
गन्धर्वोऽसि विश्वावसुः २१४
गोष्ठं मा निर्मृक्षम् १९४, २०८
ग्रीष्ममृतूनाम् २६२
घर्मोऽसि १९१, १९०
घृतवतीमध्वर्यो स्रुचमास्यस्व २४९, २६२
चक्षुःश्रोत्रं मा १९५
चरोस्त्वा २०९
चितः स्थ १६१, १६२, १६६
चित्तिः स्रुक् १२५
जनयत्यै त्वा १९९
जुष्टिरसि जुषस्व २८०
जुहूरसि घृताची २१६, २२०
जुह्वे ह्यग्निस्त्वा २३८, २४७
ज्योतिस्त्वा २०४
तत्र ऋध्यताम् ६९
तत्वा यामि ३०८, ३१३
तन्म ऋध्यताम् ६९
तस्मिन्त्सीद २२२
तेजोऽनुप्रेहि २०२
तेजोऽसि २०२
त्रिवृत्पलाशे दर्भ इयान् १००
त्रिष्फलीक्रियमाणानाम् १४६, १५३
त्वचं गृह्णीष्व १७३, १९१
त्वं तुरीया ५१
त्वं देवानामसि १२३
त्वं नो अग्ने ३०८, ३१३
त्वमग्ने द्युमिः ५३
त्वष्टुरहम् ३१२
दधिक्राव्णो अकारिषम् ६७
दब्धिरस्यदब्धः २६४
दिवः पाहि प्रसित्यै ३०५
दिवः शिल्पमवततम् १९६
दिवः स्कम्भनिरसि १५४
दिवे त्वा २११, २१८
दिव्यं नभो गच्छतु ३०९, ३१३
दीर्घामनु १५५, १५७
दृहन्तां दुर्याद्यावापृथिव्योः ११३
देवंगममसि ८८
देवबर्हिरूर्णम्रदसम् २१४, २२९
देवबर्हिर्मा ८२, २१९
देवबर्हिश्शतवल्शं विरोह ८३, ९०, २१९
देवसदितः प्रणय १४९
देवसवितरेतत्ते प्राह २९३
देवस्त्वा सविता श्रपयतु १७४

देवस्य त्वा सवितुः ७६, १२८, १३८, १७८, १८३, १५४, १६७, १७८, १८३, १९०, १९१, १९२, २७४, २७७
देवा गातुविदो गातुंयज्ञाय ६६, ७०, २६८
देवा गातुविदो गातुं वित्वा २६८, ३०८, ३१३
देवानां पत्नीरग्निः ३१२
देवानां परिषूतमसि ८१, ११३
देवीः ७७
देवो वः सविता प्रार्पयतु ७५, ७७, ७८, १४८
देवो वा सवितोत्पुनात्वच्छिद्रेण २०४, २०८
देवो वः सविता हिरण्यपाणिः १३६, १४५, १५५, १५७
देव्या अध्वर्यव उपहूताः २७१, २७६
द्यौरसि पृथिव्यसि १०१, ११२, ११३
धरुणमसि १६१, १६५
धर्त्रमसि १६१, १६५
धर्मोसि १६५
धा असि स्वधा असि १८६, १९२
धाता ७७
धान्यमसि १५४, १५७
धिषणासि पर्वत्या १६०, १५७
धिषणासि पार्वतेयी १५४, १५७
धूरसिधूर्व १२३, १२६, १३४, १४९
धृष्टिरसि ब्रह्म यच्छ १५६, १६५
ध्रुवमसि पृथिवीं दृंह १६०, १६५, १६६
ध्रुवा अस्मिन् गोपती ७८, ११३
ध्रुवासि २१७, २१९, २२०, २६५
ध्रुवोऽसि २१९
नमो वः पितरो रसाय ९७
नराशंस्याहम् २६४
निर्दग्धं रक्षो निर्दग्धा १६१, १६५
निष्क्रव्यादं सेध १६०, १६५
पंचानां त्वा २०८, २०९
पयस्वतीरोषधयः ७३, ७८, १६७
परापूतं रक्षः १४४, १५२
पवमानः सुवर्जनः
पवित्रे स्थो वैष्णवी १२०, १४९
पातं मा द्यावापृथिवी १४८
पाहि माग्ने २४१, २४८
पितृभ्यस्त्वा १८३
पितृभ्यो वो जुष्टं प्रोक्षामि ९५
पुनर्न पितरो ९८
पुरस्तात् प्रतीचीम् २१४
पूषाते ग्रन्थिं ग्रथ्नातु ८७, ९३, ११३
पृथिवि देवयजन्योषध्यास्ते १८०, १८१,
पृथिव्यास्त्वा नाभौ २८१
पृथिव्याः संपृचः ८४, ९३
पृथिव्यै त्वा २११, २१८
पृथिव्यै वर्मासि १७९, १९२
प्रजां योनिं मा १९५, २०८, २८७
प्रजापतये स्वाहा २३६, २४२
प्रजापते त्वदेतानि ९८, ३०८, ३१३
प्रजापतेर्विभान्नाम ३१२
प्रजायोनिं म १९५, २०८, २८०
प्रति त्वा १४४, १५८, २८७
प्रत्युष्टं रक्षः ८०, १२३, १३४, १४९, १९४, २०७
प्रवोवाजा अभिद्यवः २३३, २४६
प्राणायत्वा १५५, १५७
प्रेयमगाद्धिषणा ८०, ९४, ११३
प्रोक्षिताःस्थ १३७, १५०, १५७, २१०, २१७

बधान देव सवितः १८०, १६२
बर्हिरसि २११, २१८
बर्हिषोऽहं देवयज्यया ५४, २६४
बहुदुग्धीन्द्राय १०६, ११२
बृहद्भाः २४०, २४८
बृहस्पते परिगृहाण १६३
बृहस्पतेर्मूर्ध्ना ८८, ११३
ब्रध्न पिन्वस्व २८०
ब्रह्मणस्त्वा २१६
ब्रह्म प्रतिष्ठा मनसः ३१३
ब्राह्मणस्योदरेण २८०
भरतमुद्धरेम २५३, २६१
भुवनमसि वि २३८, २४७
भूतानामधिपतये २६३
भूरस्माकम् २०६
भूर्भुवः सुवः ५४, ६६, २२७, २३०
भूर्भुवः सुवः क इदम् १४८
भृगूणामङ्गिरसाम् १६२, १६१
मखस्य शिरोऽसि १७०, १६१, २४१
मनुना दृष्टां घृतपदीम् २६७, २७६
मनो ज्योतिर्जुषताम् २८०
मनोऽन्वा हुवामहे ६७
मनोऽसि प्राजापत्यम् २४७
मम देवाः ७७
ममाग्ने वर्चो विहवेष्वस्तु ७०, ५७०
मयि देवा द्रविणमा ७७
मयि प्राणाः प्राणाः २८०
महीनां पयोऽसि १७१, १६१, २०८
मह्यम् ७७
मातरिश्वनो घर्मोऽसि १०१, ११२, १५२
मामेर्मासं विवथा २५३
मार्जयन्तां पितरः ६६
मित्रस्य त्वा चक्षुषा प्रेक्षे १२४, १२६, १३४
मित्रावरुणौ त्वा २१५, २१६
यच्छन्तां पंच १२५, १२६, १०
यजमानस्य ७६, ११३
यजमाने प्राणापानौ २१३, २१६
यज्ञस्य घोषदसि ७६, ६३
यज्ञस्य पाथ उप २६२
यज्ञस्य संततिरसि १०६, ११२, ११६
यज्ञो दिवं रोहतु २७६
यत्कृष्णोरूपं कृत्वा ८६
यदन्तरिक्षं पृथिवी ६८
यदप्सु ते सरस्वति ३०६, ३१२
यदवदानानि ते २५३
यदस्मिन् कर्मणि ३०८
यदस्य कर्मणः ३०८, ३१३
यन्तु पितरो यथालोकम् ६७
यन्मे अग्ने २३०
यमायाङ्गिरस्वते पितृमते ६५
यं परिधिम् २६३, २६५
यस्त आत्मा पशुषु २२४, २२६, २२६
याः पुरस्तात् ६६
यानि घर्मे कपालानि० युङ्क्ताम १६२, १६५, १६६
यानि घर्मे कपालानि० विमुंचताम् २२७
यास्ते राके ३०३
युक्तं क्रियाता आशीः १६७
युनज्मित्वा २१६
येनः सपत्नाः ७७
ये सजाताः ६७
ये समानाः ६७
यो निनयति ३०६
यो भूतानामधिपती २८३, २६४
यो वा अत्य पशुम् २७३
यो मेऽन्ति दूरे २६८, २७१

या वा अत्य पशुम् २४३
रक्षसां भागो सि १७४
राकामहम् ३०३
रुद्रास्त्वा परिगृह्णन्तु १८२, १९२
रुद्रेभ्यस्त्वा २८९, २९४
रोहितेन त्वाग्निः २९५
वधान देवसवितः १८१
वर्षन्तु ते द्यौः १८०, १८१, १९२
वर्षवृद्धमसि ८२, ११३, १४४, १५१, १५८
वर्षांऋतूनाम् २९२
वसन्तमृतूनां प्रीणामि २९२
वसवस्त्वा परिगृह्णन्तु १८२, १९६
वसुभ्यस्त्वा २८६, २९६
वसूनां रुद्राणामादित्यानाम् २१६, २२०
वसूनां पवित्रमसि १०१, १०२, १५२
वागस्यैन्द्री २४८
वाङ्म आसन् २८०
वाचं प्राणं मा १९५
वाजस्य मा २८५, २९३
वायव स्थोपायवस्थ ५१, ७५, ११३
वायुरसि तिग्मतेजाः १७९
वायुर्वो विविनक्तु १४५, १५१
वायोव्रतपते १९८
वि ते मुंचामि २९५
वियन्तु वयः २८७, २९४
विशो यन्त्रे स्थः २१६, २१९, २२०
विष्णुस्त्वा क्रमताम् १२५
विष्णूनि स्थ वैष्णव्यानि २१७, २२०
विष्णोः क्रमोऽसि १२३, १३९
विष्णोः शं योरहम् २९६
विष्णोः स्तूपोऽसि २१३, २१८
विष्णोः स्थानमसि २३९, २४७
विष्णो हव्यं रक्षस्व ११०, ११३
वीतिहोत्रं त्वाकवे २१५, २१९
वीरं मे पितरो दत्त ९७
वेदिरसि २१०, २१८
वेदेन वेदिं विविदुः १७८, १९५
वेदो सि वित्तिरसि ३१२
वेषाय त्वा १२२, १२३, १३४, १३८
वैश्वानरे हविरिदं जुहोमि २५९
व्रजं गच्छ गोस्थानम् १८०, १८१, १९२
व्रतानां व्रतपते ७८५
शरदमृतूनाम् २९२
शुक्रं त्वा शुक्रायाम् २०४, २०८
शुक्रमसि २०३, २१८
शुन्धध्वं दैव्याय १०१, ११०, १३९
शृतमुत्स्नाति २२४
संस्रावभागाः स्थेषा २९३, २१६
सकृदाच्छिन्नं बर्हिः ९६
स त्व मग्ने ३०८
स वे मा स्थात् ३१४
सदसि सन्मेभूयाः ३११
समङ्क्तां बर्हिर्हविषा ३०८, ३१३
समापो अद्भिः १९८, १९१
समायुषा संप्रजया ३०६, ३१३
समिद्धो अग्निराहुतः २४७
समुद्रं वः प्रहिणोमि ३१४
सं पत्नी पत्या ३०२
सं पृच्यध्वमृतावरीः १०८, १९१
सं ब्रह्मणा पृच्यस्व १७४, १९१
सर्ववेदसे वा २७८
सहस्रवल्शा वि वयं रुहेम ८३
स ते मा स्थात् ८७, ९४
सा विश्वकर्मा १०५, ११३
सा विश्वव्यचा १०५, ११२
सा विश्वायुः १०५, ११२
सुवर्णस्य त्वा गरुत्मतः २८०

सिनीवालि ३०३
सुप्रजसस्त्वा वयम् १९८, २०८
सुवरभि वि ख्येषम् १३३, १३५
सुसंभृता त्वा ८६
सुरूप वर्ष वर्हे २७९
सूर्य ज्योतिर्विभाहि २२२, २२९
सूर्यस्त्वा चक्षुषा २८०
सूर्यस्त्वा पुरस्तात् २१५, २१६
सोमस्याहं देवयज्यया २९५, ३१२
सोमाय पितृपीताय ३१२
सोमेन त्वा १०८, ११२, ११३
स्फात्यै त्वा नारात्यै १३२, १५०, १३५, १५६
स्योनं ते सदनम् २२१, २२९
स्योनो मे सीद २२८, २३०
स्वगा दैव्या होतृभ्यः २९१, २९५
स्वधा पितृभ्य ऊर्भव २११, २१९
हुतस्तोको हुतो द्रप्सः १०३, ११२, ११३
हेमन्तशिशिरौ २९३


• • •

परिशिष्टम् ३

# पदानुक्रमणिका

अत्र प्रायशः सायणाचार्येण व्याख्यातानि पदान्येव संगृहीतानि।


अंहीयसी १८५
अक्षपालिम् १२४
अक्षरशब्दः २४६
अग्निष्ठम् ७६
अग्रहः १२५
अंगुलिशब्दः २५२
अंगुली २५२
अंगुष्ठपर्व २५२
अंजलिः २३८
अणूनि १५६
अतिपातः २१५
अतिहाय १७१
अधिकरणम् १६५
अधिकरणशब्दः ५८
अधिवदते १५४
अधिवर्तयति १६१
अध्यूहति १६१, १५४
अनः ७६, २७७
अनतिपातयेत् २१५
अन्तर्वेदि १८६
अनाश्यान्नः २४५
अनीकसंस्पृष्टान् २१५
अनुग्रहार्थान् ६०
अनुदिशम् २५०
अनुपरिप्लाव्य १६६
अनुपूर्वाः २१७
अनुप्रहर २६१
अनुमन्त्रणम् ७६
अनुष्ठेयं कर्म ५४
अनुसामिधेनि ६०
अनुपश्लिष्यति २४५
अन्नम् २७१
अन्नाद्यम् ६२
अन्वपः २७२
अन्वाधिः २७७
अन्वाहार्यशब्दः २७३
अपरिमिता १८४
अपवर्गः ११५
अपाननम् २७६
अपान्य २७४
अपिशितम् ९२
अपिसृजति २१३

| | | | |
|---|---|---|---|
| अप्रक्रान्तम् | ११६ | आज्यधर्माः | ५८ |
| अप्रज्ञातबन्धुः | २४३ | आज्यवतीभ्याम् | २०४ |
| अप्रदक्षिणमावृत्तिः | १२१ | आत्मा | ८३ |
| अब्लिगाभिः | ६६ | आदहनाग्निः | १६० |
| अभि | २५० | आध्वर्यवः | २२७ |
| अभिक्रामम् | ८५० | आनयनम् | १०४ |
| अभिधारणम् | २५४ | आनीयमाने | १०७ |
| अभिधारयति | २२२ | आपः | १६३ |
| अभिमन्त्रणम् | ७९, २३० | आप्यस्य | १८६ |
| अभिमर्शनम् | ७९, २५३ | आप्रतिष्ठायै | १८५ |
| अभिसृतौ | २३७ | आरम्भः | ७० |
| अभ्यूहः | १९५ | आम्बौः | २९८ |
| अमुतः | २४७ | इडोपहवनम् | २६७ |
| अयाज्यशब्दः | २४५ | इध्मशब्दः | ८९ |
| अयुजः | ८४ | इयतो भवन्ति | ९० |
| अर्हताम् | ५२ | ईषत्प्रत्यवहृतम् | २१७ |
| अवगृह्णीयात् | २१७ | उच्चै शब्दः | ३०० |
| अवग्राहः | १३९ | उत्तराम् | २१७ |
| अवद्यति | २२९ | उत्तरा ततिः | ५६ |
| अवदानानि | २६७ | उत्तरार्धपूर्वार्धे | २५१ |
| अवहन्त्री | १८५ | उत्पवनम् | २०३ |
| अश्वतरः | २७६ | उत्पुनाति | १३६ |
| अश्वपर्शुम् | ७९ | उत्पयच्छति | १९१, २०४ |
| असमाप्ते | १०९ | उदगूहति | ८६ |
| असिदः | ७९ | उदगृह्णीयात् | १८१ |
| आख्यातम् | ११८ | उदग्रहणम् | २४० |
| आचार्ययोः | १५ | उद्यौति | २८८ |
| आच्छेदनानि | ८३ | उद्वपति | १४४ |

उद्वासनम् २२४
उन्मह्यन् १३६
उ मार्ष्टि ८२
उपचारः ११५
उपधानानि १६५
उपाश्रिः १९१
उपयम्य १६८
उपरीव ११०, १२८
उपलब्धिमत् २३२
उपवसथशब्दः ७२
उपवेषार्थ ९६
उपसृष्टा १०३
उपस्थानम् २५१
उपहूय १६८
उपांशु २३२
उरोरस्थि ८२
ऊर्ध्वाग्रः ९२
ऊहः ९०
ऋक्षम् १५३
ऋजुम् २४०
एकचरुः १६०
एकहविः १७०
एति १४१, ८८, १३३
एत्य ८८, १३३
ओदनम् २७३
ओषधयः ५८
औषधस्यान्तं कृत्वा १३२
कल्पः ५०
कालशब्दः १६०
किशारु १२४
कुम्बा १५४
कूर्मप्रकारम् १७०
कोशीधान्यम् ६१
कोष्ठः १३३
क्रमित्वा १२४
गोपतिशब्दः ७६
ग्रामन्यायम् ५३
चतुर्थशब्दः १८६
चतुष्टयेन ५३
चमसम् २१७
चरुमुखेषु १६४
जघनशब्दः १६७
ततिः ५६
तथापवर्गः ११५
तन्त्रम् २११
तन्वहवम् १७०
तल्पशब्दः २७१
तान्त्रीणाम् १७७
तीर्थशब्दवाच्यम् ६८
त्रिवृत्तम् ९२
दक्षिणा २७६
दशहोता १२५
दर्भशब्दः ८६
देवशब्दः २५४
दोहः १४७
दोह्यमानाम् १०३

| | | | |
|---|---|---|---|
| दैवतम् | २५६ | पार्ष्णिः | १८५ |
| धातुशब्दः | २१६, ३०९ | पितृभ्यो दत्वा | ७६ |
| धुरम् | १२३ | पिषन्ति | १५५ |
| ध्वानैः | ३००, २३२ | पिस्थ्यान् | ६० |
| नात्यग्रम् | २८८ | पिष्टसंयवनीयाः | १६३ |
| निमदः | २३२ | पुनराहारम् | २०३ |
| निरुप्तान् | १३६ | पुरोडाशीयाः | १२४ |
| निरूहति | १८५ | पूर्वा | ५६ |
| निर्णिज्य | २६० | पूर्वाः आहुतीः अतिहाय | २५८ |
| निस्तिष्ठन्ति | १८१ | पूर्वार्घ्यम् | १६१ |
| निहन्ति | १८६ | पृथगधिकरणानि | ५८ |
| नेदीयान् | ६९ | पृष्ठ्या | ११६ |
| न्यक्करणम् | २८६ | पौरोडाशिकाः | २०६ |
| पंचतयः | ५० | प्रउगे | १२४ |
| पच्छः | १३८ | प्रकृतिः | ५७ |
| पयोधर्माः | ५८ | प्रक्रमयेत् | ११६ |
| पराचः | २४३ | प्रक्रान्तम् | ११६ |
| परापुनाति | १४४ | प्रणयन् | १२२ |
| परिभोजनीयानि | ८६ | प्रणेष्यत्सु | ६१ |
| परिश्रिते | ३०२ | प्रतिपत् | १२८ |
| परिहरिष्यन् | २६२ | प्रतिपाद्य | ६२ |
| परिहृत्य | १०० | प्रतिमन्त्रणम् | १६८ |
| पर्यग्निकरणम् | १७३ | प्रतिमुखम् | २५१ |
| पल्वम् | १४१ | प्रतिशृणाति | २८८ |
| पशुधर्माः | ५८ | प्रतीचीनम् | १७५ |
| पाकयज्ञाः | ५४ | प्रतिचीम् | १८६ |
| पात्रीसंक्षालनम् | १७५ | प्रतीचः | २८४ |
| पारक्षुद्रसंज्ञा | १७१ | प्रतीयात् | ५३ |

प्रत्यगाशीः ८३
प्रत्ययः ५२
प्रत्यस्यति २८८
प्रत्यासत्तिः ८६
प्रथयति १७०
प्रदक्षिणमावृत्तिः १२२
प्रदास्यन् २३९
प्रबाहुक् २५२
प्ररुज्य २६७
प्रवरः २४१
प्रष्ठीः २५४
प्रसवः २४६
प्रसुतः १८६
प्रसूतः १२१
प्रस्तरं कृत्वा ८४
प्रस्थाने २९२
प्राचीनपुष्करयोः २८६
प्राचीम् १५४, १८४
प्राजापत्यम् २३७
प्रांचम् २८८
प्राशित्रं परिहरन्ति २७२
फलीकरणम् १४३
फाल्गुनानि ५३
ब्रह्म १३८
भक्षशब्दः १६४
मध्यमम् २३२
मध्यशब्दः २२८
मनसा २३६
मन्द्रम् २३२
मार्जनम् २७२
मिथ्याचरणम् २४५
मुख्यस्य २५३
मृतकार्यः ९२
मूर्छयिष्यन् १०८
यक्ष्यमाणः ५९
यज्ञनाम २९६
यज्ञसमृद्धिशब्दः ३०८
यथाम्नायम् १९४
यथायतनम् २४१, २९०
यथार्थम् ११८
यथासन्नानि १८५
यथोत्पन्नम् १११
यथोपपादम् १४१
यद्देवत्यः २२३
यन्त्रलोपः ७४
याजमानमन्त्राः १२७
याजमानः २०५
याजुषात् ८७
याप्यस् २४५
योगः १९२, १९४, २२१
योयूप्यते १८६
रथशब्दः १८५
वत्सज्ञुः ९२
वरणम् २४२
वाजनम् २३१
वाजवती २८५

| | | | |
|---|---|---|---|
| वान्त्यश्रवशाश्वयुक्षु | २६८ | संस्थिते | ६८ |
| विकृतिः | ५६ | संस्पृश्य | १९५ |
| विदर्शयति | २२२ | संग्रहः | १२४ |
| वियौति | २५८ | संक्षालनम् | १०८ |
| विरजसम् | २२२ | संख्याय | २२७ |
| विवेकः | १४५ | सन्तर्पणम् | २२४ |
| विशयः | १७८ | सन्नततरा | १८५ |
| विशारुकः | ८१ | संनखमात्रः | ८६ |
| विष्णुक्रमशब्दः | ३१० | संनह्यति | १६९ |
| विसंस्थिते | ६८, १२७ | समानत्र | २५० |
| विह्व्याः | ७१ | समानोपस्थानः | २५६ |
| वेदेन | २२२ | समानि | १२२ |
| व्रततिः | ६१ | समारम्भः | ५३ |
| व्रतोपायनम् | ६१ | समिध्यमानः | २३४ |
| व्यभिमृशेत् | १६६ | सम्परिगृह्य | २२७ |
| व्यवेत्य | ११६ | सम्प्रलोपः | ३०६ |
| व्यावृत्य | २७६ | सम्प्रसार्य | १०० |
| व्यूहनम् | २८५ | सर्वेण कर्मणा | १०३ |
| शीर्षन् | ८८ | सांनाय्यधर्माः | ५९ |
| श्लक्ष्णकः | ९१ | सिचम् | ६६ |
| ष्ठात्यै | २६८ | सिद्धिः | ५३ |
| संयमनम् | १६६ | सीता | १८५ |
| संयुक्तौ | २६४ | सुरभिमत्या | ६७ |
| संयुत्य | १६६ | सूक्तवाकशब्दः | २८८ |
| संवपति | १६७ | सोमयज्ञाः | ५४ |
| संश्यति | १७६ | सोमधर्माः | ५१ |
| संसिक्षनं | २३६ | स्तब्ध्वा | १८६ |
| संस्था | ५१ | स्तम्बः | ८१ |

| | | | |
|---|---|---|---|
| स्तम्बयजुर्हरणम् | १८२ | स्वस्तिशब्दः | २९८ |
| स्थविमत् | ९९ | स्वाप्वोः | २९७ |
| स्थानम् | २१९ | हविः शब्देन | ३११ |
| स्रुचौ | २४१ | हविरातंचनम् | ५६ |
| स्वगा | २९२ | हविर्यज्ञाः | ५५ |


●●●

परिशिष्टम् ४

# ग्रन्थानुक्रमणिका

अत्र भाष्ये निर्दिष्टानां बौधायनश्रौतसूत्रेतराणां ग्रन्थानामनुक्रमणी दीयते ।


उक्तम् १३७, १७१, १८४, १९९, २२१

उक्तं भवति ९९

कल्पसारे १३२, १३९, १४३, १४६, २०२, २५६

कात्यायनीयसूत्रभाष्यादिषु ३०४

गृह्ये ५४

तच्छेषे ९०

तद्भाष्ये ६३

तद्भाष्यम् २०६

तलवकारकल्पे २००

धर्मशास्त्रात् ८३

धर्मे ६६, ६७, ६८, ७४, ८२, ११५, ११९, १२२, २४४

परिभाषायाम् ६५, ६८

बह्वृचब्राह्मणम् २०१

ब्राह्मणद्वयम् १७१

ब्राह्मणम् ६०, ६१, ७४, १२९, १४२, १७०, १७३, २०३

ब्राह्मणात् १०५

ब्राह्मणानुसारेण २५०

ब्राह्मणे ८५, १०४, १४६, १७१, १८३, २९१

भाष्यस्य ६४

भाष्ये १८८

शाखान्तरे २२२

श्रीरामस्वामिव्याख्याने ६३

श्रुतिः २३४

श्रुत्यन्तरम् २३४

सूत्रम् ९०, १३९, १४५, १५३, १६९, १७१, १७५, १८१, १८२, १८४, १८७, २०९, २२८, २३३, २३८, २४०, २५०, २६०, २६९, २७०, २७२, २७३, २७४, २७८,

२८५, २८७, २९२, २९८,
३०६, ३१० इत्यादि
सूत्रोक्ताः २१३
सूत्रोक्तेः १७३, १८८, २८८
स्मरणात् २३२
स्वशाखायाम् १३०
स्वाध्यायब्राह्मणे २१२
होत्रशेषप्रश्ने २५१
हौत्रशेषप्रश्ने २३२, २३३, २४३,
२४६, २७४, ३०३

●●●

परिशिष्टम् ५

# ग्रन्थकारानुक्रमणिका

अत्र भाष्ये निर्दिष्टानां ग्रन्थकाराणां सूची दीयते। अनुक्रमणिकायामेतस्यां बौधायनश्रौतसूत्रे बहुत्रोल्लिखिता आचार्या नैव निर्दिष्टाः।


अभियुक्ताः ९३, ११७, २०५, ३००
अभियुक्ततरैरन्यै रुद्रदत्तादिभिः ६४
आपस्तम्बः ५२
आश्वलायनः १२०, १४८, १७३, २००, २७०, २७२
कल्पान्तकारैः २००
कात्यः १८८
कात्यायनः १८५
गोपालः ६२, ७२, १७४, १८९, १९८, २५०, २७१
गोपालेन ६९
जैमिनिः २००
दामोदरः १३४, १९६, २२३
दामोदरस्वामिना २३६
पूर्वव्याख्यातृभिः ४९
भट्टपादैः १८८
भरद्वाजः ६०
भवकेशवाभ्याम् ३००
भारद्वाजः १४४, १५६, १७४, १८५, १८८
मन्वादीनाम् ५३
मीमांसकैः ११५ ११६
रुद्रदत्तेन ६५
लौगाक्षिः १५६
श्रीरामस्वामी २०६, २०७
सत्याषाढः २२५, २२६
सत्याषाढभरद्वाजौ २९०
सूत्रव्याख्यातृभिः १९६, २०६, ३०५


●●●

व्याख्यातं सायणाचार्यैः सूत्रं बौधायनस्य यत् ।
सम्पादितं विनीतेन रूपनारायणेन तत् ॥
विपश्चितां विनोदाय यज्ञसन्ततिसिद्धये ।
अर्प्यते स्वेष्टदेवाय श्रद्धया नूतनश्रिये ॥